# पुराणागमदृष्ट्या नैमिषेलिङ्गधारिणी

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
विद्यावारिधिः (पी-एच० डी०) इत्युपाधये प्रस्तुतः

**शोध-प्रबन्धः**




निर्देशकः
**आचार्य डॉ० महाप्रभुलालगोस्वामी**
राष्ट्रपति सम्मानितः
संकायाध्यक्षचरः, दर्शन विभाग, वाराणसी
बी. ३४/१४० ए, शुकुलपुरा, वाराणसी

अनुसंधाता :
**अम्बिका प्रसाद त्रिपाठी**
नैमिषारण्य, सीतापुर



**संपूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी**

सं० २०४९ सन् १९९२

# पुराणागमदृष्ट्या नैमिषेलिङ्गधारिणी

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य
विद्यावारिधिः (पी-एच० डी०) इत्युपाधये प्रस्तुतः

**शोध-प्रबन्धः**






निर्देशकः
**आचार्य डॉ० महाप्रभुलालगोस्वामी**
राष्ट्रपति सम्मानितः
संकायाध्यक्षचरः, दर्शन विभाग, वाराणसी
बी. ३४/१४० ए, शुकुलपुरा, वाराणसी

अनुसंधाता :
**अम्बिका प्रसाद त्रिपाठी**
नैमिषारण्य, सीतापुर



**संपूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी**

सं० २०४९ सन् १९९२

## प्रमाण-पत्र

सम्पूर्णानन्द संस्कृत विश्वविद्यालयीय विद्यावारिधयुपाधि-प्राप्तये पुराणागमादिदृष्ट्या नैमिषेलिंग धारिणी इति विषय-माश्रित्य श्रीयुतः अम्बिका प्रसाद त्रिपाठी मन्निर्देशेऽमुं शोध-प्रबन्धं प्रस्तुतवान् । अस्मिन् शोधे महता श्रमेण नव्यानां तथ्यानामा-विष्कृतिं सिद्धान्तानां च परिशीलनं कृतवान् । अस्य शोध प्रबन्धस्य विषयोभाषा शैली च सार्वथैव परीक्षणाय परीक्षकाणां पुरस्ताद-प्रेषयति ।

डा० महाप्रभुलाल गोस्वामी
निर्देशकः
आचार्यचरोऽध्यक्षचरश्च,
दर्शन विभागस्य,
सम्पूर्णानन्द संस्कृत विश्वविद्यालये ।

## मंगलाचरणम्

सृष्ट्वाखिलं जगदिदं सदसत्स्वरूपं ।
शक्त्या स्वया त्रिगुणया परिपाति विश्वम् ।।
संहृत्य कल्पसमये रमते तथैका
तां सर्वविश्व जननीं मनसा स्मरामि ।।

या भगवती सदसत्स्वरूपमखिलेदं जगत् निर्माय(सृष्ट्वा) सत्वरजस्तमेति त्रिगुणया स्वशक्त्या (रचनापालनसंहारात्मिकया) विश्वं परिपालितया कल्पान्तकाले जगत् संहृत्य एकाकिनी(निर्गुणा) रमते विहरति वा तां सृष्टिस्थितिलयादि गुणसम्पन्नां विश्व-जनन समर्थां लोकमातरम्, आदौ विघ्न विघाताय स्वरचितशोध-ग्रन्थस्य निर्विघ्नतया परिपूर्णं हेतवे मनसा संकल्प भावेन स्मरामि ।।

## आत्मनिवेदनम्

पुराण प्रकाशिनी नैमिष भूमिरेव मम पुराणाध्ययन विषये प्रेरयित्री । यस्मिन् भूमौ उत्तमत्रिपाठिकुले नैमिष नगरे च ममोत्पत्ति र्भवम् ।

"जननी जन्मभूमिश्च स्वर्गादपि गरीयसी" इति वचनेन तथा मातु श्री उमादेव्या प्रेरणया बाल्यकालादेव पुराण विषये ममाभिरुचिरासीत् ।

दैववशात् मम प्रारम्भिकमध्ययनम् श्री ललितादेवी संस्कृत महाविद्यालय नैमिषारण्ये एव अभवत, अत: तपोपूत नैमिष-भूम्या सह भगवती पराम्बा श्री ललिताया: भक्तिरपि मम चित्ते संजाता ।

अहरह: चण्डीपाठमकुर्वत: मया देव्याकवचप्रसङ्गे-"हृदयेललिता देवीति" पाठमनित्यैव पठामि । पुनश्च श्रीमद्देवीभागवत पुराण पारायण मध्ये सिद्धपीठ वर्णने "नैमिषेलिङ्गधारिणी" प्रयागे ललिता देवी" "सन्ताने ललिताम्बिका" इति वाक्यांचापि पठितम् तथा अमा पर्वणि नैमिषस्थ श्रीललितादेवीति प्रसिद्धे मन्दिरे पराम्बिकाया: आराधनार्थं तत्पराणां जनसम्मर्दं पश्यत: महत्-कुतूहलं जातम ।

कुतूहलमिदं यत् पुराणेषु शक्तिपीठ प्रसङ्गे नैमिषे-लिङ्गधारिणी प्रयागे ललिता देवीत्युक्तं तत्कथं अत्र नैमिषारण्ये

श्री ललितादेव्या: मन्दिरं वर्तते ? तथा च कथं सुदूरवासिन: काल काले आगत्य श्री ललिताराधानम्कुर्वन्ति ।

तन्निराशार्थं पुराणागमादि ग्रन्थान् मयावलोकितम्- तथा ज्ञातश्च यत् श्री ललिता एव लिङ्गधारिणी । इति स्वल्प- मवगच्छन् सन्देह:दूरं गत: । परन्तु नैतादृशा: को पि ग्रन्थ: अस्माभिरवलोकित:यत्र साङ्गोपाङ्गम् एतद्विषयस्य विवेचनं स्यात् नाम ।

अत: वेदागमपुराणदृष्ट्या च पूर्वोक्त विषयाणां समालोचनं मनीषिणाम् शोध तत्पराणां समीक्षकाणाम् पुरत: समुपास्थाय नाम मयैषा किन्चित्कर: प्रयास: ।

मम सौभाग्यवशादेव श्रीमन्नारीनाथ संचालित वैदिक पौराणिक अध्ययनानुसंधान संस्थाने श्री पंचम्याम्-श्री ज्ञानी महोदयेन श्री ललिता विषयक एका गोष्ठी आहूता तथा व्याख्यानावसरे भृशं प्रेरिता ।

पुनश्च अपर श्री पंचम्योत्सवे राष्ट्रपति सम्मानित: परम दार्शनिक डा० प्रभुलाल गोस्वामी महोदयस्य साक्षात्कार- ममवत मम प्रयासं विदित्वा तै सहाय्यं दत्वा स्वीय निर्देशने पुराणागम् दृष्ट्या नैमिषे लिङ्गधारिणी इति विषये शोध- सम्पादनाय ानुमति: प्रदत्त: ।अहं तु साधारण अकिंचन पुराणानु- रागी न व्याकरणदक्ष: अतएव आशास्महे यत् गुरुजना: संशोध- यिष्यन्ति मम त्रुटीन ।

श्री ललितादेव्या: मन्दिरं वर्तते ? तथा च कथं दूरदूरवासिन: काल काले आगत्य श्री ललिताराधानमकुर्वन्ति ।

तन्निराशार्थं पुराणागमादि ग्रन्थान् समावलोकितम्-तथा ज्ञातश्च यत् श्री ललिता एव लिङ्गधारिणी । इति स्वरूपमवगच्छन् सन्देह:दूरं गत: । परन्तु नैतादृशा: को पि ग्रन्थ: अस्माभिरवलोकित:यत्र साङ्गोपाङ्गम् एतद्विषयस्य विवेचनं स्यात् नाम ।

अत: वेदागमपुराणदृष्ट्या च पार्श्वित विषयाणां समालोचनं मनीषिणाम् शोध तत्पराणां समीक्षकाणाम् पुरत: समुपास्थाय नाम ममैषा किञ्चित्कर: प्रयास: ।

मम सौभाग्यवशादेव श्रीमन्नारीनाथ संचालित वैदिक पौराणिक अध्ययनानुसंधान संस्थाने श्री पंचम्याम्-श्री शास्त्री महोदयेन श्री ललिता विषयक एका गोष्ठी आहूता तथा व्याख्यानावसरे भृशं प्रेरिता ।

पुनश्च अपर श्री पंचम्योत्सवे राष्ट्रपति सम्मानित: परम दार्शनिक डा० प्रभुलाल गोस्वामी महोदयस्य साक्षात्कार-ममवत मम प्रयासं विदित्वा तैः सहाय्यं दत्वा स्वीय निर्देशने पुराणागम् दृष्ट्या नैमिषे लिङ्गधारिणी इति विषये शोध-सम्पादनायानुमति: प्रदत्त: ।अहं तु साधारण अकिंचन पुराणानु-रागी न व्याकरणदक्ष: अतएव आशास्महे यत् गुरुजना: संशोध-यिष्यन्ति मम त्रुटीन ।

## विषयानुक्रमणिका

सप्तम कणिका –



अष्टम कणिका –

उपनिषदि वाक्ये प्रतिपादितं यथा[1]-

'एको वर्णो बहुधा शक्तियोगात् वर्णाननेकान्
निहितार्थो दधाति'

व्यक्ताव्यक्तस्वरूपिणी त्रिगुणा एषा अजाप्युक्ता । अव्यक्तान्तर्गतम् ब्रह्म जीवात्मना सह काष्ठान्तर्गताग्निरिव निवसति ।

यथा काष्ठान्तर्गताग्निः अदृश्या (अलिङ्गी)तथापि तल्लिङ्गस्य स्वरूपस्य वा अविनाशमिति च निर्दिष्टम् ।

एवम् ब्रह्म चापि प्रकृति गर्भे नुवसन्: अलिङ्गी तदपि तल्लिङ्गस्य नाशं न जायते ।अपि तु सर्वव्यापी अनुभवति । आदौ ब्रह्म एव ज्योतिर्लिङ्गाभिधं ।तथा तस्य प्रकृतिः- अचितर्या तस्य भासिका । एषा ब्रह्मज्योतिप्रकाशिनी विमर्शरूपा शक्तिरेव लिङ्गधारिणी इत्युक्ता । इयमेव आद्या विद्या परेति नामाभिहिता ( एषा पूर्णा प्रकृतिः पूर्णेशी षोडशी ललिता त्रिपुरेशी कामेशी इत्यादि सहस्रसंज्ञा संज्ञिता च ।

निखिल ब्रह्माण्डाधारः यो निर्विशेष शुद्धतत्त्वः सः एव पुंस्त्व दृष्टौ चित् तथा स्त्रीभावे चितिश्चाप्युक्तम् । मायाप्रति-बिम्बित् तत्त्वस्य यदा पुम्भावे उपासना भवति- तदा सः शिव

---

१- श्वेता० उ० ४।१

ईश विष्ण्वादि नाम्ना उक्त: तथा च यदा स्त्री भावे जननीरूपे उपासित: तदा ईश्वरी दुर्गा भगवती ललितादि नामाभिध: ।

स्वमनकिंचिदपि भेद: स्त्री-पुम्भावे उक्तंचापि-

त्वं[1] स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी इति ।

ऊर्णनाभिर्यथा स्वप्रकटित तन्तु जालेन स्वमाच्छादयति तथैव एष अचिन्त्या शक्त्या परमेश्वर:[2] स्वोत्पन्न विविध-कार्यैर्भ्यो स्वभावेन स्वमाच्छादयति च ।

जलसन्निहिताग्निरिव लोकप्रकाशक: परमेश्वर: प्रकृति-गर्भे निवसति[3] ।

लिङ्ग ब्रह्म एव महदहंकार पृथिव्यादिरूपे ब्रह्माण्डे कर्मज्ञानार्थविभासके सत्य निखिलोपाधि रहितं अद्वितीयं समस्त शक्तियुक्तम् आद्यन्तरहितं शुद्धपवित्रं शान्तंनिर्गुणमवर्णनीयम् चैतन्य-रूपं परं ब्रह्मेति निगदितं । एष एव यदा स्वप्रकृति नाम्ना शक्त्या-श्रयेण गर्भेण वा लोकानुत्पादयति तथाचान्तर्यामिस्वरूपे तास्वनु-प्रविष्ट: ब्रह्माद जीवानाम् बुद्ध्येन्द्रियाणि नियोजयति तदा स:

---

१- श्वेताश्वतर उ० ५।१०।

२- श्वेता०उ० ६।११-१२

३- श्वेता०उ० ६।१५

ईश्वर: । तथा यदेदं चैतन्यम् ब्रह्मविष्णुशिवादि नामरूपाणाम्, मिथ्यादेहाभिमान योक्तान् आविष्करोति तदा स जीव: इत्युक्त: ।

निरासक्त ब्रह्म एव चिच्छिक्त आत्मिमाणे कुशला समर्था वा प्रकृतिमर्मेण विविधि नामरूपेषु आविर्भवति ।

एषा या विश्वबीजप्रकाशिनी भगवती शक्तिरेव पुराणेषु लिङ्गधारिणीत्युक्ता ।

लयनात् लिङ्गमित्याहु: [१] इति वचनात तथा - लिङ्गानि [२] सर्वजीवानाम् स्व शरीरे निवेश्य च इत्युक्त्याभगवती आद्या शक्ति भुवनेशी तुर्यातीत भावे लिङ्गधारिणीति निगदिता ।

एषाशक्तिरेव ब्रह्मण: श्रीरूपा भाति । तथा चैषा प्रभाव प्रलयादि कार्येण सृष्टिचक्रम् संचालयति- नेमिस्वरूपेण तं चक्रम् परिपालयति धारयति वा । इयमेव श्रीचक्रब्रह्मनेम्य- धर्मचक्ररूपिणी च । ब्रह्मण: निमेषेण नेमिरूपा एषा शोर्णेति अत: नैमिष तीर्थ एव अस्या: गुह्यस्थलोपीठ विशेषेति निगदित: तदुक्तं नैमिषे लिङ्गधारिणीति च ।

---

१- उद्भाति स्थितिमाप्नोति तथा विलयमेति च ।
तल्लिङ्गं लिङ्गमित्याहु: लयनात् तत्वचिन्तका: ।।
(स्कन्दपुराण प्रथमकेदारखण्ड ७।२४)

२- श्रीमद्देवीभागवतपुराण ।

अस्मिन् शोधप्रबन्धे अष्टकण्डिका सन्ति ।

प्रथमकण्डिकायाम् - शक्त्या विभिन्न वेद पुराणादि दृष्ट्या संक्षिप्त परिचयः ।सृष्टिस्थितिलयादिषु आद्यायाः शक्तेः स्थानम् । महाभागवत दिशा आद्यायाः परिचयः ।

द्वितीय कण्डिका- कालशक्तेः विभिन्न पुराणादि-दृष्ट्या,दर्शन दृष्ट्या,तांत्रिक दृष्ट्या च परिचयः,तौलनिकमध्ययनम् । नैमिषे कालशक्त्यात्मिकाया आद्याशक्तेः आविर्भावः । शक्ति-चक्रस्य श्रमणोमय चक्रस्य स्वरूपम् तत्र वेद दृष्टिः विभिन्न दर्शनदृष्टिः तंत्रदृष्टिश्च ।

तृतीयकण्डिका- प्रकृतिपुरुषयोः शक्तिब्रह्मणोरैक्यम् अन्योन्याश्रितत्व प्रदर्शनम् ।

पुरातात्त्विकदृष्ट्या भित्तिचित्रैः मूर्तिकलादृष्ट्याशिला-लेखादिभिश्च मिथुनीकृतभाव समर्थनम् ।

शक्तिसिद्धपीठानां संक्षिप्त परिचयः ।

चतुर्थकण्डिका- जगद्योनि भूतापरात्मिकायाः शक्ते-र्लिङ्गस्वरूपनिरूपणोत्पत्ति प्रकार प्रदर्शनम् ।

शक्त्या आत्मगर्भस्थलिङ्गानां प्रकाशनम् ।

लिङ्गशब्दस्य वेदपुराणादिदृष्ट्या स्वरूप निरूपणम् । देवीपुराणदृष्ट्या शिवपुराणदृष्ट्या, लिङ्गपुराणदृष्ट्या, स्कन्द-पुराणदृष्ट्या न्यायव्याकरण दृष्ट्या योगागम दृष्ट्या च ।

नैमिषे लिङ्गधारिण्या विमर्श: ।

नैमिष नाम कारणाशय: ।नैमिषस्य महत्वं ।

पंचम कणिका- लिङ्गधारिण्या पराशक्त्या अभेदवर्णनम् । ललिताशय: ।विभिन्न पुराणादि दृष्ट्या ललितोत्पत्ति: आगम दृष्ट्या ललिता आविर्भाव: ।

षष्ठकणिका- कुण्डलिनी शक्ति परिचय: । ललिताया कुण्डलिन्या ऐक्य प्रदर्शनम् । ललितया लिङ्गधारिण्या ऐक्य प्रदर्शनम् ।

सप्तम कणिका- ललितोपासन विधि: । स्तोत्रादि पर्यालोचनम् । यंत्र प्रदर्शनम् ।

अष्टम कणिका- उपसंहार: ।

प्रथम कणिका

शक्त्या विभिन्न वेद पुराणादि दृष्ट्या संक्षिप्त परिचय:-

शक्ति शब्द: शक्लृ शक्तौ धातुना क्तिन प्रत्ययेन[1] निष्पन्नाभवति ।

व्याकरण ग्रन्थेषु 'पदपदार्थयो: सम्बन्धान्तर शक्ति:[2] वाच्य वाचक भावापरपर्याया तद्ग्राहकं चेतरेतराध्यास मूलं तच्च संकेत:' इति निरूपितम् ।

अमरकोषे-

'कायु सामर्थ्ययोश्शक्ति:[3]' शक्ति: पराक्रम प्राण: षाड्गुण्याशक्तय: स्त्रिय:' इत्युक्तम् ।

वैजयन्ती कोषे-

'शक्ति:[4] कासूर्हं लभोति लिखितम् ।

१- सिद्धान्त कौमुदी स्वादि धातु सं० १२६१
२- वैयाकरण लघुमंजूषा
३- अमरकोष
४- वैजयन्तीकोष द०का० स्त्रीलिङ्ग

अहिर्बुध्न्यसंहितायाम्-

निखिल भावानामपृथक् शक्त्य:[१] अचिन्त्या: । पदार्थान्तर शक्त्य: कार्येणैव दृश्यमाना भवन्ति न स्वरूपत: । इयम निखिल भावानाम सहचारिणी सूक्ष्मावस्था वर्तते । यद्यपि इयमेषा शक्ति: इति प्रत्यक्षीकरणे न वयं समर्था तथापि नेति वक्तुमप्यशक्य: ।

भावान्तर गता शक्त्य: न तर्क विषया । एषा शक्ति: चन्द्रे दीधितीव सर्वत्र भाति । भावाभावगतानिखिलकार्याणां कर्त्री शक्तिरेव इति ।

वेदेषु मातृस्वरूपा शक्ति:-

अनादिकालात् ऋषय: मातृस्वरूपे ईश्वराराधाना-कुर्वन्तिस्म । ऋग्वेदे अम्भृण ऋषेर्विदुषी कन्या वा परमात्मानं साक्षात्कृत्य तदभिन्ना संजाता तदनुभूतसाराता: मन्त्रा: देवी-सूक्त[२]रूपेण वर्णिता: ।

श्री सूक्ते पि[३] शक्तेर्जडचेतनस्वरूपस्य वर्णनम् कृतम् ।

---

१- अहिर्बुध्न्य संहिता ३।२-५

२- ऋग्वेद मन्त्र १०।१२०-१२५

३- ऋ० श्रीसूक्त

अन्यस्थलेऽदितिः[1] शक्तिः इत्यपि वर्णितम् । एषा अदितिः[2] सत्यनिष्ठाति महिम्नास्थेति । तेजस्विनौ ऐश्वर्य-शालिनौ मित्रावरुणौ अस्याः प्रभावात्[3] राक्षस बलनाशाय समर्थौ जातौ । एषा मित्रावरुणार्यम्णां माता सुखदात्री, धनदात्री मंगलकारिका च ।

शत्रुभ्यो रक्षणायअदितिः[4] पृथ्वीया तथा वैष्णा नमोयुता या भूमैर्वारिका । सर्वव्यापिका[5] प्रकाशमयी[6] अदितिमजेय[7] बलरक्षिकेत्युक्तं अथर्ववेदे । यजुर्वेदे[8]पिस्वरक्षणाय अदितिगुणवर्णनम् करणीयम इत्युक्तम् ।

सूर्यदेव्याः सूक्तौ शक्तेर्वृत्ती नाम वर्णनमुपलभ्यते । ऊषा[9] सूक्तौ कुमारीभाव वर्णनम तथाचात्रैव [illegible] शक्ति-गुणानां अधिष्ठात्री आकाशपुत्रीति वर्णितम् ।

---

१- ऋ० १।८९।१०

२- ऋ० ८।२५।३

३- ऋ० ८।४७।२

४- ऋ० २।२७।७

५- ऋ० १।१३।३

६- ऋ० ५।६४।६

७- ऋ० ७।४०।४

८- अथर्व० ७।४।१-२

९- यजुर्वेद २१।५

ऋग्वेदस्यपंचममण्डले[1] सूक्तानां देवता ऊषा इति चोक्तम्- अपि चैषा बुद्धिदात्रीतमोहारिणी, ऐश्वर्यशालिनी अन्नपूर्णा सर्वव्यापिनी यज्ञपूज्येति तथा पृश्निः, रात्रिः, पुरन्ध्री, धिषणा, इला विष्णुपत्नी इन्द्राणी, वरुणानी अग्नायी, रुद्राण्यादि देवीनाम् वर्णनम् शक्तेर्मातृ भावोद्देशकमेव वर्तते ।

कठोपनिषद्यपि लिखितम्-

या प्राणेन सम्भवत्यदितिर्देवतामयी गुहां प्रविश्य तिष्ठन्तीं या भूतेभिर्व्यजायत । एतद्वै तत[2] । अत्र जगज्जीवनकरी महाशक्तिः अदिति नाम्ना प्रकटिता सा ब्रह्मनिर्भिन्ना ।

श्वेताश्वतरोपनिषदि-

त्वं स्त्री त्वं पुमानसि[3] त्वं कुमार उत वा कुमारी इत्याशयेन शक्तेरेव निरूपणम् कृतम् ।

छान्दोग्योपनिषद्यपि ब्रह्मणो यैं स्त्री वाचकः । देवता शब्दस्य प्रयोगः शक्तिसामर्थ्य प्रकाशकमेव भाति ।

---

१- ऋ० ५।७९-८०

२- कठोपनिषद २।१।७

३- श्वेताश्वतर उ० ५।१०

भुवनेश्वर्युपनिषदि-

अहं ह्येषां[1] भ्रान्त्यै भ्रमरूपिणामाप्नोति भुवनाधी-
श्वरी भुवनेतीति शक्त्यादेश प्रकाशकः । तैत्तरीयैतरीय मुण्डक,
केन निरालम्बोपनिषत्सु तथा -कालीनारायणोपनिषद्य पि
शक्तेर्पीश्वरः निरूपितः अग्रे तदनुवदयामि ।

निरालम्बोपनिषदपि-

प्रकृतिः शक्तिरित्युक्तम यथा-

ब्रह्मैव स्वप्रकृतिरर्थात् शक्त्याश्रयेण लोकान् सृजति ।
या विविधविचित्र लोकरचना कार्यसमर्था सैव ब्रह्मणो बुद्धिरूपा
शक्तिः प्रकृतिरित्युच्यते[2] ।

श्रीमद्देवीभागवतपुराणे लिखितम्-

शक्तौ श शब्दः ऐश्वर्यवचन प्रकाशकः तथा च क्ति परा-
क्रम द्योतकः अतस्व ऐश्वर्य पराक्रमस्वरूपा स्वम् - ऐश्वर्यादीनाम्

---

१- भुवनेश्वरी उ०
२- निरालम्बोपनिषद २-४

धत्रा शक्तिरिति । ज्ञानैश्वर्य सम्पत्ति -समृद्धि यशोबलादि षडै-
श्वर्यसम्पन्ना परा शक्ति: भगवत्यपि उक्ता । ब्रह्मवैवर्तेऽपि एवम्
वर्णितम्[1] ।

शक्ति: प्रकृतिरप्युक्त-

प्रकृतौ प्र प्रकृष्टार्थ बोधक: तथा कृति: सृष्ट्यर्थबोधक:
वर्तते अतएव प्रकृतिशब्द:प्रकृष्ट गुणसंपन्नार्थे प्रयुक्त: । वेदेऽपि
प्रशब्द: प्रकृष्ट सत्त्वगुणार्थबोधक: तथा कृ शब्द: मध्यमरजोगुणार्थ-
बोधक: एवंच ति शब्द: तमोगुणार्थप्रकाशको भवति, अतएव
त्रिगुणप्रधाना शक्तिरियमपीयम् सृष्टिप्रधानभूतत्वात् प्रकृतिरित्युच्यते ।
इत्यपि श्रीमद्देवीभागवते ब्रह्मवैवर्ते[2] बोधितम् । अन्यापि यथा-

प्रकृतिर्नित्या एषा परब्रह्मण: सनातनीता यथाग्नौ
दाहिका चन्द्रे कमले च कमनीयता सूर्ये प्रभा निवसति तथैव परमात्मनि
प्रकृतिर्नित्या विराजति । न कदाचिदपि तद्भिन्ना भवति ।यथा
स्वर्णकार: स्वर्णाभावे तथा कुम्भकार: मृत्तिकाभावे कुण्डल घटंच
कारयितुमक्षम: तथैव परमात्मापि प्रकृतिसाहाय्येनबिना सृष्टि-
करणे क्षम: । यदाश्रयेण स: शक्तिमान् भवति सा परमात्ममाया प्रकृति:
शक्ति स्वरूपेति[3] ।

१- श्रीमद्देवीभागवतपुराण ६।२।१०-११
   ब्रह्मवैवर्तपुराण प्र०ख० २।७-११
२- श्रीमद्देवीभागवत पुराण ६।१।५-८
   ब्रह्मवैवर्त पु० कृ०ख० १।५।८
३- श्रीमद्देवीभागवतपु० ६।२।६-६

अनन्तकोटि ब्रह्माण्ड प्रपंचस्याधिष्ठानभूता सच्चिदानन्द स्वरूपा भगवती स्वाखिल जगत्वं स्पन्दं सरसतां प्रयच्छति । अस्मा-मिदं जगत तथा स्वोत्पद्यते तस्यामेव तिष्ठति । यथा दर्पणस्थेन किंचिद्व्याप्यते तदेव सच्चिदानन्द विग्रहायां महाचितौ भगवत्यां निखिलविश्वजातं विभासते ।

यथादर्पणं विना न जायते प्रतिबिम्बं सत्यपि प्रतिबिम्बे न विकृति वैलक्षण्य वा जायते बिम्बासन्निहिते पुनः तथैवावतिष्ठते । अत्र च बिम्बभूता प्रतिबिम्बभूता भगवती एव ब्रह्मात्मिकेति । तथैव अखण्डनित्यनिर्विकार महाचितौ एव प्रमातुः प्रमाणस्य प्रमेयादि विश्वस्य चोपलब्धिः संभवा । अधिष्ठानाभावाद् भास्यस्यानुपलब्धेः ।

यद्यपि शुद्धब्रह्म शिवभट्टारकौ वा स्त्रीपुम्नपुंसकेषु किमपि नास्ति तथापि नजिति भगवती अम्बा, आद्यापरादि पदैः स्त्रीवाचकशब्दैरभिलाप्या भवति ।

एवमेव तादात्म्य पुरुषः ईश्वर- ईशानादि सदृशैः पुम्बोधकैः शब्दैः, ब्रह्म ज्ञानादि शब्दपुंसकशब्दैर्व्यवह्रियते ।

वस्तुतस्तु स्त्रीपुंनपुंसकादिभावरहितोऽपि सः तत् शरीरसम्बन्धेन वस्तुसम्बन्धेनैव तदेव संबोधनविषया भवति । अत एव स स्वचिन्त्या अवक्त स्वप्रकाश सच्चिदानन्दविग्रह महाचिति-भगवती आद्यादि शब्दः स्त्री स्वरूप संबन्धादुच्यते 'शक्तिरिति' ।

मायाशक्तेराख्यात्ता एव त्रिपुरसुन्दरी-भुवनेश्वरी लिङ्गधारिणी ललिताविष्णुशिव रामकृष्णादि रूपैरभिव्यज्यते । स्थूलसूक्ष्मकारणस्वरूपात्रिपुरनिवासा सर्वाधारिणी चितिरेव त्रिपुर-सुन्दरीपदवाच्या । तस्यैव माया विशिष्टायाः शक्तेः रामकृष्णा-दयोनैके वताराः जायन्ते ।

ब्रह्मवैवर्तपुराणे ब्रह्मविष्ण्वादि निखिलस्थावर जंगमानां जननी सैषा पराशक्तिः निरूपिता[1] ।

<u>शिवपुराणे पि लिखितम्-</u>

आदौ निर्गुणं ब्रह्म परमात्मा वा सृष्टिकामनया 'एकोहं बहुस्याम्' इति संकल्प्य लीलया मूर्तिमकल्पयत् । सा मूर्तिः निखिलै-श्वर्य गुणसम्पन्ना सर्वज्ञानमयी शुभस्वरूपा सर्वव्यापिनी सर्वस्वरूपा सर्वकारिणी सर्वदर्शिनी सर्ववन्द्या सर्वाद्या सर्वप्रदायिनी सर्वसंस्कृतीनां केन्द्ररूपा आसीत् ।

---

१- त्वमेव सर्वजननी मूलप्रकृतिरीश्वरी,
त्वमेवाद्या सृष्टिविधौ स्वेच्छया त्रिगुणात्मिका
कार्यार्थे सगुणा त्वञ्च वस्तुतो निर्गुणा स्वयम्,
परब्रह्मस्वरूपा त्वं सत्या नित्या सनातनी ।।
-ब्रह्मवै०पु० २।६६।७-१०

तत्समये एकाकी भूत्वा स्वेच्छा विहार दृष्ट्या स्व-विग्रहेणैव एकास्वरूपभूता अनपायिनी शक्तिं प्राकटयत् । एषा शक्ति: प्रधानप्रकृति: माया परा त्रिगुणादि संज्ञा संज्ञिता । एषा अम्बिका शक्ति: सर्वेश्वरी त्रिदेव जननी नित्या मूलकारणा अष्टभुजाश्चापयुक्ता ।

श्रीमद्देवीभागवतेऽपि लिखितम्-

एकौ ब्रह्म एव सृष्टेऽवसरकालमधिकृत्य द्वैतभावं गृह्णाति । यथा एकौ दीप एव लघुमहदादनेक भेदेन भासयति तथा च एकाननस्य छाया दर्पण भेदेन विभिन्ना प्रतीयते तथैव अहं बुद्धिर्वसिनिभिन्ना एवैव । पुनश्च मायारूपीकार्यकारण भेदेन तस्य प्रतिबिम्बं भिन्नं भासते । सृष्टिकाले जगन्निर्माणाय भेदं प्रत्यक्षं कार्यत्व सति भेद प्रतीति उक्तम् अन्यथा युक्तम् ।

अस्मिन्संसारे अहं बुद्धिरेव व्यापिका भवति एषैव निखिल देवता मध्ये विभिन्नासंज्ञा संज्ञिता ।

---

१- यस्येत्थं संविकल्पं ते संज्ञासंज्ञोचितन: स्म वै ।
कियता चैव कालेन द्वितीयेच्छा भवत्किल ।।
अमूर्तेन स्वमूर्तिश्च तेनाकल्पि स्वलीलया ।
सर्वैश्वर्यगुणोपेता सर्वज्ञानमयी शुभा ।।
शक्तिस्तदैवतेनापि स्वैरं विहरता ततु: ।
स्वविग्रहात्स्वयं सृष्टा स्वशरीरान पायिनी ।।
-शिवपु० रु०सं०२।खं०१।अ०६ श्लोक १४-२२

एषैव शक्तिस्वरूपं गृहीत्वा कार्यकरोति गौरी,ब्राह्मी रौद्री वाराही वैष्णवी कौबेरी-नारसिंही वासवी चापरा: तत्स्वरूपाणि सन्ति[1]।

कार्यपरिस्थितिसमये तद्देव्यान्तरे स्वशक्तिम् निधाय - अहमेव सर्वव्यवस्थापयति ।

जले शीतलता-अग्नौ ऊष्णता,सूर्ये प्रभा,चन्द्रे आह्लादि-गुणा यथा युज्यते तथैव प्रभवा इति ।

अत्र ब्रह्मनिभिन्नाशक्तिरेव जगत्कारणा इत्युक्ता ।

अन्यच्चापि-

अहं पद प्रकाशिनी शक्तिरेवादौ आसीत् । नान्या वस्तुसत्ता । तत्काले तत्स्वरूपं सच्चिदानन्दमयं परम ब्रह्मैव आसीत् । तस्य रूपं अप्रतर्क्यं[2] अनिर्देश्यम अनौपम्यं अनामयं च स्वबृंहण: स्वत: सिद्धशक्ति: मायेति निगदित: । सा माया सती असतीति भेद - शून्या काचित विलक्षणा वस्तुभूता संजाता । पावकस्यौष्ण्येव ऊष्णांशो दीधितेव चन्द्रस्य चन्द्रिकेव साहचर्यभावेन जगद्वृक्ष: तस्यां सुषुप्तालीना आसन् ।

---

१- एकमेवाद्वितीयं वै ब्रह्मनित्य सनातनम् ।
द्वैतभावं पुनर्याति काल उत्पित्सु संज्ञकं ।।

--

भवामि शक्तिरूपेण करोमि च पराक्रमम् । श्रीमद्देवीभा०३।६।२-३०

२- श्रीमद्देवीभागवतपु० ७।३२।१-१८

जीवानां जीवा: काल: कर्माणि च तस्यामेव संचरे । तेनैव शक्तिसहाय्येन तदहं वाच्यस्य बीजरूपे परिणति: अभवत् । सा शक्तिरेव तत्समये तस्याधार: तस्यावरणं अतएव तस्या दोषत्वं च समागतम् ।

शक्तैव जीवात्मकं स्वरूपं कृत्वा सहाय्यनिमित्तं तथा च-परिणामे समवायिकारणमुक्तम् ।

केचित्तां तप: अन्ये तम: अन्ये जडेति कथयन्ति । शैव शास्त्र विशारदै: विमृश्य सा ज्ञानम् माया प्रधानम् प्रकृति: शक्ति: अचेत्युक्तम् ।

केचित वेदान्त चिन्तका: तामविद्या पि वदन्ति । एवं बहुविधं वेदे तस्या वर्णनम् कृतम् । शक्तौ जडता ज्ञान नाशकात्व लक्ष्यते अतएव आत्मनोत्यप्युक्तं ।चैतन्येदृश्यत्वं नहिदृश्यत्वाभावेतज्जडम् । चैतन्यं स्वप्रकाशंन परेण प्रकाशितं प्रकाशस्य प्रकाशं प्रकाशयति इत्युक्ते सति अनवस्था दोषसत्वात् एतदप्ययुक्तम् । तत्कथं सिद्धमित्युक्ते सति कर्मकर्त्रो विरोध: स्यात तस्माद्दीपवत्स्वयं प्रकाशको न्येषां भासको भवति अतएव संविदशरीरस्य नित्यत्वं सिद्धम् ।यदि चैतन्यं दृश्यमिति मन्यामहे तदा जाग्रतस्वप्न सुषुप्त्याद्यवस्थायां व्यभिचार-दोषो भविष्यति तदा संविदो व्यभिचारस्य एकत्वम् संभवम् ।

यदि संविदमनुभवसिद्धं मन्यामहे तदा सर्वदाणानुभूतमित्य-वस्थायां सादारो एव विशिष्ट: अतएव नित्यम् ।परस्य प्रेम भाजता तस्मिन् आनन्दरूपता पि भवति ।

एषा शक्तिः आदौ प्रेमात्मनि तिष्ठति अतएव चोक्तम् अहमेवासमिति ।

ब्रह्माण्डपुराणे चाप्युक्तम्-

अस्य ब्रह्माण्डस्य अव्यक्तं कारणं नित्यं सत्यमसत्यात्मतं शब्दस्पर्शादि रहितं जगद्योनिभूतं अनन्ताशेषं निर्विकारं सनातनं ब्रह्मैव वर्तते ।तत्त्वज्ञाः तं प्रधान प्रकृतिशब्दाभ्यां सम्बोधयन्ति । प्रलये एष ब्रह्माण्डः ब्रह्मण्येव लयति ।सृष्ट्यादौ तस्मादेव महत् स्वरूपे उद्भवति[१] ।तन्महत् सत्त्वभावेण सत्त्वमात्रत्वेन प्रकाशितो भवति ।

अस्मिन्काले ब्रह्म सत्तायाम् संकल्पाध्यवसायस्व द्वै शक्तीनाम् स्फुरणा भवति ।संकल्पे सति सृष्टिर्भवति । तदपुष्पकाशकः चराचरमयो यं अण्डः सप्तप्राकृतावरणैभ्यो आवृतम जातम् । प्रलये आवरण तत्त्वानि परस्परं ग्रसन्ति । पुनश्च सृष्टिकाले अवधारयन्ति च ।

शक्तिरेव ब्रह्मसहायिका यया सः निखिल ब्रह्माण्डान् करोति ।ब्रह्मणः कर्तृभावः तच्छक्तेरेवयं वर्तते सा एव भगवद् बलं सैव ब्रह्मज्योतिः येन सः जगत्करणे दायः ।शक्तिः ईश्वरादभेदाभिन्ना यथा चन्द्रे चन्द्रिका ।

१- ब्रह्माण्ड पु० पृ०भा०दिल्ली

शक्तिसहजा जगदभिव्यक्ति: । एषा निरपेक्षा अतएव आनन्दस्वरूपा । नित्या यत: कालातीता । पूर्णा यत: अरूपा । एषैव जगद् लक्षणं लक्ष्यति अतएव लक्ष्मी एषैव जगत्स्वरूपम् संकोचयति अतएव कुण्डलिनी एवम महाशक्ति: विष्णुशक्तिरपि वाच्या।

एषा शक्ति: ब्रह्मनिर्भिन्न भूत्वा पि भिन्नं भासते । अनया शक्तिसामर्थ्यादेव त्रिगुणा प्रकृति: विकसति । शक्तेपराक्रमात् प्रकृतिपुरुषयोर्सम्बन्धम् भासते । सामवेदस्य मन्त्रे "एक एव द्विधा-जात:" इत्यादिना शक्तिब्रह्मणो भेदम् निरूपितम् ।

ब्रह्मवैवर्तपुराणे पि प्रकाशितम् यत् ईश्वर: स्वं रूपम् द्वै रूपे विभक्त: तत्र स्त्री वाची विग्रह: प्रकृतिर्माया, महामाया शक्तिर्वा कथ्यते । एषा ईश्वरीशक्ति: द्विधा प्रकारया भवति । स्थावरस्या क्रियारूपा च । क्रिया शक्ति सहजा या विचार संकल्प भावे क्रियायां स्फुरति उक्तं चापि -

स्वातंत्र्यमूलभिदात्मा पेक्षारूपं क्रियाफलम्" इति ।

केनोपनिषदपि लिखितम्-

सा ब्रह्मेतिहोवाच । ब्रह्मणो वा एतद्विजये महीयध्वमिति ततो ह विदांचकार ब्रह्मेति[१] ।

---

१-केनोपनिषद् ४।१।

शिवपुराणेऽपि अहं पदवाचिनी शक्तीति निरूपिता यथा-

शक्तिरेव अहं पदवाचिनी परं ब्रह्म परं ज्योतिः
प्रणवछन्दरूपिणी सा एव साकारा निराकारा सर्वतत्त्वस्वरूपा
एवमेव पुरुषस्त्रीस्वरूपिणी उभयाकारा सर्वाकारा च देवसत्त्व-
प्रकाशिनी अहं वृत्तिस्वरूपिणी विश्वविमोहिनी शक्तिरेव ब्रह्म-
विष्णुमहेशान्तःस्थिता जगत्कार्यं करोति।

अन्यत्रापि यथा-

स्त्रीपुरुषात्मकमिदं जगत् प्रत्यक्षमाभाति। अत्र
षाट्कौशात्मके शरीरे त्रीणि मातुरंशाद् त्रीणि पितुरंशात्
इति श्रुतिवचनम्। यथा शरीरेषु स्त्रीपुम्भाव ज्ञायते तथैव पर-
मात्मन्यपि। यदत्र सच्चिदानन्दात्मकस्वरूपो परब्रह्म परमात्मेति -
निगदितम् तत्र असत्प्रपंच निवृत्तिकर्ता सच्छब्दः तथा जडजात-
निवृत्तिकर्ता चिच्छब्दः। प्रकाशवाची सच्छब्द परमात्मनि सर्व-
रूपेण भवति अतस्तु पुम्भावं सूचयति। ज्ञानशब्दस्य पर्यायो चिच्छब्दः
स्त्रीलिङ्गवाचकः भवति। चिद्रूपता तस्य स्त्रीत्वं द्योतयति।
एवम् सच्चिदानंदात्मिके परमेश्वरे जगत्कारणत्वात् शिवश्च शक्ति-
श्चेतिभावभेदः संगतः।

१- परं ब्रह्म परं ज्योतिः प्रणवछन्द रूपिणी।
अहमेवास्मि सकल मदन्योनास्ति कश्चन॥
निराकारा साकारा सर्वतत्त्वस्वरूपिणी।
अप्रतर्क्यं गुणा नित्या कार्यकारणरूपिणी॥
कदाचिदयिताकारा कदाचित्पुरुषाकृतिः।
कदाचिदुभयाकाराऽसर्वाकाराऽहमीश्वरी॥

लोके वेदे वापि परमात्मनि शिवशक्तिरूपता निरूपितम्। शिवशक्तिसंयोगादेव आनन्दं जायते।

उपनिषात्स्वपि शिवशक्तिरेव स्वात्म ब्रह्मेति निगदितम् ब्रह्मशब्देन बृंहि धात्वर्थेन व्यापकता सर्वात्मकता चैव प्रतिपादन विषया। यदा गुरु: शिष्यम्प्रति मन्त्रोपदेशं करोति तदा "सोऽहम्" पदेन तच्छक्त्यात्मकशिवस्यैव बोधमुद्दिष्टम् भवति।[1]

शब्दविभूतास्थाने शक्ति परिचय:-

अर्थरहित: न को पि शब्द: तथा च शब्दरहित: न कोप्यर्थ: एवम् कालानुसृत्य सर्वे शब्दा: सम्पूर्णार्थ बोधका: भवन्ति। प्रकृतेश्चायं परिणाम: शब्दभावना अर्थभावना भेदेन द्विधा भवति। शिवशक्तिउभयोश्चेयं प्राकृत मूर्तिरुच्यते।

एतदस्य प्राकृतमूर्तेर्विभूति: तत् त्रिधा स्थूला सूक्ष्मा पराश्चेति। कर्णप्रत्यक्षाव्यापिनी स्थूला चिन्तन ग्राहिणी सूक्ष्मा, या चिन्तनादपि परा प्रोक्ता सैव परेति।

---

- विरञ्चि: सृष्टिकर्ताहि जादाताखमुच्युत।
रुद्र: संहार कर्ताकर्तिविश्व विमोहिनी॥
-शिवपु०उ०सं० ४६।२८-३२

१- शिवपु० कै०सं० १६।२२-२६

शक्तिस्वरूपा परा प्रोक्ता एषा शिवतत्त्वाश्रिता पराशक्ति रुच्यते । एषा संपूर्णशक्तीनां समष्टिरूपा, शक्तितत्त्वाख्या-समस्त कार्याणाम् मूलप्रकृत्याख्या, कुण्डलिनी, विशुद्धाध्वपरामायाश्चेति निगदिता । एषा स्वरूपतः विभागहीना भूत्वापि षडध्वारूपेषु विसृता । एषु षडध्वाभावेषु शब्दरूपाः त्रयः तथा अर्थरूपाः त्रयः सन्ति । मन्त्राध्वा पदाध्वा वर्णाध्वा चेयमुतिस्त्रः शब्दसम्बन्धिनास्तथा भुवनाध्वा तत्त्वाध्वा कलाध्वा चेयम् अर्थसम्बन्धिना भवन्ति । सर्वेष्वपि परस्पर व्याप्यव्यापकभावः निर्दिष्टः । सर्वे मन्त्राः पदव्याप्ताः यतः वाक्यरूपिणः पदाः सर्वे वर्णव्याप्ता यतः पद वर्ण समूह कृत् । वर्णोऽपि भुवनव्याप्त्य यतः तस्योपलब्धिः तत्रैव तद् । भुवनोऽपि तत्त्वेषु बाह्याभ्यन्तर व्याप्तो यतः तदुत्पत्तिः तत्त्वगत् । कारणभूततत्त्वेभ्यो एव भुवनोद्भवः भवति ।

पराशक्तिरेव सर्वत्र व्यापिका । व्यापिका व्यापिका शक्तिः पंचतत्त्वशोधनेन जायन्ते ।

निवृत्तिकलया रुद्रलोकपर्यन्त ब्रह्माण्डस्य शोधनम्, प्रतिष्ठाकलया अव्यक्तसीमापर्यन्तशोधनम् । विद्याकलया विद्येश्वर पर्यन्तम् - शान्तिकलया तदुपरि स्थानस्य शोधनम् तथा शान्त्यातीता कलया अध्वान्तपर्यन्त शोधनमिदं पंचतत्त्वं शोधनम् । इदमेव परमव्योमम् । या शिवस्य अर्धांगचारिणी पराशक्तिः सैव निखिलैश्वर्याणाम् पराकाष्ठा तत्तुल्यधर्मा च । एतच्छक्त्या सह गृहस्थः शिवः । सा शक्तिरपि शिवगृहिणी भूत्वा तिष्ठति । इदम् साहचर्यभावमेव पुंस्त्रीभावमकल्पयत् ।

शिव: कर्ता शक्ति: कारणश्चेति स्वमुभयमेदं:[१] ।

अन्यमेन पराशक्तिर्शिवे नित्या समवेता यथा- सूर्ये प्रभा अभिन्ना तथैव चित् पराशक्ति: शिवाभिन्ना ।

शिवम् परमकारणम् तदाज्ञा शक्तिश्चेति । तया शक्त्या प्रेरिता अविनाशिनी मूल प्रकृति: कार्यभेदेन माया, महामाया, त्रिगुणेति भूत्वा षडध्वानम् प्रकाशयति ।

जगत्स्वरूपेणावस्थिता चैषा सर्वशास्त्रेष्वपि तद्भावम् विस्तरेण वर्णितम् ।

पुराणे यथा-

योऽन्त: प्रविश्य मम वाचमिमां प्रसुप्तां ।
संजीवयत्यखिलशक्तिधर: स्वधाम्ना[२] ।।

अत्र शक्तिधर: अन्त: प्रविश्य वाक्शक्तिम् संजीवयत्येति वाक्येन शक्तिशक्तिमतोरभेदं प्रदर्शितम् ।

एवं साहित्ये रघुवंशाख्य ग्रन्थे महाकविकालिदासेनाप्युक्तम् - 'वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये'

---

१- शिवपुराण वा०सं० २९ अ०गीताप्रेस
२- श्रीमद्भागवतपुराण ।

अत्रापि शिवशक्तिमयी प्राकृतमूर्तिरभिनन्दनमिष्टम् तंत्रग्रन्थेष्वपि शिवशक्त्योः[1] सधर्मिस्वरूपम् निर्दिष्टम् । संहिताग्रन्थे-[2] ष्वेवमुक्तम् ।

विभिन्न दार्शनिकानाम् मते वैविध्येन वर्णितम् शक्तिस्वरूपम् -

तद्यथा मीमांसकमते:-

"पदार्थगतेरपृथक्कार्योत्पादनोपयोगि धर्मविशेषको शक्ति:" तेषां मते सर्वभावेषु विभिन्ना शक्तय: सन्ति या: अचिन्त्या: ज्ञानगोचरा तत्कथं यथाग्नौ दाहिका, जले शीतलतादि अत्र कथं अग्नौ ऊष्णता कुत: समायाति वा इति विषये न वयं चिन्तने पि समर्था: अज्ञातविषयमिदम् । एवमेव कुसुमादि विषयका: भाव-शक्तय:[3] विविधा: । अतएव ते कथयन्ति सामर्थ्यं सर्वभावानां शक्तिरित्यभिधीयते" तेषाम् मते वेदमन्त्रै: शक्ति: संक्रान्ता भवति । शब्दशक्ति: क्रियाशक्तिश्च अनयोरङ्गाङ्गभावश्च।

---

१- शक्तिः प्रतिमा सादात् शिवेन सहधर्मिणी ।
साक्षिणी सत्य संपूर्णा निर्विकल्पा महेश्वरी ।।
-तंत्रसंग्रह अनुभव सूत्र )

२- चिन्मात्राश्रयमायाया: शक्त्याकारो द्विजोत्तम: ।
अनुप्रविष्टा या संविन्निर्विकल्पा स्वयं प्रभा ।
सदाकारा सदानन्दा संसारोच्छेदकारिणी ।
सा शिवा परमादेवी शिवाभिन्ना शिवंकरी ।।
-सूतसंहिता

३- शक्तय: सर्वभावानामचिन्त्यज्ञानगोचरा: ।
यतो लोकेषु तास्तु साक्षाद्भावशक्तय: ।।
भवन्ति तपताश्रेष्ठ पावकस्य यथोष्णता ।।

उपनिषत्स्वपि 'परास्य शक्ति: विविधैव श्रूयते'[1] इति वचनेन परमात्मनो शक्त्य: नाना विधेत्युक्तम् ।

एवमेव पुराणेष्वपि निखिलेदम् जगत् ब्रह्मण: शक्तीति[2] निगदितम् ।

लक्ष्मीतंत्राख्य ग्रन्थे पि लिखितम् परब्रह्मण:पराशक्ति: स्वात्मभूता निर्मला चन्द्रस्य चन्द्रिकेव सर्वत्र विराजति सा सनातनी शक्ति: तस्य ब्रह्मण: अहंतेत्युक्ता[3] । श्रीशंकराचार्यकृतौ[4] एषा शक्ति: विश्वसारा प्रधाना प्रपंचस्य सारस्वरूपभूता वस्तु: उक्तं यथा । प्रधानमित्यिमामाहुर्याशक्तिरिति कथ्यते । तन्मते एषा ब्राह्मी शक्ति: अविद्या रोपित नामरूपग्राहिणी सा भाति । वस्तु-तस्तु एषा न ईशस्वरूपिणी तथापि न तद भिन्ना अन्योन्या-त्मिका चेति ।

---

१- श्वेताश्वतर उ० ६-८

२- एकदेशस्थितस्याग्ने ज्योत्स्नाविस्तारिणी यथा ।
परब्रह्मण: शक्तिस्तथेदमखिलं जगत् ।।-विष्णु०पु० १।२२।५६

३- तस्य या परमा शक्तिर्ज्योत्स्नेव हिमदीधिते ।
सर्वावस्थागता देवी स्वात्मभूतानपायिनी
अहंता ब्रह्मणस्तस्य साहमस्मि सनातनी - लक्ष्मीतंत्र २।११-१२

४- प्रपंचसार १।२६

इत्थं भगवती ब्रह्मविष्णुमहेशादारभ्य देवमुनिमानवदानव पर्यन्तं सर्वं वशीकृत्य निर्धमाना पराशक्ति रूपे ति वर्तनं करोति । सौन्दर्यलहरी ग्रन्थस्य प्रारम्भे भगवत्पादेन लिखितं यत् -

शक्ति सामर्थ्यादेव आत्मरूप: शिव: संसारकार्ये समर्थ: अन्यथा स: स्पन्दरहित: । तत्र शक्ति: शिवाख्यस्य आत्मन: शरीरमित्युक्तम् । यथा शरीरं विहाय आत्मा तथात्मानं विहाय शरीरमपि नहि किंचित्क्षणमपि स्थातुं शक्यम् अतएव उभयोरन्योन्याश्रित सम्बन्धमेवास्ति ।

ब्रह्मसूत्रे पि एवं निर्दिष्टं यथा-

नहि तया बिना परमेश्वरस्य सृष्टत्वं सिद्ध्यति -
शक्तिरहितस्य प्रवृत्त्यनुपपत्ते:[1]

"श्रुतिस्मृत्यारोषणमायाशक्ति: प्रकृतिरित्युच्यते" एवं कारणात् अद्वैतवादी भूत्वा पि श्रीशंकराचार्य: महामाया आदिशक्तिं निस्संकोच भावेन ईश्वरस्थितां मत्वा जगज्जननी भावे तदुपासना समर्थक: । स्व भाष्ये लिखितवानपि "कारणस्यात्मभूता शक्ति: शक्तेश्चात्मभूतं कार्यमिति" ।

ब्रह्मसूत्रे बादरायणेनैवाप्युक्तम् "सर्वोपेता च तद्दर्शनात्"[2]

१- ब्र०सू० शा० भाष्य २।१।१४
२- ,, ,, २।१।३०

उपनिषदिचापि "त्वं स्त्री[1] त्वं पुमानसि त्वं कुमार उत वा कुमारी इत्युक्तम् ।

देवीभागवते "सर्वचैतन्यस्वरूपां आद्यां विद्यां च धीमहि बुद्धिं यान: प्रचोदयात्" इति प्रथमे मन्त्रे शक्तिरेव सर्वेषां प्रत्येक चैतन्यानां आत्मरूपा ब्रह्माख्या सापि शाश्वत् सर्वोपाधि निरपेक्षा अखण्डबोधस्वरूपा आत्मा चेति निरूपित: ।

ब्रह्मविषयकशुद्ध सत्वान्तर्मुखवृत्त्याश्रित्य या प्रतिबिम्बिता सैव अनादि विद्या । एकाशक्तिरेव अन्तर्मुखी भूत्वा विद्या तत्त्वरूपिणी भवति अपरश्च बहिर्मुखी अविद्या भवति । विद्योपाधितात्मा तुरीय अविद्योपाधिरात्मा प्राज्ञ इति च ।

<u>वेदान्तदृष्ट्या -</u>

शक्तिरूपा भावतोऽसर्वोपाधिविनिर्मुक्ता स्वप्रकाशाचितिरेव परब्रह्म आत्मादि शब्दैरुपलक्षिता । उक्तं चापि "शक्तिमयी वर्णात्मिका" ।

<u>स्कन्द पुराणे प्युक्तम्-</u>

परा तु सच्चिदानन्दरूपिणी जगदम्बिका ।
सर्वाधिष्ठानरूपास्याज्जगद्भ्रान्तिश्चिदात्मनि ।।

---

१- श्वेता०उ० ४।३

ब्रह्मवादिभिः योगिनः सर्ववेदान्ते वेदेषु निश्चितं यत् एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवमतद्देव्याः परमं पदमिति ।

ब्रह्माण्डपुराणस्य ललितोपाख्याने उक्तं "चिति-तत्पद लक्ष्यार्था चिदेकरसरूपिणी" अत्र ब्रह्मस्वरूपता बोधकवचनेन भगवत्या-मायात्त्व बोधकवचनानां विरोधोभविष्यति इति चेन्न यतः वेदान्ते मायाशक्तिम् मिथ्या निरूपितः ।तन्मिथ्यापदार्थः अधिष्ठानकल्पितः भवति ।तथा अधिष्ठान सत्तातिरिक्ता नान्या कल्पितसत्ता ।अतएव मायायाम् अधिष्ठान सत्तायाएव प्रवेश संभवः ।एवम् मायास्वरूपोपासनया सत्तारूप ब्रह्मस्यैवोपासन भवितव्या नान्यच्च ।इत्याशये माया-स्वरूपावबोधकवचनः नामविरोधः ।

ब्रह्मोपासनायां मात्र ब्रह्मणोपासना न भवति वरंच शक्ति-विशिष्टब्रह्मणोपासना भवति यतः शक्तिब्रह्मनिभिन्ना अतस्त शक्ति-रहितं मात्र ब्रह्मोपासना असंभवः ।

---

१- सर्ववेदान्तवेदेषु निश्चितं ब्रह्मवादिभिः ।
एकं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।
योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ।
परात्परतरं तत्त्वं शाश्वतं शिवमच्युतम् ।
अनन्तं प्रकृतौ लीनं देव्यास्तत्परमं पदम् ॥
शुभं निरंजन शुभं निरजनं शुद्धं निर्गुणं द्वैन्यवर्जितम् ।
आत्मोपलब्धि विषयं देव्यास्तत्परमं पदम् ।।

(कूर्मपुराण)

अधिष्ठानभूतब्रह्मणासह माया निवसति अत: मायात्व वर्णने पि फलत: ब्रह्मरूपत्वमेव सिद्धयति । अतएवोक्तम्-

पावकस्यौष्णतेवेयमुष्णांशोरिवदीधिति:
चन्द्रस्य चन्द्रिकेवेयं शिवस्यसहजाध्रुवा ।

सूतसंहिताख्यग्रन्थे पि माया शब्देन ब्रह्मणोपासनेति निरूपितम् - तथा-

नाहं सुमुखि मायाया उपास्यत्वं ब्रुवे क्वचित् ।
मायाधिष्ठान चैतन्यमुपास्यत्वेन कीर्तितम् ।।
माया शक्त्यादि शब्दाश्च विशिष्टस्यैव लक्षकात् ।
तस्मान्मायादि शब्दैस्तद् ब्रह्मैवोपास्य मुच्यते ।।

तत्र सृष्टौ-

प्रकाश एव शिव: विमर्श एव शक्ति: संहारे शिवस्य तथा च सृष्टौ शक्तेर्प्राधान्यम् वर्तते । प्रमायामिदमंशो ग्राह्यो तथा च अहमंश: ग्राहक: । अन्तर्वर्तमानानां पदार्थानाम् बाह्यस्वरूपे अवभासो भवति - उक्तंयथा- 'वर्तमानावभासानां भावानामवभासनम्
अन्त:स्थितवतामेव घटते बहिरात्मना'

प्रकृतौ सूक्ष्म स्वरूपे सर्ववस्तूनि स्थितानि सन्ति । शक्तिश्च शिवश्च उभौ शक्तिशिवौ श्लिष्टौ निवसत: । परम शिवतत्वं निस्पन्द: निषेधात्मक: शक्तितत्वंच । ज्ञानश्च अर्थश्च एव उभौ अविकल्पित-भावेन एकीभूय तिष्ठन्ति तदा साम्या वस्था जायते । उक्तं यथा -

"अभिज्ञानमपोह्यर्थ एकमेवापिकल्प्यः" इदम् सूत्रम् भगवति विषये तंत्रदृष्टेपरिचय: ।

<u>शाक्ताद्वैत दृष्टौ-</u>

अनन्तविश्वस्याधिष्ठानभूतशुद्धबोधस्वरूपं प्रकाशमेव शिवतत्वेनावबोधते । तस्मिन् प्रकाशे यो विमर्शः स शक्तिरितिमन्यते । प्रकाशेन सह विमर्शात्मिका शक्तेरस्थानं आवश्यकम् । प्रकाशेन विना विमर्शो नहि तथा च विमर्श विना प्रकाशं नहि ।

वेदान्तिनाम दृष्टौ विमर्शेन विना पि अनन्त निर्विकल्पप्रकाश: सम्भव: किन्तु शाक्ताद्वैत दृष्टौ विमर्शः सर्वदा निवसति ।

अत्र तु महावाक्यजन्य परब्रह्माकारवृत्तिरुत्पन्ने सति आवरकाज्ञानाभावे पि वृत्तिरूप विमर्श भवतीत्युक्तम् ।वेदान्तानुयायिन: इयम् वृत्तिम् स्व पर विनाशकं मन्यन्ते किन्तु शाक्ताद्वैतोलिस्मिन्सयं सिद्धे नश्यनाशकभावानामभाव: मन्यन्ते । ते कथयन्ति यदि तद्वृत्ति: विनाशाय अन्य वृत्तिं गृहणाति तदा तदा तद्विनाशाय इतरेतर अन्यान्य वृत्तिमपि स्वीकरिष्यन्ति इत्यवस्थायां अनवस्था दोषसंभव: ।

अविद्या स्वयं नष्टस्वभावा अतस्व तस्या नाशमयुक्तम् ।विरोधि कारणात् सुन्दोपसुन्दन्यायेन विद्या विधायाः नश्यनाशक भावो पि अयुक्तम् ।

उदाह्रियते यथा-कनक रज: जलान्तर्गतां मृत्तिकां विनश्य स्वयं न नश्यति तथैव चित्तवृत्ति:स्वानिरिक्तामविद्यां तथा तत्कार्य भूतंज्ञानश्च विनश्य स्वयं नश्यति । इति दृष्टान्ते कनकरजस: नाशं प्रदर्शितं किन्तु वस्तुतस्तु ज्ञात् रज सहाय्येन कनकरज: जलस्य निम्न भागे तिष्ठति अत: अत्रापि वृत्तिनाशमयुक्तम् ।

एवमेव 'विषं विषान्तरं जरयति, स्वयमेवजीर्यति पय:-पयोन्तरं जरयति स्वयमेव च जीर्यति इत्युक्तेऽपि विषम् पदम् वा न नश्यति वरंच विषस्य पयस्य वा जजीर्णता समाप्य स्वयमपि पचति, अतएव न वृत्तिनाश: ।

तेनोक्तं वृत्तिस्वरूपाविद्यया संश्लिष्ट: अनन्तप्रकाशरूपी शिव: नित्यैव विराजति । निवृत्त्यावस्थायामपि विमर्शशक्तेरस्तित्वं भवति । तत्काले सा शक्ति अन्तर्मुखी भूत्वा शिवस्वरूपे एव भाति । उक्तं शक्तिदर्शने:- 'मुक्तावन्तर्मुखैव त्वं भुवनेश्वरी तिष्ठति' एवंकारणात् शक्तिनित्येत्युक्तम् तद्यथा-

'नित्यैव सा जगन्मूर्तिस्तयासर्वमिदं ततम्'

अथ च-'नहि द्रष्टुर्दृष्टेर्विपरिलोपो भवति विनाशे०'[१] इति वचनेन वृत्तिरूपा दृष्टम् नित्यैव कथ्यन्ते ।

---

१- बृहदा०उ० ४

विमर्श प्रकाशयोः शक्तिशिवयोगे वा विन्दुनादोत्पत्ति-रभवत्। यदा तौ परस्परं मिथः संयोगौ अभवताम् तदा विन्दुनाद-स्योत्पत्तिरजायत्। इदम् संयुक्त विन्दुरेव अर्धनारीश्वरः। एतयोर्परस्परावस्थितिरेव कामः श्वेत विन्दुः पुंस्त्वबोधकः तथा रक्तविन्दुः स्त्रीत्व परिचायकः श्वेतरक्तसंयुक्तेति त्रयो योगाः तस्मात्कामकला सम्भवति। विन्दुनादश्च श्वेतरक्तविन्दोश्चैवित चतुर्णाम् सम्मेलनेन सृष्टिर्भवति। केचित्मतेन नादेन सहार्ध कलादि जायते।

कामकला देव्याः संयुक्तविन्दुः वदनः वदास्कौ अग्निचन्द्रौ अर्धकला जननेन्द्रियश्चेति। एषा त्रिपुरसुन्दरी 'अहं' व्याप्ता भवति। निखिलं सृष्टि व्यक्तित्वम अहम् पूर्ण-मिति।

विश्वबीजस्वरूपिणी शिवसंश्लिष्टा शक्तिः। अहं प्रकारो शिवः निश्चेष्टः शक्तिः सक्रिया च इदमेव कालिकाया विपरीता रतिश्चेत्युक्तम्।

विमर्शस्वरूपा शक्तिः यदा शिव स्थति तदा उन्मनावस्था भवति। तद्विकाशे समनावस्था भवति।

सच्चिदानन्दविभवात् परमेश्वर संकल्पाच्छक्तिः शक्त्या-नादः नादेन विन्दुराविर्भवति। नादो या क्रियाशक्तिः सैव विन्दोरहं निर्मेणा। सृष्ट्यन्तावस्था इदमस्ति, अहम् प्रलयस्य पूर्वावस्था भवति। शक्तेरुच्छूनावस्था घनीभावश्च वर्तते।

ज्ञानप्रधाना शक्ति: क्रियारूपेणरजप्रधाना तथा बिन्दुत्वेन तमप्रधाना सम्भवति ।

जगद्व्यवहारे शक्तिमानापेक्षया शक्ते बहुमानं वर्तते ।[1] शक्ताद्वैतदृष्टौ शक्ति: (ब्रह्म) शिवरूपा एव भाति । शक्ति-शब्देन बहुधा जना: मात्र माया अविद्यादिस्वहिरङ्गाशक्तिरेव अवबोधयन्ति परन्तु एतन्न जीवभूतापरा प्रकृतिरपि शक्ति शब्देन ग्राह्या यथा सिता द्राक्षा मध्वादि विषये मधुरिमा तदन्त-रङ्गरूपा एवास्ति तथैव परमानन्दरसामृतसार सर्वस्वा परमान्त-रङ्गं रूपा शक्तिरेव भगवतीत्युक्तम् ।

एषा शक्तिरेव दृष्टदृश्यानुसंधानकर्तृकार्यकारण-रूपा मायेति निगदित: ।[2] भावाभावस्वरूपिणी अनिर्वचनीय माययैव जगन्निष्पत्ति संभव: ।

सच्चिदानन्दरूपिणीशक्ति: सर्वव्यापकतया सर्वत्र एकरसविराजति । चितिशक्ति: चिच्छक्ति: चेतनशक्ति: दैवीशक्ति: पराशक्ति: सती आद्या ब्रह्म आत्माद्यानेक शक्तय: तस्यैव पर्याय: ।

---

१- रुद्रहीनं विष्णुहीनं न वदन्तिजना: किल ।
शक्तिहीनं यथा सर्वे प्रवदन्तिनराधमम् ।।
श्रीमद्देवीभा०पु० ३।६।१६

अथ च-
ब्रह्मादृजत्यखिलमेतदितिप्रसिद्धं
तां सर्व विश्व जननींशरणं गतो स्मि ।।
श्रीमद्देवीभा०पु० १।२।५-६

२- एवा एतस्य सन्द्रष्टु: शक्ति: सदसदात्मिका
माया नाम महाभाग ययेदं निर्मितं विभु: ।।
श्रीमद्भागवतपु० ३।५।२५

यत्किंचित् जगत्याम जगत तत्सर्वम् शक्तौ सन्निविष्ट: । इतस्यैव विभिन्नोपाधय: सन्ति ।

अनेकेषु उपनिषत्सु शक्ति: वर्णनमुपलभ्यते यथा-

सा काष्ठा सा परागति:[1] 'आत्मा वा इदमेक एवाग्र नासीत'[2] 'यतो इमानि भूतानि जायन्ते येन जातानि जीवन्ति'[3]

असदेवेदमग्र तत्समभवत[4]

आधार शक्त्यावधृत: कालाग्निरयं मूर्ध्वग: ।
तथैव निम्नग: सौम: शिवशक्ति पदास्पद: ।।[5]

जगत्कार्यकरीशक्ति: इति नारदपुराणे प्युक्तम् यथा-

भगवन: विष्णोर्या पराशक्ति: सैव जगत्रूपकार्यसंपादयित्री उभौ भावाभावौ तस्यैवस्वरूपौ स्त: । सैव भावरूपे विद्या तथा अभावरूपे अविद्येति[6] ।

---

१- कठोपनिषद्

२- ऐतरेय उपनिषद्

३- तै०उ० ३।१

४- छा०उ०

५- ज्ञाना० २०

६- संक्षिप्त नारदपुराण पू०भा० १ पाद अ०३ गीताप्रेस

यदेदं जगत् महाविष्णुना भिन्नं प्रतीयते तदा विद्या-भाति यदा ज्ञाताज्ञानज्ञेयेत्युपाधिविशिष्टममात्र शक्तिमात्रमेवास्ति इति भावना बुद्धौ सम्भवति तदा विद्योदयः भवति अभेद बुद्धि-रेव विद्या । तदभिन्ना विद्या बन्धनाशकारी तथा भिन्ना विद्या जन्ममृत्युरूप बन्धदायिनी च । निखिलेदं चराचरं विश्वं वैष्णवी शक्त्यैदमाम् वर्तते ।जङ्गमः चेष्टया तथा स्थावरः जडत्वेन भिन्नं भासते । यथाकाशः घटाकाशमहाकाशेति भिन्नोपाधिभ्य भिन्नम् प्रतीयते तथैव अविद्योपाधियोगेन निखिलं जगत् विभिन्नं प्रतीयते ।

यथा अग्न्यान्तर्गतादाहिका शक्तिः स्वार्थे व्याप्ता भवति तथैव तच्छक्तिरपि विष्णुतुल्यै व्यापिका भवति । वैष्णवी शक्तिम् केचन् लक्ष्मी अन्ये उमा अन्ये भारती आदि सम्बोधने सम्बोधयन्ति ।

एषा पराशक्तिरेव विश्वसृजनादि कार्याणि करोति तथा एषैव व्यक्ता व्यक्त स्वरूपेण विश्वम् व्याप्य तिष्ठति ।

परमात्मनः प्राणः शक्तिः प्रकृतिः। एषा प्रधान प्रकृतिः पुष्ट्यादि कारणा च[१]।

<u>कूर्मपुराणे पि लिखितम्-</u>

या माहेश्वरी शक्तिः ज्ञानश्या उत्कटेच्छा स्वरूपा च सैव व्योमसंज्ञा, हैमावती, पराकाष्ठेतिनिगदिता। एषा सर्वगतानंता गुणातीता भेवशून्या अद्वितीया अनन्या अनेकविभागस्था निष्कलत्वसंस्थिता सूर्यप्रभेवोज्ज्वला शिवाश्रिता स्वभावतः प्रवृत्तिगुणशीला वा भाति[२]।

एवमेका शक्तिःअनेकोपाधियोगतः परापररूपेण शिवसन्निधौ क्रीडति।

---

२-संक्षिप्त नारदपुराण अ० १५८ बृहन्नारदीयपुराणम् अथ-

तस्य शक्तिः परा विष्णोर्जगत्कार्यप्रवर्तिनी।
भावाभावस्वरूपा सा विद्याविद्येति गीयते।
यदा विश्वं महाविष्णोर्भिन्नत्वेन प्रतीयते।
तदा ह्यविद्या संसिद्धा भवेद्दुःखस्य साधनम्।
ज्ञातृज्ञेयाद्युपाधिस्ते यदा नश्यति नारद।
सर्वैकभावनाबुद्धिः सा विद्येत्यभिधीयते।
एवं माया महाविष्णोर्भिन्ना संसारदायिनी।
अभेदबुद्ध्या दृष्ट्या चेत्संसारक्षयकारिणी॥
विष्णुशक्तिसमुद्भूतं मे तत्सर्वं चराचरम्।
यस्माद्भिन्नमिदं सर्वं यच्चेङ्गच्च नेङ्गति॥ ३।६।१६

२- कूर्मपुराण पूर्वविभाग १२ अ०श्लो०२१-४५

मनीषिणाम् मते ईश्वरस्य कार्यं करणं चापि न विद्यते – अत: एषैव सकलं (जगत्कार्यं) करोति । तस्या: (शक्ते:) अधिष्ठानवशात् शान्तिविद्या प्रतिष्ठानिवृत्तिरिति ताश्च: शक्तय: स्वरूपस्था: देव्या: स्वरूपे । अनेन कारणेनैव चतूर्व्यूह: देवा: इत्युच्यते ।

महेश: अनया सह स्वात्मानन्दं समश्नुते अतस्य चतुर्वेदेषु चतुर्मूर्तिमहेश्वरस्य वर्णनमुपलभ्यते । अस्या: अनन्ताया: अतुलमैश्वर्यम् परमात्मयोगादेव अनन्तकालात्संसिद्धम् ।

सैषा सर्वेश्वरीसर्वभूतप्रवर्तिका, तथा भगवान् काल: हरि: प्राण: महेश्वरश्चोक्तम् । निखिलं जगत् कालस्यैव सन्तति: तथैव तस्यशक्ति: माया सेति विश्रुत: । मायावी पुरुषोत्तम: ईश्वर: माययैव जगत् ग्रसयति ।

सर्वाकारा एषा सनातनी मायाशक्ति: सर्वदा महेशस्य विश्वरूपत्वं प्रकाशति ।

तन्महेशरचिता अन्या ज्ञानशक्ति: क्रियाशक्ति: प्राण - शक्तिरिति त्रिधा ।

शक्तिमान्: महेश्वर: सर्वशक्तीनां विनिर्माता माययैव भाति ।

सर्वेश: काल: मायया एव व्यवहारिक कालस्योत्पादक: भवति । उक्तं चापि यथा– 'शक्तिरेका शिवोऽप्येकाश्शक्तिमान शिव-रुच्यते । शक्तिशक्तिमतश्चैव सर्वशक्तिसमुद्भवन्नायन चैतन्यरूपिणी

शक्ति: अनन्तवाचिनी वर्तते । तन्मात्रप्रतिष्ठितं[१] चैतन्यं शक्ति-संभूतमिति निश्चितम् ।

यदा इच्छाज्ञानक्रियाशक्तेर्गरिणामम् गुणत्रयम् विषय-भूतवर्गम् देवादिकाश्च सर्वं जगत् तन्मूलकमेव ब्रह्मणोत्पत्ति प्रयोजनभूत-ब्रह्ममपि गुह्यं शेते तदा सकलं शक्तिगुणादिनारोपितं निष्कलम्[२] द्वितीयमेव भाति ।

---

१- अनन्तवाचक: शक्तिर्वै चैतन्यरूपिणी ।
चैतन्य: शक्तिसंभूत: तन्मात्रे प्रतिष्ठित: ।।

२- ब्रह्मणोनं ज्ञात्वर्वं गुह्यणोनं प्रयोजनं
निष्कलमद्वितीयश्च शक्तिगुणादिनारोपितम् ।।
सकलं सर्वसम्पूर्णं पूर्णहिरन्मयोत्तमम् ।
एकात्मा हि द्विधा भूत्वा सद्रूपं चिद्घनात्मकम् ।
सर्वार्थपूर्णञ्च माधुर्यैश्वर्यमव्ययम् ।
तरुणा करुणा नित्यानवीना सर्वमोहिनी ।
तथैव मोहनं नित्यं प्रेमानन्द प्रवर्धनम् ।
सर्वोज्ज्वला उज्ज्वला च उज्ज्वलासन संस्थिता।
अनन्तानन्तब्रह्माण्डे अद्वितीयद्विप्रतीता ।
प्रेमानन्दप्रेममयी शुद्धसत्त्व सनातनम् ।
आधाराश्चिद्घनाकार आधेयाश्चिपरात्मनी ।
विषय: परमा प्रीति: सद्गुणं दोषवर्जितम् ।
विस्फुलिङ्गो जीवात्मन: परमात्मा यथा घन: ।
देवानां मूलदेवोहि इन्द्रियमूलदेवतम् ।
नोक्मूते न दोष: स्याद् दोषगुण गुणत्रयम् ।
गुणसाम्ये महत्त्वं प्रकृति: शक्तिवाचिनी ।।
...२-१२७

सैव एकात्मा सृष्ट्यर्थं द्विधा भूत्वा विद्घनात्मकं सद्रूपं गृह्णाति । इदं विद्घनात्मकं रूपम् अव्ययं मातृरूपं सर्वाध्ययवपूर्णञ्च ।

सनातनीधर्मस्वरूपा माया शक्तिः-

आदौ यदा विश्वमेकार्णवीभूतं समुपस्थितम् न देवासुरमानवाः नदीर्नि नवा किंचिज्ज्ञेयमात्रावशेषितः । तदा विश्वोद्भवः देवः (ब्रह्म) सिसृक्षुः मायाशक्तिम् सस्मार तदा मायया सः नारायणो भूत्वा वटपत्राश्रये तोयान्तः समुपस्थितः इदं अव्यक्तरूपिणम् परमेशानं विभुपरमेश्वरमेव मार्कण्डेय मुनिना स्वेच्छयाविहरन् अवलोकितम् ।

अथयैव तद्देवस्य नाभिपद्मसमुद्भूतं चतुर्वक्त्रं जातम् । तेन ब्रह्माणं सृष्टौ नियोजयामास । तदा ब्रह्मा मनसा सप्तर्षीनि जनयामास । ते शक्त्यभावे सृष्टिकर्तुमशक्याः इति दृष्ट्वा योनि गता सृष्टिरितिज्ञात्वा ब्रह्मा योनिमकल्पयत् पश्चात् कश्यप नामानं मुनिम् तथा रूपगुणसम्पन्नां कन्यांच जनयामास । तया कन्या सहचर्येण कश्यपः जीवजातयः उत्पादयामास । तत्काले संतुष्टः नारायणः देवः मायाम् प्रति अकथयत् त्वया मां अम्भसि वटपत्रेण बिधृता अतएव लोके त्वाम् सनातनी धर्मरूपा अवमन्यपिष्यन्ति । तथा मुनिमनुजाः त्वाम् सनातनीधर्मस्वरूपिणीमित्वा आराधयिष्यन्ति च ।[१]

---

१- तंत्रसं० च०मा०पु०मायातंत्र श्लोक २-२१

सकलस्वरूपनिरूपण:-

एककालो न द्वितीयम् कथंचन। पूर्णमिदम्:पूर्णतर: सर्वेश्वरो महेश्वर: विष्णुशिवाख्य: देव: महामायागुणयोगेनैव पूर्णमिति अतएव स्त्रीपुंभावे एकमात्र सकलमेव प्रकाशितम्। निष्कलब्रह्म तु निर्गुणं तत्प्रकारिणो शक्ति: यथा दारुगता वह्नि: भाति तथैव शक्तिगतं ब्रह्मपि। विभवप्रभृतादि कार्यकारणानि आधेय चैतन्य: अथवा पिण्डस्थ: परमेश्वर: मायया भूता गुणशक्तिनैव करोति नान्यथा अत: तेनोक्तम्-

सच्चिदानन्द विभव: सकल: परमेश्वर:।
विभवप्रभव: शक्ति: सकला चित्कला परा।।

---

१- सत्वगुणो महादेव: रजस्मै चराचरम्।
चिन्मात्रं सकलाधारो ब्रह्मब्रह्मसनातनम्।।
सर्वव्यापी अखण्डश्च खण्डशक्ति समागम:।
निष्कलं परमं ब्रह्म अस्ति नास्ति गतो महान्।।
अस्ति काष्ठगतो वह्निर्नास्ति किंचिदनङ्गितम्।
आधेय: अस्ति चैतन्य: पिण्डस्थ: परमात्मन:
सच्चिदानन्द विभव: सकल: परमेश्वर:।
विभव:प्रभव: शक्ति: सकला चित्कला परा।
माया कलायुता: सर्वे महामायो महेश्वर:।
माया जाता गुण शक्ति: प्रतिबिम्बो मनोमय:।।

स्त्रीशक्तिरिति चरकसंहितायां श्रीमहर्षि आत्रेयेनोक्तम् तद्यथा-

प्राय: स्त्रीषु प्रीतिनिवास:, स्त्रिय: एव सन्ततेर्जननी। धर्मार्थौ चापि स्त्रीषु निवसति। स्त्रिय: शक्तिस्वरूपा च। एषा माता, भगिनी, पुत्री पुत्रवधू इत्यादि विविधरूपाणि स्वीकृत्य संसार कार्यं करोति। स्त्रीषु निहितेदं जगत् अतएव स्त्रिया: जगन्मातेति। माया प्रकृतिरेव शक्तिश्च एतानि एका भूत्वा पि अनेकानि तथैव स्त्रियश्चापि[1]।

स्वप्रकाशरूपेश्वरस्य शक्तिरूपोधर्म:-

चिद्गगन चन्द्रिकायां कालिदासेन लिखितम्-

विश्वमेतदिन्त्यिा इनम् इत्यसौनामरूप विहरेण सन्निश्चितम् तद आत्मन: भासिनी या शक्ति: सा ईशितु: धर्मेति[2]।

---

१- चरकसं० चिकित्सा स्थान ५०१

२- विश्वमेतदिन्त्यिा इमित्यसौनामरूपविरहणेनिश्चितम्।
सा त्वमम्ब। न विमर्शभिभाष्यता आत्मनोपदसि धर्म ईशितु: ।।
-चिद्गगनचन्द्रिका श्लो० ५६-५८

टीकाकारेण व्याख्यायां प्रकाशितमप्युक्तम्-

नहि धर्मो धर्माद्व्यतिरिच्यते नहि वह्निरदाहकत्वं प्रकाशाभ्यां व्यतिरिच्यत इति आत्मन ईशितृधर्मभूता शक्तिरपि आत्मिकैवेति। जाड्य परिपन्थित्वं भासकत्वं भास्यत्वाभावो जडत्वाभावश्च मुक्त एवेतिभावः।

विमर्शरूपा शक्तिः-

तन्त्रसाराख्य ग्रन्थे वर्णितम् यथा-

यदेतत् प्रकाशरूपं शिवतत्त्वमुक्तम् तत्र अखण्ड मण्डले - यदा साधकः प्रवेष्टुमशक्तः तदा स्वातन्त्र्यशक्तिमेव अधिकां पश्यन् निर्विकल्पमेव भैरवसमावेशमनुभवति। अयं चास्योपदेशः यत् सर्वमिदं भावजातं बोधगगने- प्रतिबिम्बमात्रं प्रतिबिम्बलक्षणोपेतत्वात् इदं हि प्रतिबिम्बस्यलक्षणं यत् भेदेन भासितमशक्यम् अन्यव्यामिश्रत्वेनैव भाति। तत् प्रतिबिम्बम् मुखरूपमिव दर्पणे रस इव दन्तोदके, गन्धइव घ्राणे, मिथुनस्पर्शइव आनन्देन्द्रिये, शूलकुन्तादिस्पर्शो वा अन्तः स्पर्शनेन्द्रिये प्रतिश्रुत्केव व्योम्नि। नहि रसोमुख्यः तत्कार्यव्याधिशमनाद्यदृष्टेः। नापि गन्धस्पर्शौमुख्यौ गुणिनः तत्र अभावे तयोरयोगात् कार्यपरम्परानारम्भात् च।

न च तौ स्तः देहोद्धूलनविसर्गादि दर्शनात् शब्दो पि न मुख्यः क्वो पि वक्ति इति अगच्छन्त्या इव प्रतिश्रुत्कायाः श्रवणात्। एवं यथा एतत् प्रतिबिम्बितं भाति तथैव विश्वं परमेश्वरप्रकाशे।

ननु अत्र बिम्बं किं स्यात् ।माभूत किंचित् ।ननु किम् अकारणं तदद् हन्त तर्हि हेतुप्रश्न: तत्किं बिम्बवार्तोयुक्त्या,हेतुश्च परमेश्वर शक्तिरेव स्वातन्त्र्या पर्यायि भविष्यति, विश्वप्रतिबिम्बधारित्वाच्च ।

विश्वाकत्वं भगवत: संविन्मयं हि विश्वं चैतन्यस्य व्यक्तिस्थानमिति तदेव हि विश्वम् अत्र प्रतीयम् इति प्रतिबिम्ब धारित्वमस्य तच्च तावत् विश्वात्मकं परमेश्वरस्य स्वरूपं न अनामृष्टं भवति चित्स्वभावस्य स्वरूपानामर्शनानुपपत्ते: । स्वरूपानामर्शने हि वस्तुत: जडतैव स्यात् ।आमर्श चायं न सांकेतिक: अपितु चित्स्वभावतामात्रनान्तरीयक: परनाद गर्भ उक्त: स च यावान् विश्वव्यवस्थापक: परमेश्वरस्य शक्तिकलाप: तानाम अमृशति ।

तत्र मुख्यास्तावत् तिस्त्र: परमेश्वरस्य शक्तय: अनुत्तर:इच्छा उन्मेष इति,तदेव परामर्शत्रयम् अ-इ उ इति एतस्मादेव त्रितयात् सर्व: शक्ति प्रपंच: चर्च्यते,अनुत्तर एव हि विश्रान्तिरानन्द:, इच्छायामेव विश्रन्ति: ईशनम्, उन्मेष एव हि विश्रान्तिरुर्मि: या क्रियाशक्ते: प्रारम्भ तदेव परामर्शत्रयं आ-ई-ऊ इति ।अत्र च प्राच्यं परामर्शत्रयं प्रकाशभागसारत्वात् सूर्यात्मकं चरमं परामर्श त्रयं विश्रान्तिस्वभावाह्लाद प्राधान्यात् सोमात्मकम् इति यावत्कर्मांशस्य अनुप्रवेशो नास्ति ।

यदा तु इच्छायाम् ईशने च कर्म अनुप्रविशति यत् तत् इष्यमाणम् ईप्स्यमाणमिति चोच्यते तदा अस्य द्वौ भेदौ प्रकाशमात्रेण र श्रुति: विश्रान्त्या ल श्रुति: ।एव्यो: प्रकाशस्तम्भस्वभावत्वात् इष्यमाणं न बाह्यवत्स्फुटम्, स्फुटरूपत्वे तदेव निर्माणं स्यात्

न इच्छा ईशनं वा अत: स्फुटत्वात् एव श्रुतिमात्ररत्वे: न व्यंजनवत् स्थिति: ।

तदेतद्वर्णचतुष्टयं उभयच्छायाधारित्वान्नपुंसकम्- ऋ- ॠ ऌ- ॡ इति अनुत्तरानन्दयो: इच्छादिषु यदा प्रसर: तदा वर्णद्वयम्- ए- ओ इति ।

तत्रापि पुनरनुत्तरानन्दसंघट्टकृत् वर्णद्वयम ऐ-औ इति । सैयम् क्रिया शक्ति: तदेव च वर्णचतुष्टयम् ए-ऐ-ओ- औ इति । तत: पुन: क्रियाशक्त्यन्ते सर्वं कार्यभूतं यावत् अनुत्तरे प्रवेक्ष्यति, तावदेव पूर्णं संवेदन सारतया प्रकाशमात्रत्वेन बिन्दुतया आस्ते- अमिति । ततस्तत्रैव अनुत्तरस्य विसर्गो जायते अ: इति । एवम् षोडशकं परामर्शानां बीजरूपमुच्यते । तदुत्थं व्यंजनात्मकं योनि- रूपम् ।

तत्र अनुत्तर: कवर्ग: अद्वया: इच्छाया: चवर्ग: सकर्मिका- याश्छायाया द्वौ टवर्गस्तवर्गश्च, उन्मेषात्पवर्ग: शक्तिपंचकयोगात् पंचकत्वम् । इच्छाया एव त्रिविधाया य-र-ल: उन्मेषाद्वकार: इच्छाया एव त्रिविधाया: श ष-स: विसर्गात् हकार: योनि- संयोगज: क्षकार: । इत्येवमेष भगवान अनुत्तर एव कुलेश्वररूप: । तस्य च एकैव कौलिकी[१] विसर्गशक्ति: यथानन्दरूपात् प्रभृति इयता बहि: सृष्टिपर्यन्तो प्रस्पन्द: वर्गादिपरामर्श एव

---

१- तं०सा०आह्निक ३

बहिस्तत्त्वरूपतां प्राप्ताः। स चैष विसर्गस्त्रिधा आणवः चित्त विश्रान्ति रूपः शाक्तः चित्तसंबोधलक्षणः शाम्भवः चित्प्रलय रूपः इति।
एवं विसर्ग एव विश्व जनने भगवत शक्तिः।

इत्थेवम् स्थले यदा निर्विभागतया परामर्श तदा एकैव भगवान् बीजयोनितया भागशः परामर्शे शक्तिमान शक्तिश्च। पृथक् अष्टक परामर्शे चक्रेश्वर साहित्येन नव वर्गः एकैक परामर्श प्राधान्ये पंचाशदात्मकता। तत्रापि संभवद्भागभेदपरामर्शने एकाशीति रूपत्वम्। वस्तुतस्तु षट एव परामर्शः प्रसरण प्रतिसंचरण योगेन द्वादश भवन्तः परमेश्वरस्य विश्वशक्तिपूर्णत्वं पुष्यन्ति। ता एव एताः परामर्श-रूपत्वात् शब्दराशिभावतत्त्वः अकालिका इति निरूपताः। एते च शक्तिरूपा स्वशुद्धाः परामर्शाः शुद्धविद्यायां परापररूपत्वेन मायोन्मेष मात्र संकोचात् विद्याविद्येश्वररूपता भजन्ते।

मायायां पुनः स्फुटीभूतभेद विभागा मायीयवर्णतां भजन्ते, ये पश्यन्तीमध्यमा वैखरीषु व्यवहारिकत्वम् आसाद्य बहोलिकपतत्त्व स्वभावतामपि यान्ता: ते च मायीया अपि शरीर-कल्पत्वेन यदा दृश्यन्ते, यदा च तेषाम्- उक्तनयैरेतैः जीवित-स्थानीयैः शुद्धैः परामर्शैः प्रत्युज्जीवनं क्रियते तदा ते सवीर्या भवन्ति। तेन तादृशाभोगमोक्षप्रदाः इत्थेवं सकल परामर्श-विश्रान्तिमात्र रूपं प्रतिबिम्बितसमस्ततत्त्वभूतभुवनभेदम्। आत्मानं पश्यता निर्विकल्प तया शाम्भवेन समावेशेन जीवन्मुक्तता। अत्रापि

पूर्ववत् न मन्त्रादियन्त्रणाकाङ्क्षिदिति ।

अन्तर्विभाति सकलं जगदात्मनीह,
यद्वद्विचित्र रचना मुकुरान्तराले ।
बोध: परं निज विमर्श रसानुवृत्त्या,
विश्वं परामृशतिनो मुकुरस्तथा तु ।।

अनिर्वचनीया मायाशक्ति-

परमात्मतत्त्वात: अभिन्नामाया आकाशादिकार्येभ्यो ज्ञेया । इयं माया परमात्मन: शक्तिरूपाऽस्ति ।यथाग्नेशक्ति: नाग्नि-भिन्ना सतास्पर्शे दाहादि कार्येषु तत्प्रतीति: तथैवआकाशादिका-र्येष्वेव माया शक्तेप्रतीति: भवति ।

एषामायाशक्ति न सतो न असतो यत: सतोत्युक्ते सति अग्नेशक्ति: अग्निरिति कथमाप्युक्तम् ।

यदा असतोत्युक्तं तदा आकाशादि कार्याणाम् कारणता न सिद्ध्यति । तथा यदि शून्येति मन्यामहे तदेतदप्ययुक्तम् शून्यता-तन्मायाशक्तेकार्यत्वात् ।अतएव उपरोक्त गुणाभावे न सतो असतो अपितु अनिर्वचनीयेति[1] सिद्धम् ।

---

1- पंचदशी पंचमहाभूतविवेकप्रकरण ।

वेदवाक्यान्यपि एवम् वदन्ति-यत घटादि पदार्थानां आवरणकारणम: तथैव परमात्मनमाच्छादिका मायाशक्ति: सा न सतीन असतीति ।

व्यवस्थितव्यवहारकारणामायाशक्ति:-

एषा मायाशक्ति: ईश्वरस्य स्वरूपबोधकोपाधिरित्युच्यते ।अनया संपूर्णपदार्थानां व्यवस्था स्थापिता । एषा अखिलपदार्थेषु अन्तर्भूता सुगुप्ता भाति अपृथक् प्रतीति: तस्य यदि पदार्थानाम् व्यवस्थापिका माया न भवेत तर्हि पदार्थसमपरस्पर संयुज्यते तथा जादि अव्यास्थितव्यवहारो पि आरम्यते । तदा जले उष्णता अग्नौ शीतलतादि विपरीत व्यवहारबोधो पि संभाव्यते ।एतेन्न अतस्व स्पष्टं यत जादि व्यवस्थित व्यवहारकारणे मायाशक्ते प्रधानत्वमिति[1] ।

इयम मायाशक्ति: चैतन्यप्रतिबिम्बस्य आश्रया अत: चैतन्यभावेति च । मायासम्पर्केनैव ब्रह्मपि ईश्वरत्वं याति । यथा-मनुज:न मनुजत्वत्यागं विना एककाले पुत्र पौत्रादिभेदेन विभिन्नस्वरूपान् प्राप्नोति तथैव ब्रह्मपि ब्रह्मत्व त्यागेन विना जीवेश्वरादि परस्पर विरुद्ध रूपता भवति ।

---

१- पंचदशी तृतीय पंचकोशविवेक प्रकरण ।

यथा पितापितामहादि सम्बन्धिनो दृष्ट्याभावेन पुत्र पौत्रभाव: एवं शक्तिकोशोपाधिवशाभावेन जीव: न च ईश्वर: इति ।

कूर्मपुराणे चाप्युक्तम्-

अहमेव हि संहर्ता सृज्यहं परिपालक: ।
मायावी मामिका शक्तिर्माया लोकविमोहिनी[1] ।।

अन्यच्च ईश्वरगीतायामपि वर्णितम् - आद्यन्तरहिता शक्तिस्वरूपा माया[2] अव्यक्ताभिधा । तस्या एव कारणेन अव्यक्ताद् जगदोदय: संभव: तथा च यथा स्वभावतो भिन्नं भासते नौकिना शक्तिना आद्यन्तरहितस्य मम शाश्वतत्वमुच्यं संभवन्ति हि ।

शब्दकल्पद्रुमकोषे लिखितम्-

शक्ति: स्त्री (शक्- क्तिन) कार्यजनन सामर्थ्य । यथा - या देवी शक्तिरूपेण संस्थिता" इति देवी माहात्म्यस्य टीकायां नागोजी भट्ट: । राज्ञो नेतृत्वनया सा प्रभावोत्साह मन्त्रज भेदात्रिविधा । तत्र प्रभुत्वे साधकत्वात् कोष दण्डो प्रभुशक्ति: विक्रमेण स्वशक्त्याविस्फुरणमुत्साहशक्ति: । सन्ध्यादीनां समादीनां नांव यथावस्थानं मंत्रशक्ति: । सामर्थ्य मात्रम् तत्पर्याय: ।

---

१- कूर्मपुराण उ० वि० ४।१८

२- कू०पु०उ० वि० ४।३-६

द्रविणम् तर: सह: बलम् शौर्यं स्थाम: शुष्मम् पराक्रम: प्राण: । इत्यमर: । शुष्म सहस् , इति शब्दरत्नावली । ऊर्ज्जं: इति जटाधर: । गौरी इति मेदिनी । लक्ष्मी इति शब्दमाला । त्रिशक्तयो यथा- एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी । एषा श्वेता परा सृष्टि: सात्त्विकी ब्रह्मसंस्थिता एषैव रक्ता रजसि वैष्णवी परिकीर्तिता । एषैव कृष्णा तमसी रौद्री देवी प्रकीर्तिता । परमात्मा यथा देव एक एव त्रिधा स्थित: प्रयोजन-वशाच्छक्तिरेकैव त्रिविधा भवेत् । इति वाराहे त्रिशक्ति माहात्म्यम् नामाध्याये । अपि च-बिन्दु: शिवात्मकस्तत्र बीजं शक्त्यात्मकं स्मृतम् । तयोर्योगेभवेन्नादस्तेभ्यो जातस्त्रिशक्तय: । इति क्रियासार: अन्यच्च - इच्छाक्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी

त्रिधा शक्ति: स्थिता यत्र तत्परं ज्योतिरोमिति ।

इति गौरदासंहितायाम् ।

अष्टशक्तयो यथा-

इन्द्राणी वैष्णवी शान्ता ब्रह्माणी ब्रह्मवादिनी ।
कौमारी नारसिंही च वाराही विकटाकृति: ॥
माहेश्वरी महामाया भैरवी भीमरूपिणी ।
अष्टौ च शक्तय: सर्वाश्चास्या पृथगुदिता ॥
इति ब्रह्मवैवर्ते श्रीकृष्णजन्मखण्डे ११६ अध्याये ।

नवशक्तयो यथा-

तत्र पद्मे चाष्टदले मध्ये च भवति पूर्वकम् ।
वैष्णवीचैव ब्राह्मणीं रौद्रीं माहेश्वरीं तथा ।।
नारसिंहीञ्च वाराहीमिन्द्राणी कार्तिकी तथा ।
सर्वशक्तिस्वरूपांच प्रधानां सर्वमङ्गला: ।
नवशक्तीश्च संपूज्य घटे देवांच पूजयेत् ।

इति ब्रह्मवैवर्तखण्डे ६१ अध्याये ।

पंचाशद्विष्णु शक्तयोयथा-

कीर्ति: कान्तिस्तुष्टि: पुष्टी धृति: शान्ती क्रिया दया ।
मेधा सहर्षा श्रद्धास्यानुज्ञा लक्ष्मी सरस्वती ।
प्रीति रती रमा प्रोक्ता: क्रमेण स्वरशक्तय: ।
जयादुर्गाप्रभासत्या चण्डा वाणी विलासिनी ।
विरजा विजया विश्वा विनदा सुनदा स्मृति: ।
ऋद्धि: समृद्धि: शुद्धिश्च भक्तिर्मुक्तिर्मति: क्षमा ।
रमोमाक्लेदिनी क्लिन्ना वसुदावसुधा परा ।
परापरायणा सूक्ष्मा संध्याप्रज्ञा प्रभानिशा ।
अमोघा विद्युता चेति शक्तया सर्वकामदा:
एता: प्रियतमाङ्केषु निषण्णा: सस्मितानना: ।।

पंचाशद्रुद्रशक्तयो यथा-

पूर्णोदरी स्याद्विरजा शाल्मली तदनन्तरम् ।
लोलाक्षी वर्तुलाक्षी च दीर्घघोणा समीरिता ॥
सुदीर्घमुखगोमुखी दीर्घजिह्वा तथैव च ।
कुण्डोदर्यूर्ध्वकेश्यौ च तथा विकृतमुख्यपि ॥
ज्वालामुखी ततो ज्ञेया पश्चादुल्कामुखी ततः ।
सुश्रीमुखी चैव विद्यामुख्येताः स्वरशक्तयः ।
महाकाली सरस्वती सर्वसिद्धिसमन्विते ।
गौरी त्रैलोक्यविद्या स्यान्मंत्रसिद्धिस्ततः परम् ॥
आत्मशक्तिर्भूतमाता तथा लम्बोदरी स्मृता ।
द्राविणी नागरी भूयः खेचरी चापि मंजरी ॥
रूपिणी वीरिणी पश्चात् काकोदर्यपि पूतना ।
स्याद्भद्रकाली योगिन्यौ शंखिनी गर्जिनी तथा ॥
कालरात्रिश्च कुब्जिन्या कपर्दिन्यपि वज्रया ।
जयासुमुख्येश्वर्यौ रेवती माधवी ततः ॥
वारुणी वायवी प्रोक्ता पश्चाद्रक्षोविदारिणी ।
ततश्च सहजा लक्ष्मी व्यापिनी मायया न्विता ।
एता रुद्राङ्गना पीनस्याः सिन्दूरारुणविग्रहाः ।
रक्तोत्पलकपालाभ्यामलङ्कृतकराम्बुजाः ।

इति प्रपंचसारे ।

कुलशक्तयो यथा-

शक्तयः परमेशानि विदग्धाः सर्वयोषितः ।
नटी कापालिकी वैश्या मालिनी कुड्गु मालिनी ॥

चाण्डाली च कुलाली च रजकी नापिताङ्गना ।
गोपिनी योगिनी शुद्रा ब्राह्मणी राजकन्यका
कोचाङ्गना च देवेशि तथैव शङ्खकारिणी ।
एताः षड्विंशतिः कन्या देवानामपि दुर्लभा ।
देवेशा व्याधवामा च तथा मांसापहारिणी ।
बौद्धा च जवनी देवितरसपहारिणी ।।
वैश्या चतुर्विधा प्रोक्ता तथैव गणिकाङ्गना ।
कुम्भकारी विधाप्रोक्ता तथैव गोपिनी स्मृता ।
पातकैधाङ्गनादेवि जवनी द्विविधा स्मृता ।
बौद्धकन्या त्रिधा देवि तथा कोचङ्गना प्रिया
पूर्वोक्ताभिः सहैवा चतुःषष्टिश्च शक्तयः ।

इति रैवतो तन्त्रे तृतीय पटले ।
गुप्तसाधनतन्त्रे प्रथमपटले अपि एषाम् वर्णनमुपलभ्यते ।

शक्तिसंगम सर्वस्वमिति ग्रन्थे शक्तिमहत्त्वं प्रदर्शितम् यथा-

शक्तिं विना महेशानि सदाहं शवरूपकः ।
शक्तियुक्तो यदा देवि शिवो हं सर्वकामदः ।
शक्तियुक्तं जपेन्मन्त्रं न मन्त्रं केवलं जपेत् ।
सावित्री सचिवोवृता सिद्धो मुन नानन्दिनी ।
वाग्वत्यां कृष्णदेवः सिद्धो मुन सत्यया सह ।
तथा कौचवधू सङ्गान्मम सिद्धिः वरानने ।।

ईश्वरो हं महादेवि केवलं शक्तियोगत: ।
शक्तियोगेन देवेशि यदि सिद्धिर्न जायते ।
तदैव परमेशानि मम वाक्यं वृथा भवेत् ।
यद्वत् जागच्छूर्णं शक्तितत्त्वे सुरेश्वरि ।
सिन्धुरूपं महेशानि तज्जलं नाम संशय: ।
स्वोयेष्ट देवोभावेन भावयतांच यत्नत: ।
शक्तितत्त्व कथयते देवि शृणुष्व सुरसुन्दरी ।
त्रयोदशादूर्ध्वं या पंचविंशति वार्षिकी ।
अप्रसूता विशेषेण पंचमे पि भवेत् प्रिये ।
सुन्दरी तु विशेषेण पंचमे पि भवेत् प्रिये ।
सुन्दरी तु विशेषेण प्रसूता वा प्रसूतिका
अवश्यं पंचमं कुर्यात्शक्तिमाने महेश्वरि ।।

ब्रह्मवैवर्तपुराणस्य गणेशखण्डे प्युक्तम्-

सहबुद्ध्या बुद्धिमन्तो न वक्तुमुचितम् सुरा: ।[१]
सर्वे शक्त्या तया विश्वेशक्तिमन्तोऽहि जीविन: ।
ब्रह्मादि तृणपर्यन्तं सर्वं प्राकृतिकं जगत् ।
सत्यं नित्यं विनाभावं मया शक्ति: प्रकाशिता ।
आविर्भूता च सा मत: सृष्टौ देवोमदोच्छैया ।
तिरोहिता च सा शेषौ सृष्टि संहरणानोयया ।

---

१- ब्रह्मवै०गण०ख० अ० ७

सृष्टिकर्त्री च प्रकृतिः सर्वेषां जननीपरा ।
मत्तुल्या च मन्मायया तेन नारायणी स्मृता ।।
सुचिरंच तपस्तप्तं शम्भुनाऽऽराधिता च माम् ।
तेन तस्मै मया दत्तं तपसां फलरूपिणी ।
कृतंच लोकशिक्षार्थमस्या न स्वार्थमेव च ।
स्वयं व्रतानां तपसां फलदात्री जगत्त्रये ।
मायया मोहितास्सर्वे किमस्या वास्तवं व्रतम् ।
साध्यमस्या व्रतफलं कल्पेकल्पे पुनः पुनः ।
सुरेश्वराश्चांशास्त्र्च ब्रह्म विष्णुमहेश्वराः ।
कला कलांशरूपास्ते गोविन्दश्च सुराश्च्य ।
मृदा विना कुलालश्च घटकर्तुमक्षम: ।
विना स्वर्णं स्वर्णकारः कुण्डले कर्तुमक्षमः ।
विना शक्त्या तथाहंच स्वसृष्टिकर्तुमक्षमः ।
शक्तिप्रधानासृष्टिश्च सर्वदर्शनसम्मता ।
ब्रह्मात्मा च निर्लिप्तो दृश्यः साक्षी च देहिनाम् ।
देहाः प्राकृतिकाः सर्वे नश्वराः पांचभौतिकः
अहं नित्यं शरीरी च भानुविग्रहविग्रह: ।
सर्वाधारा च प्रकृतिः सर्वात्माहं जगत्सु च
ब्रह्मात्मा मनोब्रह्मा ज्ञानरूपो महेश्वरः ।
पंचप्राणाः स्वयं विष्णुर्बुद्धिः प्रकृतिरीश्वरी ।
शक्त्यो निद्रादयश्चैताः सर्वाश्चप्रकृतेः कलाः
सा चशैलेन्द्र कन्येयमिति वेद निरूपितम् ।

अपि च-

सा शक्ति: सृष्टिकाले च पंचधा चेश्वरेच्छया ।
राधापद्मा च सावित्री दुर्गादेवी सरस्वती ।।
प्राणाधिष्ठातृ देवी या कृष्णस्य परमात्मन: ।
प्राणाधिकप्रियतमा सा राधा परिकीर्तिता ।।
ऐश्वर्याधिष्ठातृ देवी सर्वमंगलकारिणी ।
परमानन्दरूपा च सा लक्ष्मी परिकीर्तिता ।
विद्याधिष्ठातृ देवी या परमेशस्य दुर्लभा ।
वेदशास्त्रयोगमाता सा सावित्री प्रकीर्तिता
बुद्ध्याधिष्ठातृ देवी या शास्त्रज्ञान प्रदा सदा ।
कृष्णकण्ठोद्भवा या च सा देवी सरस्वती ।
पंचधादौ स्वयं देवी मूलप्रकृतिरीश्वरी ।
तत: सृष्टिक्रमेणैव बहुधाकल्या च सा ।
योषित: प्रकृतेरंशा पुमांस: पुरुषस्य च ।[१]

-इति ।

---

१- ब्र०वै० प्र०ख० ४० अ०

ब्रह्माण्यो शक्त्युत्पत्तिर्यथा-

देवीपुराणे रुरुवधप्रसङ्गे लिखितम् यत् -
त्रासवन्तः देवाः दैत्यभयसंपन्ना पितामहस्याग्रे चिन्तिताः समुपस्थिताः
ब्रह्मादयो देवा महेश्वरं प्रति स्त्रीरूपधारिणी भूत्वा सहाय्यं कुरु
इति प्रार्थयामास तदा महेश्वरः स्वशक्तिम् ध्यातवान् सा शक्तिः
ब्रह्मरूपधरा हंसनाकार विग्रहा हंसस्यंदनमारुढा स्वकीयायुधधारिणी [1]
चासीत् । एषा शक्ति दानवानां भयंकरी चासीत् ।

---

1- ततो ब्रह्मादयो देवा भयं जग्मुः त्रासवन्तः ।
यदि स्यान्निर्जितो देवः नाथः सर्वदिवौकसाम् ।
एतस्मिन्नन्तरे शक्र ब्रह्मा चिन्तयते क्रियाः ।
स्त्रीरूपधारिणी भूत्वा सहायस्त्वं महेश्वरे ।
क्षिप्रं कुरु स्वकार्यं त्व एव विश्वेश्वरे रणे ।
ततो ध्यातवान शम्भुः स्वशक्तिं किरणोज्वलाम् ।
ब्रह्मरूपधरां किन्तु हंसनाकार विग्रहाम् ।
हंसस्यन्दनमारुढा स्वकीयायुधधारिणी ।
तस्मिन्तो महाविन दानवानां भयंकरी ।
तस्याधीराणि कर्माणि दृष्ट्वा स विस्मयन शिवः ।
का पुनः पृष्टः सुस्नेहा सदाति प्रतिपदा जिते ।
तस्या शक्तिं जितोयांच सृजामि अपराजितम् ।
-देवीपुराणे रुरुवधे ब्रह्माण्युत्पत्तिः
यो सावनादिमध्यान्तशिवशक्तिमयः परः ।
तस्यैव परमानन्दा सर्व किल्विष नाशिनी ।। इति
-देवीपुराणे प्रथमअध्याये नन्दाकुण्डप्रवेश प्रसङ्गे

सृष्टिस्थितिलयादिषु आद्याशक्तेः स्थानम्-

विभिन्न वैदिक पौराणिक तांत्रिक ग्रन्थानामवलोकनेन प्रतीयते- यत विश्वोद्भवलयादिषु आद्याशक्तेरस्थानं अति महनीयं वर्तते।

एषा महाशक्तिरेव परमात्म पद वाचिनी भवति। इयमेव अनाद्यविनाशिनी अनिर्वचनीया सर्वशक्तिमयी परमेश्वरी चेति।

एषापैव विविधरूपेषु जगत्क्रीडनकं क्रीडति[1]। एषा शक्तिः निर्गुणा;नित्या व्यापिका विकृता योगगम्या खिलाधारा तुरीयेति उक्ता[2]। महाकाली महालक्ष्मी महासरस्वत्यादि रुपैः एषैव भाति।

आद्याःशक्तिः परास्याश्चापि एषाशक्तिरेव उत्पत्ति पालन विनाशाय ब्रह्मविष्णुरुद्रादि देवानां रुपं तनुते[3]।

---

१- सृष्टौ या सर्गरुपा जगदवनविधौ,
पालिनी या च रौद्री
संहारे चापि यस्या जगदिदमखिलं
क्रीडनं या परास्या।। -श्रीदेवीभा० १।१

२- निर्गुणा या सदा नित्या व्यापिका विकृता शिवा।
योगगम्याखिलाधारा तुरीया या च संस्थिता।
तस्यास्तु सात्त्विकी शक्ती राजसी तामसी तथा।
महालक्ष्मी सरस्वती महाकाली तिताः स्त्रियः।।
-श्रीदेवीभा०पु०१।२।१९-२०

३- या वेदेत्यभिधीयते श्रुतिपथैः शक्तिस्सदाद्यापरा
श्रीदेवीभा० १।२।४

एषा शक्तिः सान्तर्वर्तिनी मायाशक्तिम् निगृह्य निश्चेष्टा निष्क्रिया भवति तदा सा शुद्धब्रह्मस्वरूपिणी[1] तथा सचेष्टा सक्रिया तदा प्रकृतीत्युपवर्णिता । धारणाशक्तिश्चापि इयम् । आद्याशक्तिरेव लीलया स्त्रीपुम्भावं गृहीत्वा स्वेच्छया स्वयोनौ चैतन्य बीजं निधाय सगुणं निर्गुणं ब्रह्मपरमात्मेति उक्ता । अनया प्रेरणया प्रकृतौ सप्तविकृतयः षोडश विकाराश्च संभवन्ति । अहं पदवाचिनी एषा शक्तिः आत्मना दशेन्द्रियाणि पंचतन्मात्राणि पंचभूतानि चापि आविष्करोति ।

पंचविंशतितत्त्वा सा जीवभूतानुप्रविष्टा[2] भगवत्येव निखिलं जगद्धारयति । उक्तंचापि "जीवभूतांमहाबाहो ययेदं धार्यते जगत्" ।

---

1- अहं ब्रह्मस्वरूपिणी मत्तः प्रकृति पुरुषात्मकं जगत् । शून्यं चाशून्यं च । अहमानन्दानानन्दौ । अहं विज्ञानाविज्ञाने (अहं ब्रह्माब्रह्मणी वेदितव्ये) अहम पंचभूतान्यपंचभूतानि । अहमखिलं जगत् । वेदो हमवेदो हम । विद्याहमविद्याहम् । अजाहमनजाहम् । अधश्चोर्ध्वं च तिर्यक्चाहम् । अहम रुद्रेभिर्वसुभिश्चरामि । अहमादित्यैरुतविश्वदेवैः । अहम-मित्रावरुणावुभौ बिभर्मि । अहमिन्द्राग्नी अहमश्विनावुभौ । अहं सोमंत्वष्टारं पूषणं भगंदधामि । अहम विष्णुमुरुक्रमम् ब्रह्माण-मुत प्रजापतिं दधामिं । इत्यादि । (देव्यथर्वशीर्ष)

2- श्रीमद्भगवद्गीता 7।5

एवं चैतन्यपरमात्मस्वरूपिणी महाशक्तिम् विना जडा प्रकृत्या इदं जगत्कार्यं असंभवम् ।

ब्रह्मविष्ण्वादि देवा: अस्यांशावतारा: सन्ति ते पि प्रतिकल्पे कदाचित् दुर्गा कदाचित् विष्णु: ब्रह्म, शिव, इन्द्र राम कृष्णादि रूपे संभवन्ति ।

एका शक्तिरेव विविध कल्पेषु विभिन्ननामरूपोपाधिरकृत सृष्टिसंधानम् करोति ।

श्रीमद्देवीभागवतपुराणे "सर्वं खल्विदं मेवाहं नान्यदस्ति सनातनम्" इति वचनेन आचार्या: महत्वं प्रतिपादितं ।

"परास्य[1] शक्ति: विविधैवश्रूयते" इतिउपनिषद्वाक्ये पि आचार्या महत्वं प्रतिपादितम् ।

ब्रह्माण्ड शरीरे आसैव चैतन्य स्वरूपिणी भाति । शक्त्या-भावे संसारे न किंचिद्वस्तु विद्यते । या शक्ति:[2] सैव परमात्मा च स्त-योर्मध्ये न कोपि भेद: । उभौ एकरूपौ चिदात्मनौ इति ।

---

१- श्वेताश्वतर उ०

२- चैतन्यं सर्वभूतेषु यद्विद्धि परात्मकम् ।
तेज:सर्वगं नित्यं नानाभावेषु नारद ।।
तं च तां च महाभाग व्यापकौ विद्धिसर्वगौ ।
ताभ्यां विहीनं संसारे न किंचिद्वस्तु विद्यते ।।
तौ विचिन्त्यौ सदा देहे विभिन्नौ सदा व्ययौ ।
एकरूपौ चिदात्मानौ निर्गुणौ निर्मलौ उभौ ।।
या शक्ति परमात्मा सौ सा यौ ऽसौ परमात्मना ।
अन्तरं नैत्ययो: को पि सूक्ष्मं वेद च नारद ।।
— श्रीमद्देवीभागवतपु० ३।७।१२-१५

जगद्व्यापिनी आद्याशक्तिरेव विभिन्नदेवतासु विभिन्नसंज्ञा संज्ञिता तन्मध्ये पराकुमारी एवंगौरी ब्राह्मी रौद्री वाराही वैष्णवी शिवा वारुणी कौबेरी नारसिंही वासव्यादि स्वरूपिणी च ।

जले शीतलता अग्नावुष्णता सूर्ये[1] प्रभा चन्द्रे आह्लादकत्वं गुणावधिंजिन्नर्वर्तिनी स्वैरिणी सा ।अनया विश्वब्रह्माण्डस्य शक्ति-तत्त्व दर्शने पि लिखितम् -

निर्गुण[2]: परमात्मा आद्याशक्तिराश्रित: । एषा परमात्मन: भोगदा भार्या च । यथा शिवविष्णुब्रह्मादिका: ब्रह्मण: औपाधिकस्वरूपा: तथैव पार्वती लक्ष्मी सरस्वत्यादय: शक्तेरौपाधिक स्वरूपाणि च[2] । श्रुतिस्मृतौ एषा शक्ति:माया प्रकृत्यादिशब्देन निरूपादिता ।

---

१- विकारेणै पि वदन्त्येवं पुराणै परिगीयते ।
द्रुहिणे सृष्टिशक्तिश्च हरौ पालनशक्तिता ।
हरे संहार शक्तिश्च सूर्ये शक्ति प्रकाशिका ।
धराधरणाशक्तिश्च शेषे कूर्मे तथैव च ।।
आद्याशक्ति: परिणता सर्वस्मिन् या प्रतिष्ठिता ।
दाह शक्तिस्तथा वह्नौ समीरे प्रेरणात्मिका
शिवै पिशवतां याति कुण्डलिन्या विवर्जिता ।
शक्तिहीनस्तु य: कश्चिदसमर्थ: स्मृतो बुधै: ।
एवं सर्वगताशक्ति: सा ब्रह्मेति विविच्यते ।
सोपास्या विविधै: सम्यक्विचार्य सुधियानघा
शक्ति: करोति ब्रह्माण्डं सा वै पालयते खिलम् ।
इच्छया संहरत्येषा जगदेतच्चराचरम् ।
न विष्णुर्न हर: शक्रो न ब्रह्मा न च पावक: ।
न सूर्यो वरुण: शक्ता: स्वे स्वे कार्ये कथंचन ।

एषा आद्या अव्याकृता परमाप्रकृति:[१] ।अस्मिन्नेव सत्वादि-गुणा: प्रतिष्ठिता:किन्तु तन्विकारेषु न अस्या संसर्ग: प्रतीयते । सर्वाश्रया अखिलमिदं जगदंशभूता भगवत्यैव आत्मशक्तीति निरूपिता ।

अस्या अतुलप्रभाववर्णने शेषमहेशब्रह्मादि देवतापि असमर्था: इयम् सुकृतिनाम् गृहे लक्ष्मीरूपा पापात्मना गृहे अलक्ष्मी-भूतात्मना हृदये बुद्धि -सत्पुरुषेषु श्रद्धा कुलीनेषु लज्जा भूता निवसति ।

एषैव ऋग्यजुसामवेदानां आधारभूता शब्दात्मिका इयमेवजगत्कारणा त्रिगुणा भूत्वापि दोषरहिता । निखिलेदं जगत् अस्या: एव अंशभूता समुपस्थित: । सर्वादिभूता अव्याकृता परमाप्रकृति: इयमेव । अचिन्त्यमहाव्रतस्वरूपा इयमेव तत्वसारैर्मुनिभि: मुक्तिहेतुउपासनीया ।एषा पराविद्या चाप्युक्ता ।

---

-----यथा युक्ताहि कुर्वन्ति स्वानि कार्याणि ते सुरा: ।
तैव कारणकार्येषु प्रत्यक्षेणावगम्यते ।।
-श्रीमद्देवीभा०पु०३।८।२८-३६

२- शक्तितत्वदर्शन पृ० १७-१८

२- याज्ञवल्क्यमुनौ यथा--

या सदा अचेतनं सचेतयति क्रीडोपयोगिता साधयति । यस्य शक्तौ उज्ज्वलता शोभाकार्यशक्ति: प्रकटति सैव दीप्ति ज्योति: शक्तिरस्ति ।

मनुस्मृतौ- शक्तिं केचित अग्निं केचित् प्रजापति केचित् प्राण केचित् ब्रह्मेति कथयन्ति ।

१- दुर्गा सप्तशती अ० ४।३-११

एषा त्रयी भगवतो विश्वोत्पत्ति पालनाय च वार्ता रूपे संभवति । इयमेव जगत्पीडानाशकरी दुर्गा प्रोक्ता । सकलार्थ ज्ञानदात्री मेधा अपि इयमेव । निखिल देवानाम् सामर्थ्यप्रकाशिका शक्ति इयमेव ।

एषा एव विषये छान्दोग्योपनिषदपि लिखितम्[१] - ब्रह्म: जीवभूता (मायोपहित चैतन्यस्वरूपे)नामरूपाणाम् रचना करोति

सौन्दर्यलहरीग्रन्थे श्रीशंकराचार्येणा पि लिखितम् -

"निखिल व्यक्तादीनि(पंचतत्वनिर्मितानि शरीरेन्द्रियाणि मनबुद्ध्यहंकारादीनि । शिवस्य प्रधाना अर्धाङ्गिनी आद्या जगदम्बाया: स्वरूपाणि सन्ति[२] ।

ऋग्वेदीय रात्रिसूक्ते चापि आद्या शक्तिम् ब्रह्ममाया परमेश व्याप्तिका प्रोक्ता एषैव कालरात्रि: महारात्रीति लोके प्रसिद्धा एतत्सूक्ते ताम् -जगदारिणी जगज्जीवनकारी समस्त ऐश्वर्यानाम अधिष्ठात्रीति वर्णिता[३] ।

---

१- छान्दोग्य उ० ६।३।२

२- सौन्दर्यलहरी ३५

३- ऋग्वेद मं० १० अ० १० सूक्त १२७ मंत्र १से ८ ।

ब्रह्मसूत्रे शांकरभाष्ये चापि शक्तिम् विना परमेश्वर:[1] नहि सृष्ट्युत्वं सिध्यति,नहि तया विना क्रियाशीलता परमेश्वरे इति लिखितम् ।

ब्रह्मवैवर्तपुराणे लिखितम्-

विश्वजननी मूलप्रकृतिरीश्वरीसृष्ट्योत्पत्ति काले आद्यामूला विराजति इयमेव स्वेच्छया त्रिगुणा भवति । यद्यप्येषा निर्गुणा तथापि प्रयोजनेन सगुणा भवति । परब्रह्मस्वरूपा सत्या नित्या सनातनी परमज्योतिरूपा भावनी भक्तानामनुग्रहाय विग्रहवत्येषा सर्वरूपा सर्वाधारा सर्वेश्वरी परात्परा सर्वज्ञ सर्वमंगला च ।[2]

शिवपुराणे प्युक्तम्-

आद्याशक्तिरेव परब्रह्मपरं ज्योतिर्गुणवस्वरूपिणी युगलरूपधारिणी सत्स्वरूपा च । जादि न किंचिद् तद्भिन्नं भासते । एषा साकारा निराकारा सर्वतत्वा अनर्घगुणयुक्ता च । इयमेव नित्या कार्यकारणरूपिणी । कदाचिदियम् प्राण वल्लभा स्त्री कदाचित् प्राणप्रिय: पुरुष: कदाचित् पुंस्त्रैणित्वरूपाउभया च । इयमेव सृष्टिकर्त्री ब्रह्मा जात्पालक:विष्णु: संहर्ता रुद्रश्चापि । काली लक्ष्मी सरस्वत्यादि शक्तय: तदंशभूता सकल कला वर्ति ।[3]

१- ब्रह्म सूत्र शं०भा० १।४।२

२- ब्रह्मवैवर्तपु०पृ०ख० २।६६।७-१०

३- शिवपु० उ०सं० ४६।२७।३०

एषा[1] आद्या सनातनी शक्तिः महामाया आद्येत्युक्ता । अनया मायया मोहिताः सर्वे परमात्मानं न जानन्ति । इयमेव रजस्सत्त्व-तमोपेता काले काले विश्वं सृजत्यवति पाति च ।

आद्या[2] एव त्रिलोक जननी देववन्दिता पराशक्तिश्चेति ।

<u>वायवीय संहितामपि लिखितम्[3]-</u>

परमेश्वरस्य स्वाभाविकी आद्या शक्तिः चिद्रूपा सा एकैव अनेकरूपा भासयति । यथैका सूर्यप्रभा विविध वर्णेषु भासयति तथैव तच्छक्ति इच्छा ज्ञानक्रियाभावापन्नैक रूपेषु विभाव्यते । यथाग्नौ विस्फुलिङ्गा संभवन्ति तथैव तच्छक्तितः ईश्वरः सदा-शिवः विद्या विद्येश्वराद्यः पुरुषः संभवन्ति च ।

अनया एव परात्परा प्रकृतिः महदादि विशेषपर्यन्ताः सर्वे विकाराः पृथ्व्यादि भूतयः संभवन्ति ।

निखिलेदं जन्यवस्तून्यपि तच्छक्तिकार्याणि सन्ति ।

एषा शक्तिः सर्वव्यापिनी ज्ञानानन्दरूपिणी सूक्ष्मा एतत्संबन्धेनैव शिवः शक्तिमानित्युक्तः सा विद्या शिव वैभवश्च । इयम शक्तिरूपा शिवा एव प्रज्ञा श्रुतिः स्मृतिः धृतिः स्थितिः निष्ठा ज्ञान-इच्छा क्रिया- आज्ञा परापरा शुद्ध विद्या शुद्धकला चेति ।

---

१- शिवपु० उमासंहिता अ० २८

२- शिवपुराण रुद्र सं०अ० ६

३- शिवपु० वा०सं० अ० ७

मायाप्रकृति जीव विकृति: यत्किंचित्सदसदात्मकम् जा-
विभाति तत्सर्वं सततं व्याप्तम् ।

एषा अनाद्यासैव लोल्या मोहपाशं सृजति छिनत्ति च ।

विष्णुपुराणे एषा या पराप्रकृति: वैष्णवी शक्तीति प्रोक्ता यथा--

जगत्कारणाशक्ति: असंख्येया अपरिमेया अनन्ता परा प्रकृतिश्चेति । शतसहस्राणि ब्रह्माण्डानि तस्यामेव निहितानि सन्ति यथा काष्ठेष्वग्नि: निलेषु तैलं तथैव स्वप्रकाशचेतनात्मा व्यापक: पुरुष: प्रधाने सन्निहित ।[1] संश्रयशालौ प्रधानपुरुषौ सर्वभूतात्मतया विष्णुशक्त्या आवृतौ ।

एषा शक्तिरेव तद्संश्रयस्य पृथग्भावस्यापि कारणा सर्गकाले एषा स्वदाभिकारणा च । यथा जलसंसर्गेन वायु: कणिका शतं बिभर्ति तथैव विष्णुशक्ति प्रधानपुरुषात्मकमिदं जगद् बिभर्ति । यथा आदिबीजादेव मूलस्कन्धशाखादिसंयुत: पादप: अन्यबीजानि च संभावन्ति ततस्तेभ्य: तत्तत्कारणद्रव्यकारणानुगता अपरे द्रुमा: प्रभवन्ति, तथैव अव्याकृतशक्त्या महदादारभ्य पंचभूतानि सर्वेतासुरमानवा: संभवन्ति च ।

---

१- विष्णुपुराण २।७।२६-३४

अन्यच्च- शक्तिभेदे लिखितम्-

विष्णुशक्ति परा प्रोक्ता अपरा क्षेत्रज्ञ संज्ञका
कर्मसंज्ञा अविद्येति -

अविद्यावेष्टितः[1] क्षेत्रज्ञः नाना सांसारिक तापाननुभवति । विभिन्न योनिषु भ्रमति च ।

सर्वेषु भावपदार्थेषु विभिन्ना शक्तयः सन्ति येषाम-चिन्तने न वयमसमर्था अग्नावुष्णत्व[2] जले शीतत्वमिव ज्ञानगोचराः एषा सर्वापि भावशक्तयः सन्ति ।

माया सनातनी नारायणी परम पुरुषस्य परमाशक्तिः[3] । अनया शक्त्या विना ईश्वरः सृष्टिकार्ये असमर्थः । एषा एव माया यया जगद्विमोहितम् । अस्याः प्रकृतेर्कलाभिः स्त्रियः आविर्भूता ।

पूर्णब्रह्मस्वरूपा मूलप्रकृतिः[4] एकैव किन्तु सृष्टिकाले सा पंचधा भवति । राधा लक्ष्मी, सरस्वती गायत्री दुर्गादयः तत्स्वरूपाणि सन्ति ।

---

१- विष्णु पु० ६।७।६१-६२
२- विष्णु पु० ६।२।२२
३- ब्रह्मवै०पु० प्र०ख० ३०।१२-१३
देवी भा०पु० ९।१(५८-५९
४- ब्रह्मवै०पु०प्र०ख० ३०।१८-२१
श्रीमद्देवीभा०पु० ९।१।१२-१६

प्रकृतौ प्रशब्द: प्रकृष्ट सत्वावबोधक: तथा कृशब्द: मध्यम रजोगुणावबोधक: तथा ति शब्द: तमोगुणार्थावबोधक: भवति। एषा सर्वशक्तिसम्पन्ना त्रिगुणा सृष्टेर्प्रधानभूतत्वात् प्रकृतिरिति तथा सृष्टेरादिकारणभूतत्वात् आद्येति [1]।

सर्वावस्थां गता स्वात्मभूतानपायिनीं सनातनीं परमाशक्तिम् लक्ष्मीतंत्रे हिमदीधिते ज्योत्स्ना इव ब्रह्मण: अकुर्वत्युक्ता [2]।

इयमेव कल्याण गुणशालिनी पारवैष्णवी नारायणी सदा वाप्युक्ता [3]।

अनाद्यविनाशिनी अनिर्वचनीया सर्वशक्तिमयी परमेश्वरी आद्या महाशक्तिरेव परमात्मामाया: विभिन्नरूपेषु लीला करोति। अस्या: एव पुष्टीयका: परमात्मस्वरूपा:।

---

१- ब्रह्म वैं०पु० कि० प्र०ख० २।५-८

२- तस्य या परमा शक्तिज्योत्स्नेव हिमदीधिते।
सर्वावस्थां गता देवी स्वात्मभूतानपायिनी।
अहन्ता ब्रह्मणस्तस्य साहमस्मि सनातनी ॥ (लक्ष्मीतंत्र २।११-१२)

३- नित्यनिर्दोषनिस्सीमकल्याणगुणशालिनी।
अहं नारायणीनाम सा सत्ता वैष्णवी परा ॥
–लक्ष्मीतंत्र ३।१

एषा महाशक्ति: यदा स्वमायाशक्तिम् स्वान्तनिरुध्य निष्क्रिया भवति तदा सा शुद्ध ब्रह्मस्वरूपा । यदा सा स्वेच्छया विकास मिच्छन्ति एकाहं बहुस्यामिति संकल्प्य स्वास्यां योनौ पुम्भावेन चैतन्यबीजं स्थापयति तदा सगुण: पुरुष: इति ।

इयमेव स्वशक्त्यागर्भादिभूत विकृतेरिव क्रमश: महदादि विशेषपर्यन्तानि अहंकारमनबुद्धयेन्द्रियाणि तन्मात्राणि पंचभूता-दीन्युत्पादयति ।

एवम सा स्वप्रकृतियुता चतुर्विंशति तत्वात्स्थूला इदं जगद् रूपिणी भाति ।

जीवस्वरूपे सा स्वयं पंचविंशति तत्वे अनुप्रविष्टा जा क्रीडनकं क्रीडति । चित्परमात्मस्वरूपिणी महाशक्तिविना मात्र जडप्रकृत्या जगत्कार्यमसंभव: ।

एषा एव विश्वरूपा विराटपुरुश्च तथा सर्गस्थूल निपातिप्रजापतिस्वरूपे इयमेव स्वांशभूता ब्रह्मविष्णुरुद्रानेकोपाख्य: स्वीकरोति ।

एषा महाशक्ति: अनन्तब्रह्माण्डेषु असंख्याताब्रह्मविष्णु महेशाख्या भवति तथा च स्वमायया स्वाम निगुह्य जीवसंज्ञा संज्ञिता । एषा एव ईश्वरजीवजगद्रूपिणी भवति सैव एतान् आविष्करोति । सैव व्याप्ता भोक्ता भोग्यरूपाभाति च[१] ।

---

१-शक्तिउपासना के महत्त्वपूर्ण सूत्र ले०हनुमानप्रसाद पोद्दार शक्ति उपासना अंक गीताप्रेस ।

सृष्टुः सृष्यस्यानुसंधानकारिणीशक्तिरेव कार्यकारणरूपा मायाख्या[1]। भावाभावरूपा अनिर्वचनीया अनया मायया एव भगवान् जगत्कार्यं करोति।

जगत्कारण चिन्तनप्रसङ्गे उपनिषदि लिखितम् यत्-[2] यया जगदिदं व्याप्तम्। यत्सामर्थ्यवशेन परमेश्वरः महाकाल संज्ञा संज्ञितः। यत्स्वरूपभूता विन्ध्याः निखिलगुणाः याँ निखिलब्रह्माण्डनायकता यत्संचालितमिदं जगच्चक्रम् नियमेन चलति। यत्सामर्थ्य वशेन पंचभूताः सनियमेन स्वकार्यकरणे समर्थाः तच्छक्तिम् बिना एते न किंचदपि करणे समर्थाः।

केनोपनिषदि यत्प्रसङ्गे एता शक्तेर्महत्वं निरूपितम्। एषाद्या शक्तिरेव मूलप्रकृत्या पंचमहाभूतान्निमार्य ता निरोक्षणेन चैतन्यसंयोगम् कृत्वा अनुभवशालिविविधाकारजातीः सृष्टिः सर्जिता। आदिकारणा एषा प्रकृतेर्जीवसंयोगात् कारस्यापिकारणा चाप्युक्ता। कालस्यापि ग्रासकारिणी (महाकाली) अरूपा जगदधिष्ठात्री एषा निरिन्द्रियाभूत्वापि इन्द्रियव्यापारसंचालिका। नान्यः कोऽपि अस्याः तेऽ समर्थः। इयमेका एव प्रपंचविस्तारेच्छया ज्ञानबलक्रियादिरूपेषु स्वमुपस्थापयति च। एषा वर्णनप्रसङ्ग तैत्तरीय ऐतरेय छान्दोग्ये बृहदारण्यके निरूपितः[3]।

---

१- श्रीमद्भागवत पु० ३।५।५
२- श्वेताश्वतर उ० ६।२-८
३- तै०उ०ब्रह्मानन्दवल्ली अनुवाक १ तथा ६
ऐतरेय उ०अ० १ खण्ड ३
छान्दोग्य उ० ६।२-३
बृहदारण्यक उ० १।२

आद्या शक्तिः निराकारभूतापि सृष्ट्यादौ तरहस्य प्रयोजनेन नाना शक्ति सम्बन्धनेन बहुरूपा भवति, तथा काले च तान् ग्रसति ।

ऊर्णनाभिर्यथा[1] स्वप्रकटित तन्तुजालेन स्वमाच्छादयति तथैव एषा अचिन्त्य शक्तिः स्वोत्पन्न विविध कार्येभ्यो स्वभावेन स्वात्माच्छादयति च ।

एषा शक्तिरेव परमेश्वरी वा परमेश्वर शब्देन अभिहिता । विश्वोत्पत्ति पालनसंहारादि कार्याणि तदाधीना जगद्रूपे अस्या स्थितिः । एषा आहत्स्वरूपा च । जगदोत्पत्ति विनाशादि क्रियायामस्याः परिवर्तनं न भवति । एषा एव लोकपालानां अन्तर्यामिनी अन्तर्वर्तिनी शक्तिश्चेति ।

निखिलब्रह्माण्डानां नियन्ता रचिका संचालिका चेयम् जगतशासनकार्ये समर्था । इयमेव सर्वज्ञा सर्वमंगला परिपूर्णा परमेश्वरी च ।

जीवानाम् प्रति अहैतुकी कृपाप्रदर्शनाय इयमेव कर्मानुसार अतः सृष्टिस्थितिसंहारादि विविध कृत्यं करोति । स्वयं कालानुसृत्य आविर्भवति नान्यः तद्व्यतिरिक्तः एषा अद्वितीया परमेश्वरी ।

---

१- श्वेताश्वतर उप० ६।९-१०

'अहमादिश्चभूतानाम' इत्यादि स्मृति वाक्यैः एषा स्तुतिः सम्पादिता ।

देव्यथर्वशीर्षे 'यस्याःपरतरं नास्ति' इतिवाक्येन आद्यायाः महत्वं निरूपितम् । सृष्ट्यादौ एका देवी एव आसीत् । तया एव ब्रह्माण्डोत्पत्तिरभवत् ।

तथैव ब्रह्मविष्णुरुद्राणां समुत्पत्तिश्च । गन्धर्वकिन्नराप्सरसः मरुद्गणाः समस्तभौतिकपदार्थाः स्थावरजंगममनुष्यादिप्राणिमात्रजनाः सर्वे तच्छक्तिना समुत्पन्नाः । एवम् सा शक्तिः ।

श्रीमद्देवीभागवत्पुराणेप्येवमाशयः प्रकटितः यथा-

आदौ एकमात्र अहमेवासमिति । मत्तः परतरः अन्यकिंचिदपि न आसीत् । तदा तत्स्वरूपं चेतनं विज्ञानमयं आनन्दमयं अद्वितीयं परमब्रह्मेति आसीत् । अनेन एकाशक्तिः स्वयम् संजाता सा माया सैवेत्युक्ता । तया माया शक्तिना निखिलेदम् रचना संभूता ।

परमार्थदृष्टौ एषा माया चोक्ता तत्वदृष्टौ नान्यः पृथक्सत्ता एका केवला तस्यामेव समस्त चराचराः ओतप्रोताः । ईश्वरःसूत्रात्मा विराटात्मा च सैव । यत्किंचिद् वस्तुसत्ता दृक् श्रवणगोचराः तत्सर्वम् तस्मिन्नेव व्याप्य संस्थिताः । नान्यः वस्तुसत्ता तद्भिन्ना ।

---

१- बहवृचोपनिषद्

२- श्रीमद्देवी भा०पु० ७।३२।२-३

एषा परब्रह्मस्वरूपिणी भगवतीऽभया सगुणा निर्गुणा चेति।

ब्रह्मसूत्रे प्युक्तम्-

सर्वोपेता च तद्दर्शनात्[1] इति।

शिवपुराणे पि लिखितम्-

माया अद्वितीया चिन्मयी पराशक्तिः शिवाश्रिता। सा दिव्यगुणसम्पन्ना सर्वेश्वरपरमात्मानुरूपा शिवस्य सहधर्मिणी उच्यते। शिवेच्छया सा नानाविधि शक्तिमाया विश्वं रचयति। एषा शक्तिः माया मूलप्रकृतिः त्रिगुणा त्रिभेदा चाप्युक्ता।

शिवस्थानस्था अस्य संसारस्य विस्तारं करोति। व्यवहारभेदेन एकः एव शतसहस्रादि बहुभेदाः तस्याः एव भवन्ति।

शिवेच्छया पराशक्तिः शिवेन सह एकत्वं प्राप्नोति। तदा एव कल्पादौ सृष्टिक्रमः प्रादुर्भवति।

यथा तिलेषु तैलं तथैव शक्तिमतः शम्भोः क्रियामयी शक्तिः संभवति। तद्विधुर्वे सति आदौ नादोत्पत्तिः नादाद् बिन्दुः, बिन्दुना महेश्वरः महेश्वरात् शुद्धविद्या भवति। एषा वागीश्वरी विद्या वर्णरूपेषु विस्तारं प्राप्नोति एषैव मातृकाशक्ति संज्ञाख्या।[2]

---

१- ब्रह्मसूत्र २।१।३०

२- शिवपु० वा०सं०उ०स०४।१३-२४

ततः अनया समावेशेन मायया कालम् नियतिम् कलांविद्याश्च आविष्कृतः ।अथवा राहुस्वपुरुषस्य मायया त्रिगुणा अव्यक्ता प्रकृतिरजायत ।अव्यक्तप्रकृत्या सत्वरजतमादि पृथक्गुणाः अजायत । तेन गुणेन निखिलेदम् जगत् व्याप्तम् संजातम् ।

गुणानामेभिपरिणामैनैवत्रिगुणैश्मूर्तिः तत्त्वादीनिमहदादि तत्त्वानां आविर्भावोऽपि क्रमशः संजातः ।

तत्त्वैः असंख्याता अंडपिंडाद्याः आविर्भूताः ।स्थूलसूक्ष्म विभेदेन शक्तेरनेकरूपभेदाः भवन्ति । एषारूपभेदे रुद्रशक्तिरुद्राणी ब्रह्मशक्तिब्रह्माणी विष्णुशक्तिर्वैष्णव्यादिनेकभेदा जायन्ते ।

शरीरे आत्मायथा तथैव निखिलेदं जगत शक्तिव्याप्तमेव वर्तते ।

एषा आपराशक्तिः परमात्मः शिवस्य कर्तृत्वयुक्ता तथा एषा स्व ईश्वरेच्छया चराचरजगतोः सर्जनं करोति । आभ्या शक्त्या भावे निर्गुणः शिवः ब्रह्म् वा संसारकार्ये असमर्थः । यथा चन्द्र चन्द्रिका विना न भाति ।भानुः प्रभा विना न भाति । तथैव शिवोऽपि शक्त्या विना न भाति लोके[1] ।

---

१- चन्द्रो न खलु भात्येष यथा चन्द्रिकया विना ।
न भाति विद्यमानोऽपि तथा शक्त्या विना शिवः ।
प्रभया हि विना यद्वद्भानुरेष न विद्यते ।
प्रभा च भानुना तेन सुतरां तदुपाश्रया ।।
एवं परस्परापेक्षा शक्ति शक्तिमतोः स्थिता ।
न शिवेन विना शक्तिर्नशक्त्या च विना शिवः ।।

–शिवपु०वा०सं०उ०स०४। १०–१२

यदा निर्विकारं ब्रह्म आप्रकाशनाय वांछति तदा स्वलीलया स्वमूर्तिमकल्पयत् । एषा मूर्तिः सकलगुणैश्वर्यमयी ज्ञानमयी शुभस्वरूपा सर्वव्यापिनी सर्वरूपा सर्वदर्शिनी सर्वकारिणी सर्ववन्द्या सर्वाधारा चासीत्[1] ।

एषा स्वरूपभूता शक्तिः पराप्रधानप्रकृतिः गुणवती माया बुद्धिजननीचर्चिता ।

एषाम्बिका सर्वेश्वरी त्रिदेव जननी नित्या मूलकारणा अष्टभुजा चापि ।

विचित्रैयम् सुन्दरी एषा सर्वयोनिषु आविर्भूता कथ्यते । इयमेका शक्तिः माया सर्वांगैन विभिन्नाकार जगत् रचनाम् करोति ।

ब्रह्मानन्दधारिणी एषा परा शक्तिः । अस्याः स्वमूर्तिः सदाशिवः । अर्वाचीन पराचीनैः बुधजनैः एषा ईश्वरपदे प्रतिष्ठितः ।

कैलाससंहितायामपि लिखितम् -

शिवशक्ति संयोगादेव परमात्मा संज्ञा । शिवस्य या पराशक्तिः तस्या चिच्छक्तिः चिच्छक्त्यात्मया आनन्दशक्तिराविर्भवति आनन्दशक्त्या इच्छाशक्तिः इच्छया ज्ञानशक्तिः ज्ञानशक्त्या क्रियाशक्तिरभवत् । एवम् निवृत्यादिकलाः संजाता । चिच्छक्त्या नादः

१- शिवपु० रु०सं०प्रथम सृ०खं० ६।१२-२४

आनन्दशक्त्याबिन्दुः अजायत । इच्छया मकारस्य ज्ञानशक्त्या उकारस्य क्रियया अकारस्योत्पत्तिः अभवत् ।

आदधार प्रणवेन मूलभूता: स्वरव्यंजनादय: आविष्कृत:। कलोत्पत्तिक्रमे-

ईशानेन शान्त्यातीता कला, तत्पुरुषेण शान्तिकला अघोरेण विद्या कला, वामदेवेन प्रतिष्ठा तथा जातेन निवृत्तिकला जाता: । शक्त्यासहेशानेन मिथुनपंचकस्योत्पत्तिः एते अनुग्रहतिरोभावसंहारस्थितिसृष्टिश्चेति । वाच्यवाचक सम्बन्धेन ते मिथुनत्वं गता: । कलावर्णरूप तत्पंचके भूतपंचकस्याधिगणना । आकाशादि क्रमेण तत्पंचकस्योत्पत्ति: । पंचभूतानां विस्तारमेव प्रपंच: ।

या सर्वसमष्टि: तदात्मकैव विराटेति । पृथिव्यादारभ्य शिवपर्यन्ता ये तत्त्व समुदाय: ते एव ब्रह्माण्डम् । तत्त्वसमूहे क्रमश: लीना: ते अन्ते बीजभूता चैतन्ये लयन्ति । सृष्टिकाले ते पुन: शक्त्या शिवोद्भूत: प्रपंच: प्रलयावधि सुखेन तिष्ठति ।

स्वेच्छया गात्राणि यो महेश्वरस्य प्रथमस्पन्द तत्शिव-तत्त्व: तदेव इच्छाशक्तितत्त्वश्च ।

उभयो: ज्ञानक्रियाशक्त्यो: यदाज्ञानाधिक्यम् तदा सदाशिवतत्त्वम् । यदाक्रियाशक्त्युद्रेक: तदा महेश्वरतत्त्व:तयोभयसमानपदे शुद्धविद्यातत्त्वमन्तव्य: ।

---

१- शिव पु०कै०सं० अ० १६

परमेश्वराद्भिन्ना समस्त भावपदार्थाः तन्मध्ये या भेद बुद्धि सैव माया । मायया विहीनः शिवः यदा निखिलपदार्थग्राही दृश्यते तदा पुरुषोत्युक्तः । तत्सृष्ट्वा तदेवानु प्राविशत् इति श्रुत्या सृष्टिकार्ये माया एव जगत्कारणा ।

<u>वायुपुराणे पि लिखितम्-</u>

सदसद् यत्पूर्वमवस्थितं अव्यक्तमेव कारणं वर्तते । अतः तद् प्रधानप्रकृतिम् गन्धवर्णादिशून्यं स्पर्शरहितं नित्यं आद्यादि कारणं आद्यन्तरहितं सनातनं महद्भूतं प्रलयस्थानं निखिलोत्पत्ति कारणं निर्गुणमविशेषं ब्रह्मरूपैव मन्यन्ते । तदात्मना एव इदं सर्वमिदं जगद्व्याप्तं वर्तते ।

सृष्टिकाले क्षेत्रज्ञस्थापनया गुणाद्यन्महदजायत् । यो सो अव्यक्तावृतमासीत् ।

सर्वेच्छया महदेव सृष्टिं करोति । ब्रह्मा भू मतिख्याति-ईश्वरप्रज्ञा चितिस्मृति संविदादयः एषाम नामानि च । सत्व-रजतमोभिः त्रिगुणमस्य संकल्पाध्यवसायात्मिका उभया वृत्ति । महदि रजोगुणाधिक्येन अहंकारः तेन भूततन्मात्राणि तथा सात्विकाहंकारेण ज्ञानेन्द्रियकर्मेन्द्रियमनसादिनाम उत्पत्ति अभवत महदाद विशेषपर्यन्तमुभयात्मको जातः तदा अव्यक्तानुग्रहेण अण्डस्योत्पत्तिः संजातः ।

---

१- वायुपु०अ० ४-५ साहित्यसम्मेलन प्रयाग प्रकाशन ।

प्रकृतिसंभव: परमेश्वर: स्वयोगेन तदण्डे अनुप्रविश्य प्रधान-प्रकृतिम् पुरुषं च क्षोभयति। गुणसाम्यपरिणामेन रजोगुणो ब्रह्मा तमोगुणो अग्नि: सतोगुणो विष्णु: तथा त्रिगुण त्रिलोकवेदत्रयो त्र्यग्न्यादिकाश्च संजाता:। एते अन्योन्याश्रित: अन्योन्य सह-कारिणश्च। ईश्वर: परदेवता विष्णु महादात्परं ब्रह्मसृष्टि कर्तेति उक्ता पुरुष: परमेति प्रकृति: परा इति चोच्यते।

परमेश्वराहन: सृष्टि: प्रलय रात्रिरुच्यते। वस्तुतस्तु गुणसाम्ये प्रलय: तथा वैषम्य सृष्टिर्भवति। एवम् सृष्टेर्प्रधानकारणा शक्तिरिति।

श्रीमद्देवीभागवते लिखितम्-

एषा भगवती देवाधिदेवेभ्यो आरभ्य निखिलभूतप्राणि-नामादिकारणा अतएव आद्या इति। एषा महाविद्या महामाया पूर्णाप्रकृतिश्चापि संज्ञिता। गहनाश्यादेवी ईश्वरेच्छाप्युक्ता, इयम् विश्वेश्वरी वेदगर्भा शिवा चापि।

सर्वस्याद्याजगन्येषा प्रलये समस्तभूतलिङ्गान् स्वशरीरे निवेश्यलोकान् व्यति च।

---

१- श्रीमद्देवीभाग०पु० ३।३।५१-६१

मूलप्रकृतिरेषा सर्वदा पुरुषसहकारिणी एवंच रचना काले पुरुषसवाम प्रदर्शयति ।

इदं चराचरं विश्वं दृश्य रूप:,पुरुष: दृष्टा तथैषा परम् पुरुषस्यादि शक्ति: महामाया सर्वविधात्री च ।

अन्यच-

या भावतो संसारोत्पत्तिकारणा तथा या सृष्टिस्थिति-संहारानुग्रह तिरोभावादि कृत्यानां नियामिका सैव सर्वाधिष्ठानमयी भुवनेश्वरीत्युक्ता[१] ।

यस्मिन् निखिलेदं जगत्सन्निविष्ट: सा एव संहारकारिणी चापि । इयमेव जगद्व्यापिनी आधारशक्ति: यया विना पुरुष: जगत्कार्ये अशक्य: ।

एषा शुद्धरूपाभावत्या निखिलेदं जगदुद्भासते उक्तं यथा-"तमेवभान्तमनुभाति सर्वम्" इत्यादि ।

अनया नुग्रहेण एव ब्रह्मविष्णुरुद्रादय आविर्भवन्तितिरो-भवन्ति च । इयमेव नित्या जगज्जननी सनातनी प्रकृतिश्चेति ।

---

१- श्रीमद्देवीभा०पु० ३।४।२८-४२

नारदपुराणे पराशक्ति: स्वरूपे आचावर्णनं यथा-

या भगवत: विष्णो: पराशक्ति: सैव जगत्प्रधाना । तदेव भावाभावस्वरूपिणी । एषा भावार्थे विद्या अभावार्थे अविद्या च । यदेदं जगत्भिन्नं भासते तदा अविद्या यदा ज्ञाताज्ञानज्ञेयरूपो-पाधि: नष्टा मात्र शक्तिमानेव बुद्धौ अविष्टा तदा विद्या भास: ।

अभेदबुद्धिरेव विद्या । भिन्न भेदकरी जन्ममृत्युवादि बन्धकारी माया शक्ति: अविद्येति । तदेव अभेद बुद्धया बन्धनाशकारी चापि ।

शक्त्योत्पन्ननिखिलेदं चराचरं जगत् भिन्नं प्रतीयते - यथा घटाकाश महाकाशादि आकाशभेदेन भिन्नं भासते -तथैव अविद्योपाधिभेदेन तेऽपि भिन्नं भासते ।

यथा मोदाहिकाशक्ति स्वाश्रये व्याप्य तिष्ठति तथैव मायाशक्तिरपि तुल्य व्यापिका भवति ।

एषा पराशक्तिरेव लोके सृष्टिस्थितिलयादिहेतुभूता[१] भूय व्यक्ताव्यक्तस्वरूपेण निखिलेदं व्याप्य तिष्ठति ।

अथर्ववेदस्य श्रुतिरप्युक्तं तत द्वैविध्ये वेदितव्ये परापरश्चेति परया निर्गुणस्य अपरया सगुणपरमात्मन: प्राप्तिर्भवति । यो

---

१- नारदपुराण पू०भा०पू०पा०अ० ३ गीताप्रेस

अव्यक्तं अविनाशिनं अनिर्देश्यं अजरं अनौपम्यं निश्चेष्टं नित्यं अगतं व्यापकं शून्यं सेवादिकारणं कारणादितिंवापि । यथा निखिलेदं जगत्प्रसूते यथा विविधा वस्तव: व्याप्ता व्याप्या च तदेव परमं ब्रह्म यं ज्ञानिन: ज्ञानदृष्ट्या पश्यन्तीति च ।[1]

विवेक चूडामण्यां नापि लिखितम्-

एषा अव्य नाम्ना त्रिगुणात्मिका पराशक्त्या एव जगत्प्रसूयते । एषा सदसदात्मिका उभया च । इयमेव अनिर्वचनीया माया सर्पभ्रमो रज्जुविवेकत: जगत्सत्यं प्रतीयते ।[2]

---

१- संक्षिप्त नारदपु० पू०भा० प्र०पा०पृष्ठ १५४

२- अव्यक्तनाम्नी परमशक्तिरनाद्यविद्या त्रिगुणात्मिका परा ।
कार्यानुमेया सुधियैव माया, यया जगत्सर्वमिदं प्रसूयते ।।
सन्नाप्यसन्नाप्युभयात्मिकानो, भिन्नाप्यभिन्ना प्युभयात्मिकानो ।
साङ्गाप्यनङ्गाप्युभयात्मिकानो, महाद्भुतानिर्वचनीयरूपा ।
शुद्धाद्वयब्रह्मविबोधनाश्या, सर्पभ्रमो रज्जुविवेकतोयथा ।
रजस्तम: सत्वमितिप्रसिद्धा गुणा स्तदीया प्रथितै:स्वकार्यै: ।।
-विवेकचूडामणि ।

महानिर्वाणतंत्रे पि लिखितम्-

परंब्रह्मण: पराप्रकृत्या एव जगत्प्रसूति- एतदेव एषा जगज्जननीत्युक्ता ।

एषा आद्या अस्माकं तथा सर्वविधानामपि जन्मभू एषा एव काली तारा दुर्गा षोडशी भुवनेश्वरी धूमावती बगला भैरवी छिन्नमस्तान्नपूर्णा वाग्देवी कमलादि सर्वशक्ति-स्वरूपा सर्वदेवमयी चेति ।

एषा साकारा निराकारा स्थूलसूक्ष्मा अव्यक्ताव्यक्त स्वरूपिणी चैव[१] ।

कुलार्णवतंत्रे पि लिखितम्-

पराशक्ति: शिवे कुलणिवा तथैवस्थिता यथा- बीजे अङ्कुर: तिलैतैल: अगनावुष्णं रवौप्रभा चन्द्रेज्योत्स्ना काष्ठे नल: पुष्पेगन्ध: जलेद्रव: शब्दे अर्थ: दारैसर्पि: शर्करायाम् माधुर्यम् घनसारे शीतलम् दर्पणेप्रतिबिम्बम् समीरेचलनं इति ।तथा

---

१- त्वं परा प्रकृति: साक्षाद्ब्रह्मण: परमात्मन: ।
त्वत्तो जातं जगत्सर्वं त्वं जगज्जननी शिवे ।।
महदाद्यणुपर्यन्तं यदेतत्सचरा चरम् ।
त्वयैवोत्पादितं भद्रे त्वदधीनमिदं जगत् ।।
त्वमाद्या सर्व विद्यानाम स्माकमपिजन्मभू: ।
त्वं जानासिजगत्सर्वं न त्वयं जानाति कश्चन ।
त्वं काली तारिणी दुर्गा षोडशी भुवनेश्वरी ।
धूमावती त्वं बगलाभैरवी छिन्नमस्तका ।
त्वमन्नपूर्णा वाग्देवी त्वं देवीकमलालया ।

तस्याम जगत् प्रपंचो[१] पि तथैव तिष्ठति यथा वटबीजे वृक्ष: सूक्ष्म-रूपेण तिष्ठति।

शारदातिलकाख्य ग्रन्थे पि लिखितम्-

आनन्दविमर्षेन सकलेन परमेश्वरेण शक्ति: समुत्पन्ना। पुन: तच्छक्तितो नादोद्भव: नादाद् बिन्दुसमुद्भव: पराशक्ति पूर्णमिदं सदास्ति पुनस्त्रिविध: अजायत्। तद्भेदा: बिन्दुनादबीजाख्या:। बिन्दु: शिव: बीजाश्चनादश्च उभयो: बिन्दुनादयो: परस्पर समवायेन ज्येष्ठाजाता इयमेव वामा उक्ता। पुनश्च तेन ब्रह्मविष्णु रुद्रादय: समुत्पन्ना संजाता।

इच्छाज्ञानक्रियारूपो तथाग्निसोमसूर्यस्वरूपो पराबिन्दुना एको अव्यक्त: ख संज्ञक: आकाश: सम्भूत:। आगम विशारदैस्त्यो तच्छब्देति निगदित:। निखिल प्राणिनाम् चैतन्यो यम् शब्दब्रह्मम्। इयमेव प्राणिनाम्देहस्थिता कुण्डलिनी वर्ण भूता नवपद्मभेदेन आविर्भवति।

---

१--- सर्वशक्तिस्वरूपात्त्वं सर्वदेवमयी तनु:।
-महानिर्वाणतंत्र ४। १०-१५)

१- कुलार्णवतन्त्र २। ५२-५६

ततश्च सर्वव्यापोजितत्वात्सदाशिवः कालबन्धुः कलारूपः बिन्दुभूतः अजायत। तेन बीजः पुनश्च रुद्रःसमुद्भवः।

सा परारव्यामूलभूता अव्यक्ता (प्रकृतिः) तद्विकृतिभूतत्वाद् महदजायत् तन्महदेन त्रिविधि त्रिगुणो हंकारश्च जायते। वैकारिकेन अहंकारेण दशदेवता पंचतन्मात्रा पंचज्ञानेन्द्रियाणि कर्मेन्द्रियाणि पंचभूतानि च जज्ञिरे। नादभेदेन निवृत्यादिकला संजाता।

परापरविभागा एषा शक्तिरेव चैतन्या सर्वस्थिता विश्वरूपिणी शिवा नित्यानंदा गुणोद्भवकरी दिक्कालावच्छिन्ना सर्वदेहानुगामिनी शुभा वीक्ता। तयैव निखिल संसारोत्पत्ति अजायत। श्रीमद्भागवतात्रियामपि लिखितम्[१]।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति।

महाभागवतदिशा आद्यायाः परिचयः:-

श्रीमहाभागवतपुराणे आद्यापरमात्मस्वरूपिणी प्रकाशतीति निगदिता।

प्रथमे अध्याये आद्यायाः महत्त्वप्रकाशने उक्तं या मुदा जादम्बा सनातनी मूलप्रकृतिः सा सादात्म्यब्रह्मस्वरूपा तथा

---

१- शारदातिलक पृ०प० ७-१२

ब्रह्मविष्णुशिवादि देवानाम् देवता च सैव स्वशक्तिभिः सान्नास्य सृष्ट्यादि कार्याणाम् प्रकाशिका भाति ।

एषा माहेश्वरी एव कोटिकोटिब्रह्माण्डानाम् तद्वासिनां च तथा सर्गस्थितिलयादि कार्याणामधिष्ठात्रीति निगदिता । यथार्थेन अरूपा तथापि लोकरंजनाय लीला वपुं धारयति ।

आदौ इदं जगत् अहोरात्र्यादिरहितं अनर्कं अनाग्निकं अपिण्डमुक्तम् शब्दस्पर्शादिरहितं तेजविम्बवर्जितमासीत् । तत्काले एकं तद्ब्रह्मेति इति श्रुत्या निरूपितम् सच्चिदानन्दविग्रहा शुद्धज्ञानमयी नित्यादुर्विज्ञेया योगगम्या वाचातीता सुनिष्कला निरुपद्रवा स्थूलसूक्ष्माभिरुज्झिता सर्वव्यापिनी एकाप्रकृतिरेव वर्तते ।

एषा परा प्रकृतिरेव आद्या या रूपरहितास्त्वापि स्वेच्छया लीलया वा जगत्रूपं प्रकाशते । एषा दुर्गा संज्ञाप्याख्या[1] ।

---

१- यदन्तःस्थानि भूतानि यतः सर्वं प्रवर्तते ।
यदाहुः तत्परं तत्त्वं साक्षाद्भगवतो स्वयं ।
या यशैरखिलैः सर्वैरीश्वरैण रूपाभिव्यज्यते ।
यतः प्रमाणं हि वयं सैका भगवतीस्वयम् ।।
ययेदं धार्यते विश्वं योगिभिर्या विचिन्त्यते ।
ययेदं भासते विश्वं सैका दुर्गा जगन्मयी ।
यां प्रपश्यन्ति देवेशीं भक्त्यानुग्रहिणो जनाः ।
तामाहुः परमं ब्रह्म दुर्गां भगवतो पुमान् ।।

—महाभागवतपुराण १।२५-२८

अनन्तगुणप्रभावा अस्या: वर्णने न को पि जादि समर्थ:- हरि: अनया आराधनेनैव दुर्धान् दैत्यान् जित्वा त्रैलोक्य रक्षणे समर्थ: [1] ।

तस्मादद्भुतं बुद्धि कृत्वा शम्भुरपि संहारकार्यं करोति । यस्यानुग्रहफलेन शिव: कालकूटविषम पीत्वा मृत्युंजय: तत्त्र्यंबकाख्या भगवत्या: चारित्र वर्णने क: समर्थ: ।

एतद्विषये श्रुतय: कथयन्ति- लोके या पुरुषस्य परमात्मरूपा माया या देहविधात्मपरिस्पन्दा शक्ति: तदैव अम्बिकाख्याता [2] ।

माया विमोहित: जीव: भेदबुद्ध्या देहस्थितेति उच्यते । पुरुषस्त्रीभेदशून्या एषा पाब्रह्मस्वरूपिणी चोक्ता ।

आदौ इयमेव परमेच्छारूपा संजाता । यद्यप्येषा परमा श्रेष्ठा तथापि मायाशक्तियोगेन उभे रूपे सम्प्राप्ता । इदमेव कारणात् परब्रह्मणो पि मायेशं शक्तिमयंचरोदनम् ।

यथा जलनिर्मित ओलादिकान् दृष्ट्वा जलमितिप्रतीति: तथैव शक्त्यात्मक: ब्रह्मोद्भवा: सर्वे पुरुषा: ज्ञानशक्तित्वरूपेण परब्रह्मण: श्रेष्ठरूपेणावबोध्यते । शरीरीपुरुषाणाम् मध्ये षाटचक्रेषु षाटशिवात्मका: रूपा: ओतप्रोताव्यवस्थिता आश्रयवशेन ते परमेश्वरीव ज्ञायन्ते । अतएव शक्तौ ईश्वरत्वं शिवे नहि । शिव सम्बोधने अपि तस्यैव शक्तै: भास: इति ।

---

१- महाभागवत पुराण १।२६-३३

२- महाभागवतपु० १।२४-२८

श्रुति संस्तुता आनन्दात्मा सत्तिस्वरूपा सर्वप्राण अवस्थिता च। एषाऽपि लोके भक्तरक्षणाय बहुरूपा भवति यथा- या महामुनि व्यासाग्रे ज्योति रूपा समुद्भूता सा सहस्त्रसूर्य समप्रभा कोटिचन्द्र-निभाननाह्लादमयी दिव्यास्त्र सज्जिता सहस्त्रभुजान्विता आसीत्।

एवमेव कदाचित्सिंहवाहना कदाचिच्छववाहना भवति। अस्याः कान्तिः नवजलधर रुचिरिव भाति। एषा चतुर्भुजा भूत्वापि क्षणे क्षणे हि चतुः अष्ट दश अष्टादश शत सहस्त्र भुजेभ्यः दिव्य भावे प्रतिभाति।

अलौकिकदीप्तिमूर्तौ तस्मिन् कदाचित् लक्ष्मीनारायणः राधाकृष्णः ब्रह्माणीगौरी शंकरादयः प्रतिक्षणं स्वरूपैरभिव्यज्यन्ते च। देव्याः सर्वमयस्वरूपस्य भौतिकं तेजं ब्रह्मस्वरूपमात्मकमेव वर्तते। इदं रूपमेव मुमुक्षुभिरुपा सनीयम्।

एषाऽपि शक्तिः जगदम्बा सनातनी शुद्धा मूलप्रकृति साक्षात् परब्रह्मविग्रहा अस्माकं देवता चात्युक्ता। एषा एकास्त्र ब्रह्मविष्णु महेशानां सर्गस्थितिनाशकारी किंच जात्।

कोटिकोटि ब्रह्माण्डानां तन्निवासिनां च सर्गस्थित्यन्तावस्थाया रचयिता महेश्वरी इयमेव। एषा अलिङ्गा स्वेच्छया लिङ्गरूपिणी-लिङ्गधारिणी च।

१- महाभागवत पु० ३। ३६-४७

२- महाभागवतपु० ३। १-६

स्वेच्छारूपधारिणीशक्तिरेव जात: सृजनपालनादिकार्यं करोति । तया सम्मोहितं जगत् नाशमधिगच्छति । अस्या क्रीडनकं जगत् क्रीडनाय एव सा कदाचित् देवकन्या कदाचित् पार्वती लक्ष्मी सरस्वती सावित्री कृष्णादि भूत्वा अंशेन स्वं प्रकाशयति ।

एषाद्याशक्ति: आदौ रूपरहिता पराप्रकृति: सा एव यदा प्रसन्ना तदा स्वेच्छया स्वरूपम् प्रकाशयति[१] ।

तत्काले सा स्निग्धांजनसमप्रभा सुविकसित कमलानना रक्तनेत्रा चतुर्भुजा विकीर्णकेशा दिग्वस्त्रावृता पुष्टोन्नत पयोधरा प्रभामयी सिंहपीठस्थिता दृष्टा ।

तत: सा स्वान्तर्निरजस्सत्वतमोभ्य: चैतन्यविरहितान् पुरुषान् आविष्कृता । पुनश्च सा एव त्रिगुणपुरुषेषु आत्म रूपानुप्रविष्टा तदा ते शक्तिमन्त: पुरुषा: ब्रह्म विष्णुशिवाख्याश्च सा तान् पुम्भावेति मत्वाजीव परमात्मभेदेन विभाजिता । तथा स्वयं सा पि स्वेच्छया त्रिषु स्त्रीरूपेषु विभक्ता तद्रूपाणि माया विद्या परमेति उक्ता ।

पुंसां विमोहिनी जगत्प्रवर्तिनी माया । परिस्पन्दरूपा आदि शक्ति: परमा । तत्त्वज्ञानात्मिका संसारनिवर्तिका विद्याचेति ।

मायामयो जीव: यदा तद्व्यपोक्षस्तदा सो पि विषये-षिणा जात: । भिन्न: तद्मायागुणेन च ।

---

१- महाभागवतपु० ३। १५-२०

गंगादुर्गालक्ष्मी सरस्वती सावित्रीति सा पंचविग्रहा उक्ता एषा पंचजननीप्रकृति पूर्णाख्या इयमेवजगद्धात्री एषैव त्रिदेवान सृष्ट्यादि कार्ये नियुङ्क्ते। ब्रह्मपि अनया मायया मयादेव मुनिदानवमानवानाम् रचनाकरोति। न केवलं ब्रह्म सृष्टि-कारणे क्षम:। शक्तीच्छया ब्रह्मा सृजति हरि: पालयति हर: नाशयतीति च। ब्रह्मान्तर्गता शक्त्यानुसारैव त्रिदेवानुसरणं वर्तते। स्वयं ब्रह्मपि निजेच्छया पंचराङ्गना भूत्वा विहरति। ब्रह्म विष्णुमहेशाधाराधिता देवी तानङ्गीकृता।

सावित्री ब्रह्मपत्नी लक्ष्मीसरस्वतीगंगा तदंशजाता: पूर्णा प्रकृति: दुर्गा या आदौ दक्षकन्या भूत्वा महेशवनिता उक्ता। सा एव हिमालय पुत्री पार्वतीत्युक्ता इयम त्रिलोचनं वरयित्वा गणेश स्कन्दजननी चात्युक्ता।

पितामह: ब्रह्मा सावित्रीशक्तिमप्राप्य सृष्टिकारणे क्षम:-नत: स: भूतत्वात् मानसपुत्र: विरचित: ते मानसपुत्रा: मरीच्य-त्र्यङ्गिरा पुलस्त्यपुलहक्रतु वशिष्टनारदभृगु प्रचेतसादय: सन्ति। तत: दक्षादीन: प्रजापतीन विरचितवान्। तद्ब्रह्मा स्वाङ्गम द्विधा विभज्य वामाङ्गशतरूपा सहायेन निज: कन्या त्रिपुत्राश्च अजीजनत्। तेषाम् सन्ततिभिरेव लोके व्याप्ता संजाता।

इमौ ब्रह्मविष्णू अंशभूता शक्तिम् प्राप्य विषयासक्त: किन्तु परमयोगी शिव: निरासक्त: अतएव सुप्रसन्ना उत्तमा प्रकृति: पूर्णशक्तिस्वरूपेण तम् शिवम् अङ्गीकृता। एवमेव मायया दक्षपुत्री पार्वत्यादि रूपे पुन: पुन: शिवम् वृणोति।

निखिलेदं चराचरं शक्तेरंशांशजातमेव वर्तते।

———:::———

---

१- महाभागवतपु० ३।५०-७६

द्वितीय कण्डिका

कालशक्तेः विभिन्न पुराणादिदृष्ट्या दर्शनदृष्ट्या तान्त्रिकदृष्ट्या च परिचयः तौलनिकमध्ययनम् ।

यमहं काल इति व्यवहरामि सः महाशक्तिराज्ये शक्तिविशेषेति उक्तः नान्यः तदव्यतिरिक्तम् ।

शक्तितत्त्व पर्यालोचनविषये प्रतीयते यत विश्वस्य निखिल पदार्थाःशक्त्योद्भूताः ।शक्त्याश्रयेणैव उद्भवन्ति ।

"शक्तिमात्रासमूहस्य विश्वस्यानेकवर्मणः" इत्यादि महर्षियुक्तम् स्पष्टमेतत् ।

शक्तिरेव जगत चरमोपदाना वर्तते ।एषा संहारभैरवी मूर्तिरिव कालरूपिणी[1] ।

कालस्यकराल कटाहे जीवसमूहः अनवरतभावेन निष्पेषिताः कालगर्भेणैव सर्वे भूतपदार्थाः जायन्ते म्रियन्ते वा ।

अतएवोक्तम् "कालः पचति भूतानि कालः संहरति प्रजाः" इति ।विश्वब्रह्माण्ड कालकवले निपतितः तन्न को पि जीवःकालशक्त्यातिक्रमणे समर्थः ।

---

१- शक्तितत्त्वदर्शनस्कन्ध १ पृष्ठ ६४-६६

यो जडाधारकाल: तस्याश्रय: कालीति निगदित: ।
सामान्य दृष्टौ कालो हि जडाधार: प्रतीयतेकिन्तु अद्वैत भूमौ
न तस्य पृथक् सत्ता वर्तते ।कालशक्ति: "महाकालो या कालमधितिष्ठति
सा नित्यसिद्धा महाशक्ति:" पराशक्तौ लयति ।

एषा महाशक्ति: सर्वलोकप्रतिष्ठेति निगदिता ।[1]
"वृक्षकालाकृतिभि: परोन्यो यस्मात्प्रपञ्च: परिवर्ततेऽयम्"[2]
इत्यादि वाक्येषु सर्वलोकप्रतिष्ठालक्षणा: पराशक्त्यान्तर्गता काल
शक्तीति निरूपितम् ।

शक्तेर्विचित्रा लीला एव सर्वत्र जगदि भाति ।वायुराकाश
गृहनक्षत्रादिषु शक्तेरपूर्वा लीला एव विराजते ।

निखिल विश्वशक्तय: एका शक्तिसागरस्य वीचय: मात्र
भवन्ति ।

यथाग्नौ विस्फुलिङ्गा: भानोर्मरीचय: तथैव महाशक्त्या
अनन्तशक्तिकणा: उद्भवन्ति ।माया दिक्कालादय:-तच्छक्तेरंशा एव ।

---

१- सा प्रतिष्ठातदमृतं लोकास्ते ब्रह्मतद्यश: ।
भूतानि जज्ञिरे तस्मात् प्रलयं यान्ति तत्र च ।।
-म०भा० ५।४४।३०

२- श्वेताश्व० उ० ६।६।८।

स्थूलदृष्टौ ते भिन्नम् भासयन्ति किन्तु परमार्थतः अभिन्नमेव च ।

द्रव्यमात्रेव शक्तिमूर्तिः तद्शक्तिसंख्या गणिता । विचारदृष्टौ ईश्वरो मायाशक्तिः कालशक्तिश्च प्रधानेत्युक्ता । अन्या शक्तयः कालशक्त्या धीना एव भवन्ति । यथा जलग्रहण घटेन किन्तु जलधारिणी क्रियात्मिका घटशक्तिः कालशक्त्या नियन्त्रिता भवति । अतः एवं क्रिया व्यापारादयः कालविशेषे अनुतिष्ठतान्येव ।

कालशक्त्याश्रेणैव "अव्याहत कालसमूहः"[1] जन्मादि षट विकारान् प्राप्नोति ।

काले एव पदार्थानामुत्पत्तिसत्ता वृद्धि परिणामापचय-नाशादिभावः भवन्ति ।

काल एव भावपदार्थानां प्रसवाश्रयः सर्वप्रभेदानां हेतुश्च । अद्वैत दृष्टौ परशक्तिसम्बन्धेन कालशक्तिः ब्रह्माख्या सर्वपदार्थानां बीजस्वरूपिणी[2] ।अनया अनन्तकोटिवस्तुनिउद्भवन्ति च ।

---

१- अव्याहत कलायस्य कालशक्तिमुपाश्रिताः ।
जन्मादयो विकाराःषट भावभेदस्य योनयः।।- वाक्यपदीय

२- एकस्य सर्वबीजस्य यस्य चेयमनेकधा ।
भोक्तृ भोक्तव्यरूपेण भोगरूपेण च स्थितिः।।- वाक्यपदीय

भोगभोक्तृ भोक्तव्यादीनि सर्वं कालरूपाण्येव ।अतस्व कथम् युक्तम् यत् शक्तिविशिष्टातिरिक्तं नान्यं कालम् । इति । मानवस्य सर्वं ज्ञानविज्ञानादय: कालविशेषेण नियन्त्रता: -बुद्ध्या कालातीता वस्तु: अगम्या भवति ।

पूर्वेषामपि गुरु: कालेनानवच्छेदम् इत्युक्तिना ईश्वरमपि कालेनानवच्छिन्नं प्रतिपादितम् ।[1]

धर्मग्रन्थेषु कालम् सर्वान्तिकृत्यमस्याप्युक्त:[2] । सर्वविनाशकारित्वात् उग्रमूर्तिधृत् रुद्रोऽपि कालसंज्ञाधृत:।

जात: गतिक्रियादि व्यवस्थापिका कालशक्ति:[2] । एषा शक्त्यान्तर्गता स्व सृष्टिस्थितिलयादि कार्याणि भवति । क्रियातत्वे इयमेव जन्ममृत्युवादि कारण वारणाशक्तिश्च संसारे अर्थानर्थौ सुखं दु:खं संयोगवियोगश्च, जन्ममृत्यु: लाभहानि: इत्यादि कार्याणि कालाधीना स्व भवन्ति ।

सर्वप्राणिनाम् गमनस्थापनस्वप्नजागरण भोजनपानादिका: क्रिया: कालविधिन्नैव भवति ।[3]

---

१- योगसूत्र १।२६

२- महाभारत शान्तिपर्व राजधर्म अनुशा० २८। १८-१९

३- म०भा० शा०प०रा०अनु० २८।२६-२४

कालविधेरुल्लंघनं असंभाव्यं । अग्निजलशस्त्रदुत्पिपासा विपत्ति विषज्वरलणादि मृत्युनिमित्तानि येन जीवः मृत्युपलनादि भावं प्राप्नोति ते कालाधीनानि ।

सदसत्कर्मणामिष्टानिष्टफलप्राप्तिः लोकव्यवहारश्चापि कालाधीनाः ।

ऋतुचक्रमपि कालेन चलति । वाय्वाकाशचन्द्रसूर्याग्निः नक्षत्र नदी पर्वताहोरात्राणाम् आधारोऽपि कालः । तदाधीनश्च तानि अनुवर्तयन्ति च ।

कालः अनुग्रहरहितः अन्यमनस्कहीनश्च । तज्जीवानां पाप-पुण्यादि कर्मणाम् साक्षी नदैव भावि सुखदुःखानां समयानुसार फलदाता च ।

यथा कर्मकारेण लौहकारेण वा निर्मितयन्त्रम् सदाचारण काधीनमेव भवति तथैदं जात कालकर्मप्रेरणया एव सर्वेष्टतां याति[१] ।

---

१- महाभारत शान्तिपर्व २३। १७- २२

<u>कालात्ययादेवेश्वरोरचना इति भागवत मत निरूपणम्-</u>

श्रीमद्भागवतपुराणे लिखितम्-सृष्ट्येच्छया मायापति: ईश्वर: कालशक्त्याश्रयं गृह्णाति। तथा त्रिगुणा: विक्षुब्ध: परिणामत: महदजायत्।

महदेन ज्ञानक्रियाद्रव्यरूपतमश्च स्वम् तम: प्रधान विकाराश्च अजायत। एष अहंकारमिति निगदित:। तदहंकार: त्रिविध: वैकारिक: तैजस: तमसश्च। तदेव क्रमश: द्रव्यज्ञानक्रिया शक्ति-प्रधाना:। तत: पंचभूतानाम् कारणभूदहंकारविकारेण पंचतन्मात्राण्यजायत्।

पुनश्च वैकारिकेनाहंकारेण मनःक्रियाणामधिष्ठातृदेवानाम् उत्पत्ति: संजाता। दिशासूर्यवरुणाश्विनौ अग्नीन्द्र विष्णु: मित्र प्रजापतिश्च तेषाम् नामानि च।

तैजसाहंकारेण श्रोत्रत्वचनेत्रजिह्वाघ्राण इति ज्ञानेन्द्रियाणि वाक्पादपायुपस्थादिकर्मेन्द्रियाणि अभवत्।

ज्ञानशक्तिस्वरूपाबुद्धि क्रियारूपा प्राणश्चापि तैजसाहंकारेण अभ्ययत्।

यदा पंचभूतेन्द्रियमनोगुणा: असंगता तदा ते सम्भोग-साधनरूपशरीरनिर्माणे अशक्य:।

---

१- श्रीमद्भागवतपु० २।५।२१-३५

तस्मिन्काले भगवत् शक्तिप्रेरणयैव परस्पर संयुक्ता परस्पर कार्यकारणभावमङ्गीकृत्य व्यष्टिसमष्टिरूपपिण्डस्य ब्रह्माण्डस्य च रचना अकुर्वन् ।

एवं ब्रह्माण्ड रूपअण्ड: सहस्त्रवर्षावधिकाले जले निश्चेष्ट स्थित: पुनश्च कालकर्मस्वभावस्थ: जीव: तमजीवम, अजीवयत ।

तत: अण्डमनिर्भिद्य पुरुष:निर्गत: अयमपुरुष: एव वेदे सहस्त्रशीर्षापुरुष:" इत्यादि मन्त्रैर्म्यां स्तुत: । अनैव रचनाभिक्रमलात् सृष्टिकर्ता ब्रह्माणम् अजीजनत् । इति ।

विष्णुपुराणे पि लिखितम् यथा-

विश्वस्य व्यक्ताव्यक्तरूपे साक्षिभावे कारणभावे च कालस्थितिरेव प्रधानम् ।

पुरुषोति ब्रह्मण: प्रथमम् रूपम् तदन्यं अव्यक्तव्यक्त संज्ञकं प्रकृति: महदादीनि च ।

सर्वसंहारात्मक: काल: तस्यपरमम् रूपमिति । प्रधानपुरुष: व्यक्त: कालश्च पृथक् पृथक् विभागश: सर्गस्थित्यन्तहेतव: सन्ति । पुरुष: साक्षी महाकारण काल: जगदि कार्यकारणभावे समुपस्थित:[१] ।

---

१- विष्णुपुराण १।२।१४-२६

यन्नित्यं सदसदात्मकं अव्यक्तं कारणं तम् प्रधानम्

ऋषिवर्गः सूक्ष्म प्रकृतिःइत्युच्यते। एतद अदाया अन्याधाररहितम् अजरं ध्रुवम् - शब्दस्पर्शादिरहितं रूपादिविहीनश्च ।

त्रिगुणमयो यम् अनादिः उत्पत्त्यादिरहितं जगद्योनिः जगत् कारणंचापि ।

प्रलयादारभ्य सृष्टिपर्यन्तमिदं जगत् प्रपंचम् तन्व्याप्तश्च। भगवतः विष्णोः परमस्वरूपाद् ब्रह्मरूपात् एव प्रधानपुरुषौ जातौ। तदन्यरूपेण तौ संयोगो वियोगो च भवतः यदुभयोसंयोगवियोगहेतु-रूपः तदेव "काल" संज्ञाभिधः।

प्रलये गुणसाम्ये पृथक् व्यवस्थौ पुरुषौ एषः काल एव उभयोसंयोगहेतुश्च जायते।

ततः सर्वात्मा परमेश्वरः (कालः)एव स्वेच्छयानुप्रविष्टः तौ क्षोभयति इति।

यथा गन्धः सन्निधिमात्रेणैव मनम् क्षुब्धयति तथैव परमेश्वरः स्वसन्निधिमात्रेणैव प्रधानपुरुषप्रेरयति च।

अन्यत्रापि-

गुणसाम्ये प्रलये पृथक्पुरुषस्थिते सति कालः एव संचरोत नान्यं एवोव सर्गकाले परमेश्वरःस्वेच्छया प्रधानपुरुषो प्रविश्य क्षोभितः तेभ्यो महद,महदेन त्रिविधोहंकारः अहंकारेण तन्मात्राणि पंचज्ञानेन्द्रियाणि कर्मेन्द्रियाणि दशेन्द्रियाष्ठातृ देवाः मनबुद्ध्यादयः संजाताः।[1]

---

१- विष्णुपु० १।२।२७-७०

एतयोस्सम्मेलनेनहिरण्मय:अण्ड: तथा च कालशक्ति प्रेरणया अण्डे विश्वेश्वर: विष्णु जात: । स्वयं विष्णुरजाश्रयात् ब्रह्म भूत्वा जगद्रचना कार्ये प्रवृत्त: । रचना सति सत्वविशिष्ट विष्णु: कल्पावधि तम युगेयुगे पालयति ।कल्पान्ततमो विशिष्ट रुद्र: तान् नाशयति च ।

एवम समस्त भूतान भक्षयित्वा विश्वम जलमग्नम् कृत्वा शेषाशयी शयनि ।अवबोधने पुन: ब्रह्मा भूत्वा रचना कार्य करोति ।

एतत्सर्वं कालाधीनंवर्तते ।कालाधीन: एवैव स: सृष्टि-स्थितिलयार्थं ब्रह्मविष्णुमहेशादि संज्ञा स्वीकरोति । कालरूपो विष्णुना एव पृथिव्यादि चराचरणाम् आयुपरिमाणम् निश्चितम् ।

कालगणनायाम् - पंचदशनिमेषाणाम् काष्ठाभवति । त्रिंशत काष्ठानाम कला तथा त्रिंशत्कलानाम मुहूर्त: । तत्त्रिंशन्मु-हूर्तानाम अहोरात्रम्, त्रिंशदहोरात्रानाम मास: षड् मासानाम् अयन: द्वयोरयनयोर्वर्ष: भवति । अयं वर्ष: देवानाम एकं अहो-रात्रमिति । मानवमानेन विंशतिसहस्राधिक त्रिचत्वारिंशद् लक्ष वर्षाणाम् तथा देवमानेन द्वादश सहस्र वर्षाणाम् एका चतुर्युगी भवति[१] ।

---

१- विष्णु पु० १।३।६-११

दिव्यवर्षमानेन सत्यादि युगानाम् परिमाण: क्रमश: चत्वारि त्रीणि द्वि एक सहस्रवर्षमिता: उक्तम् तदनुसारमेव चत्वारि त्रि द्वि एक शतवर्ष मिता आयन्त्य युगसंध्या चासि ।

तत्र सत्युग त्रेता द्वापरकलि इति एता: चत्वारिमिता: चतुर्युगा: सन्ति । एवम् सहस्त्र चतुयुगमान ब्रह्मण: दिवसेत्युक्त: । एक सप्ततिचतुर्युगानाम् एकम् मन्वन्तरमिति । तथा -चतुर्युग सहस्त्रस्य ब्रह्मणो दिनमुच्यते । ब्रह्मण: दिवसे चतुर्दशमनव: व्यतीयंति च ।

ब्रह्मणोऽह्नि जगत्रचना तथा रात्रौ लीनता च भवति ।

एवम् कालशक्त्याधीन: ब्रह्मादय: परमायु भुंक्त्वा विग्रहं त्यजन्ति च ।

एवंम जगच्चराचराणाम् देवाधि देवानामपि व्यवस्था क्रिया च कालप्रेरणया कालशक्त्या वा संचलितम् जातम् । अत्र एवोक्तं जगदि यत् - "कालाधीनं जगत्सर्वमिति ।"[1]

---

१- विष्णु पु० १।३।६-२८

स्कन्दपुराणेऽप्युक्तम्-

एतानि सत्वरजस्तमांसि तैरावृतम् सर्वमजगत् तथा-सर्वदेवासुरमानुषाश्च सर्वे कालशक्त्या जातान्येव । तथा च एतद् परिदृश्यमानम् सर्वत्र परमार्थतः नश्वरमेव ।

कूर्मपुराणेऽपि लिखितम्-

कृपात्मिका पराशक्तिः या विधेति निगदितः तदेका शक्तिरेव सर्वान्तरा विविधं जगत्करोति - एषैव ब्रह्मरूपा ब्रह्माधिष्ठानमयी तथा स्वयमेव जगन्मयी माया विभिन्नाकाराभूत्वा नारायण जगन्नाथ नन्तरूपे पालिनी तथैव महती शक्तिरेव संहारकारिणी चापि ।

एषा तामसी मूर्तिरेव लोके रुद्र रूपिणी कालाख्या । इति ।

१- कालशक्त्या च जातानि रजःसत्वतमांसि च ।
तैरावृतंजगत्सर्वं सदेवासुरमानुषम् ।
परिदृश्यमानमेतच्च नश्वरं परमार्थतः ।
विद्धयेत्सर्वैरिद्धयेव कृतकृत्वाच्च नश्वरम् ।। स्कन्दपु०के०ख०१०।२२-२३

२- ममैव पराशक्तिर्या विधेतिगीयते ।
एका सर्वान्तरा शक्ति करोति विविधं जगत ।
आस्थाय ब्रह्मणो मूर्ति मन्मयी मदधिष्ठितः ।
भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मयः।
तृतीया महती शक्तिर्निहन्ति सकलं जगत ।
तामसी मे समाख्याता कालाख्या रुद्ररूपिणी ।।
-कूर्म पु० उ०वि० ४।१८-२६




शिवपुराणे लिखितम्-

कलाकाष्ठानिमेषादिभ्यो विग्रहवान कालः भगवतः शंकरस्य तेजस्वरूपो वर्तते। कालात्मा अस्य संज्ञा। चराचरसृष्टौ अस्य न कोऽपि बन्धवः। निखिल विश्वस्य नायकः अयम् ईश्वरेच्छया भाति।

महेश्वरस्य आशंकारूपिणी शक्तिः अस्मिन् कालात्मनि कार्यशीला अतएव एष विश्वमधिकृत्य स्वच्छन्दः विहरति। शक्ति विद्यमानत्वात एव सदाशिवाधीन वर्तते। स्वबलेन एषः त्रैलोक्ये अखण्डराज्यं करोति। अस्योल्लंघने न कोऽपि समर्थः। अस्वाध्यः दुराराध्यः।

शिवशक्तिप्रभावेण अयमपि सर्वेषां इष्टानिष्ट सुख-दुःखानां फलदाता भवति।

शीतोष्णवायुः कालेन वहति, कालेनैव मेघाः वर्षन्ति। छायाः तप अन्नफल पुष्पादय कालानुसृत्य भवन्ति। शिवशक्ति इव एष कालः आज्योतिर्दाता भवति।

---

१- शिवपु० वा०सं०उ० ६

श्रीमद्भागवते पि समर्थितं यथा-

प्रलय: पूर्णायुर्योगे यदा विपरार्धं व्यतीते तदा काल-शक्ति प्रभावेण निखिललोका: नश्यन्ति ।

तत्कारे पंचभूता: अहंकारे अहंकार: महदि महद: प्रकृतौ विलीयते । मात्र तदेव शेषा अतस्व शेषा पि तन्नाम: ।इति ।[1]

श्रीमद्भागवत पुराणे कालशक्त्याश्रित सृष्टिस्थितिलयावस्था विषये कालस्वरूपं लिखितम्-

पृथिव्यादि कार्यवर्गस्य यो सूक्ष्मतमों श: नान्यविभाग संभव: यस्या न कार्यरूपे प्राप्त: यत् ।नान्येनसह सम्बन्ध: यस्य तत्परमाणु इत्याख्य: ।

परस्पर परमाणुसंयोगसमवायेनैव अवयवप्रतीति: भवति । पृथिव्यादि कार्याणाम् स्कता यस्य सूक्ष्मतमों श: परमाणु: स सामान्यरूपे परम महान इति संज्ञा संज्ञिता ।

अत्र न प्रलयावस्थानाम स्फूर्ति: न नवीन प्राचीन इति काल भेद: न घटपटादि वस्तु भेदस्य कल्पना च । स्वमिदं वस्तो: महत्सूक्ष्मस्वरूपविचार: ।यथा वस्तो: महत्सूक्ष्मस्वरूपविचार: तथैव परमाणुव्यापी व्यक्तपदार्थभोगी सृष्ट्यादिसमर्थभगवान कालस्यापि सूक्ष्मता स्थूलतेति मन्तव्य: ।

१- श्रीमद्भागवत पु० ३।२४

यो कालः परमाण्वादि सूक्ष्मावस्थायां स्थितः सत्सूक्ष्मः तथा यो सृष्ट्यात् प्रलयान्ता वस्थायाः भोगकर्ता स परममहानिति निगदितः ।

अत्र अवस्था भोगी शब्देन कालशक्तेः अस्तित्वं प्रकाशितम् कालशक्ति प्रेरणयैव परमाणु संयोगाद सञ्जातम् तेन अणुः त्रसरेणु त्रुटि वेध लव निमेष क्षणः मुहूर्त दिवस पक्ष मास अयन संवत्सराद्यवस्थानां बोधनं भवति । कालनिर्णीतावस्थान्तर्गता देवमनुष्याणाम् आयुपरमायुश्च । कालात्मा सूर्यः स्व तेजस्वरूपेण कालशक्तिना वा बीजाङ्कुरोत्यादिनो शक्तिम् विविध भावेनप्रेरयति तदा सृष्ट्योद्भवादि कार्याणि सन्ति[1] ।

वायुपुराणे पि वर्णितम्-

एष कालः महेश्वर शक्तिसंपन्नो वर्तते । महेशाधिष्ठातृ पराशक्तिः समन्तात् उदमाना प्रवर्तते ततः महाननुवर्तते । गुण वणम्यात्सर्वकाले पृथक्प्रकृतिः प्रवर्तते । तथा सदसदात्मिकया प्रसानुविश्च युगपदजायनाम । तथैव तमोमयःअव्यक्तः क्षेत्रज्ञः ब्रह्मसंज्ञितः । तत्तेजसा पृथ्व्यां धीमान् व्यक्तः प्रकाशितः एषैव प्रथमः शरीरो कारणात्व निरूपितम्[2] ।

१- श्रीमद्भागवत पु० ३।११

२- वायुपुराण ५।२१-२३

अभिमानिन: क्रमण:धर्मैश्वर्येण बुद्धि: संजाता एषा बुद्धि: मनसा यदिच्छति तदव्यक्तप्रभावेण आविशीति । स्वभावत: वशीकृतत्वात् वैगुण्यान्युशित्वात् एष ब्रह्म चतुर्मुख: कालो अन्तकौ भवत् ।

एतत् स्वयम्भुव: सत्वरजोमय: ब्रह्मा रजस्तमोमय: काल: सतोमय:पुरुष: इति त्रिमूर्त्यस्या चापि ।एष: ब्रह्मा भूत्वा सृजति कालभूत्वा संहरति पुरुष रूपे उदासीति ।

ब्रह्मा कमल गर्भाभ काल: अञ्जन वर्णाभ: पुरुष: पुण्डरीकाक्ष: एतत्परमात्मधर्मेवसन्ति ।

<u>महाभारत पुराणे पि लिखितम्-</u>

चक्रमिव गतिशीला कालशक्ति: एषा कर्मबन्धनेन बद्ध्वा सृष्ट्यादि कार्येषु विश्वम् प्रेरयति । मनोजवम् मनोरमम महदादारभ्य चतुर्विंशति तत्वेभ्यो विनिर्मितम एष कालचक्रम् सततं प्रवर्तते ।अस्याबाधगति संसारबन्धस्य कारणम् इदमेव च ।

जराशोकसमावरणम् रोगदुव्यसनानामुत्पत्तिकेन्द्रं ।सदा देशकालानुवृत्य विचरणमस्य[१] ।

---

१- महाभारत पु० अश्वमे०अनुगीतापर्व ४५। १-१०

अव्यक्तकालचक्रस्य बुद्धिः सारः मनस्तम्भः इन्द्रियाणि बन्धः पंचभूतानि तस्य वलानि आवरकःतमः व्यायामश्च शब्दः अहो-रात्रः संचालकः ऋतुःनाभि नम्यःक्षुत्पिपासा कीलकः छायातपः रेखा, निमिषोन्मेषः व्याकुलता घोषाति सर्वेन व्याप्तमिदम् सदागतिशीलम् जीवनं ।

मासपक्षादिना गणना अस्य उपर्यधः मध्य इति त्रिमार्ग भेदी एषा सदा लोकेषु भ्रमति ।

महदर्थगोर्दीप्तमिदं रजस्सत्वतमादि गुणानुसारप्रवृत्ति अस्य ।मनश्चिन्ता एव अस्य चक्रस्य पेटिका च । शोकमृत्युवशीभूतम् क्रियाकारणसंयुतमस्य दीर्घविस्तारश्च ।तृष्णालोभ आवर्तहेतु तथाज्ञान कारणा माया उत्पत्ति हेतुरस्य ।

भयमोहपरीवारं भूतसम्मोहकारकमिदं आनन्दप्रीति चारी कामक्रोधपरिगृहो च भाति ।

रागद्वेषसमायुक्तमिदं जीवनम् - कालचक्रम् एव सामां जगत् विसृजति संहरति च ।

अन्यत्रापि-

जीवोत्पत्तिः लयः पुनर्जन्मश्चैव कालशक्तेः प्रेरणया[1] एव भवति। यदा व्यक्ताव्यक्तानि पंचभूतानि च वैषम्यं गच्छन्ति तदा जीवः कालप्रेरणया एव स्व संकल्पमधिकृत्य शरीरं प्राप्नोति। मृत्युकाले पंचभूताः प्रतिलोमक्रमेण विलीयन्ते उत्पत्तिकाले अनुलोमक्रमेण उद्भवन्ति च।

ब्रह्मवैवर्तपुराणेऽपि लिखितम्-

संसर्गविच्छेद विरोध प्रीत्यादौ कार्यं हेतुः काल एव तथा एवमेव प्रजानाम् रक्षापालन संहारादिव्यवस्थापि करोति -सर्व कर्मानुरोधेन सुखदुःखजरामृत्यवादि व्यवस्थापि अयमेवकरोति।

सर्वंकालकृतं मन्ये न अत्र विस्मयं कार्यम्। इति।[2]

---

१- महाभारत वनपर्व २११।६-१०

२- कालः करोति संसर्गं बन्धूनांबन्धुभिः सह।
कालः करोति विच्छेदं विरोधं प्रीतिरेव च।
कालः सृष्टिंकुरुते कालश्च परिपालनम्।
कालः करोति सानन्दं काल संहरते प्रजा।
सुख दुःख भयं जरामृत्युं च जन्म च।
सर्वं कर्मानुरोधेन काल एव करोति च।
सर्वं कालकृतं तात विस्मयं न वृजं वृज।।
-ब्रह्म वै०पु० ६०।७०-७३

श्रीमद्भगवद्गीतायामपि अर्जुनसंदेह निवारणाय श्रीकृष्णेन उक्तं -

कालो ऽस्मि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्तः ।

अत्रापि संहारादि कार्यं कालस्यैव प्रधानं इति निगदितम्[1] ।

श्रीमद्देवीभागवतेऽपि वर्णितम्-

प्राकृतलयकाले सृष्टिकर्ता ब्रह्मा अपि विग्रहं त्यजति । पुनश्च सः परब्रह्म प्रभावेण आविर्भवति । तत्काले सः स्मृतिहीनः पुनश्च तपसा ज्ञानमलभत् । तदा सः सृष्टिकरणे समर्थः । एवम् कालक्रमेण सत्यादियुगेषु क्रमशः धर्मस्य एकपाद हानिश्चापि भवति ।

कालक्रमेण सूर्यः आविर्भूत्वा क्रमशः बाल प्रचण्ड अस्ताव-वस्थां गच्छति । कालाधीनः सूर्यः ऋतूनाम् कर्ता अपि भवति[2] ।

---

१- श्रीमद्भगवद्गीता ११।३२

२- श्रीमद्देवीभागवत पु० ६।२८

कालः बहुदिनम् कृत्वा दिवसे सूर्यं निरोहति।
कदाचित् राहुग्रहणेन तम् कम्पायति पुनः हर्षयति च। एवं
चन्द्रस्यापि कालानुसारेण प्रतिदिनं कलावृधनं निष्कलं च जायते।

निखिलं जगत् कालप्रेरणया एव सृष्टिसंहारादि
शब्दान साध्यति।

काले तन्नश्यति उदयति च।

परब्रह्मणः कालस्य तुलना कर्तव्यः। परमेश्वरः प्रकृति
शक्ति रूपः सैव पुरुष रूपश्चापि।

जगत्कार्ये प्रवृत्तः कालः शक्तिरूपः तथा निर्गुणः
पुरुष रूपश्च।

योगवशिष्ठसारे लिखितम्-

महासागरमिदं जगत् तस्मिन् कालः वडवाग्निरिव
भाति। यथा वडवाग्निः सागर जलं पिबति तथैव बलवान् कालः
जगदोत्पन्नजीवान् खादयति।

निखिलं जगत् काल कवले गत्वा शून्यतां याति। काल-
दृष्टौ लघुमहदादि भेदाः न सन्ति। यथा गरुडः क्रीडायाम्
सर्पान् ग्रसति खादति तथैव एषः महदाचल प्रतिष्ठ गुरुजनानन्य-
पुरुषादीनपि खादयति। यत्सूर्यस्य विलासमात्रकः पलदाणनिमे-
षादयः तेन ब्रह्माण्डोदुम्बरः पच्यन्ति लोकपाल। तान खादयन्ति।
संसार उटजे विविधजीवाः मणिरिव भाति कालश्च तान चपित्वा

माला इव ग्रथित्वा धारयति पाति च । पुनश्च उग्ररूपेण तान चूर्णीकृत्य धूलीकरोति ।

कल्पकाल: महार्णव: वडवाग्निकाल: युवराज:यस्य क्रीडास्थली महार्णव:क्रीडयन् भ्रमित: विद्युद्ध:रुणकाल: सुस्वादु-भोग्यपदार्थानिव प्राणिवर्गान् भुक्त्वा सुमधुर निद्रायाम्[1] स्वपिति पुनश्च उत्तिष्ठ्य नित्यकार्यं करोति च । याप्रचण्डा कालशक्ति: काली निखिल ब्रह्माण्डान् स्वशरीरे निवेश्य तिष्ठति ।तदेव प्रधाना ।

तन्त्रसाराख्यग्रन्थे लिखितम्-

क्रमाक्रम एवैव काल: स च परमेश्वर एव अन्तर्भाति ,तद्-भासनं च देवस्य कालीनाम शक्ति: भेदेन तु तदाभासनं क्रमाक्रमयो: प्राण वृत्ति: ।

संविदेव हि प्रमेयेभ्यो विभक्तं रूप गृह्णाति- अतएव च अनवच्छेदयोगात् वैभ्यतां याति नभ: तत: स्वातंत्र्यात् प्रमेये स्वाकारोत्सुक्येन निपतन्ती क्रियाशक्तिप्रधाना प्राणनारूपा जीवस्वभावा[2] पंचमो रूपे देहं यत: पूरयति ततो सौ चेतन इव भाति ।

---

१- योगवाशिष्ठ सारसं०प्र०सर्ग २ श्लो०११४-११६

२- तन्त्रसार

तत्र क्रियाशक्तौ कालाध्वा वर्णमन्त्रपदाध्वन: काल-
ध्वनिस्थिति: परसूक्ष्म स्थूल रूपत्वात् । देशाध्वस्थितिस्तु तत्व
पुर कलात्मेति भविष्यति स्यावसरे । तत्र यद्यपि देहे सबाह्या-
भ्यन्तरम् ओतप्रोतरूप: प्राण: तथापि प्रस्फुट संवेद्य प्रयत्न:
बसौ हृदयात्प्रभृति इति तत्रैव अयं निरूपणीय: ।

तत्र प्रभुशक्ति: आत्मशक्ति: इति यत्न त्रितयं प्राणेरणे
हेतु: गुणमुख्य भावात् ।

तत्र हृदयात् द्वादशान्तान्तं स्वाङ्गुली षट्स्य षट्त्रिंश-
दंगुल: प्राणाचार निर्गमे प्रवेशे च, स्वोचितवलयत्वदेहत्वात् सर्वस्य ।

तत्र घटिका तिथि मासौ वर्ष समूहात्मा इति समस्त:
काल: परिसमाप्यते ।

तत्र सपादाशे अङ्गुले चषक इति स्थित्या घटिकोदय:
घटिका हि षष्ट्या चषकै: तस्मात् द्वासप्तत्यङ्गुला भवति ।

अथ तिथ्युदय: । सपादमङ्गुलद्वयं त्रुटि उच्यते । तास्तु चतस्रु
प्रहर: । त्रुटेयर्धेत्र संन्ध्या, एवं निर्गमे दिनं, प्रवेशे रात्रि: इति
तिथ्युदय: ।

अथ मासोदय: । तत्र दिनं कृष्णपक्ष: रात्रि: शुक्ल:
तत्र पूर्व त्रुट्यर्धं अन्त्यं चतुट्यर्ध विश्रान्ति: अकाल कलिता: मध्यास्तु-
पंचदश त्रुट्य एव तिथय: तत्र प्रकाशे विश्रान्तिश्च इति एते स्व
दिने दिने ।

तत्र वैपकाया प्रकाशोदिनं वैपस्य विचारयितरि स्यौ रात्रिः। तैव प्रकाशविश्रान्तो चिरादिव वेविश्यात् अनन्तोदै तत्सार्थे तु विषुवत्।

कृष्णपक्षे प्राणार्कै अपानचन्द्र आप्यायिकाम् एकामेकाम् कलाम् अर्पयति। यावत्पंचदश्यां त्रुटौ द्वादशान्तसमीपेदापि पृथक् भूतकलाप्रसरः चन्द्रमा प्राणार्कै एव लीयते। तदनन्तरं चतुर्थ्यर्धं स स पक्षसंधिः तस्य च तुर्यार्धस्य प्राच्यमर्धम् अमावस्यं द्वितीयं प्रतिपदं।

तत्र प्रतिपदे तस्मिन्भागे स अमावस्यौ भागौ यदा-कास प्रयत्नावधानादि कृतात् तिथिच्छेदात् विशति तदा तत्र ग्रहणम्। तत्र वैकल्प सौम्यसहभूतौ मायप्रमातृ राहुः स्वभावतया विलापना-शक्तः केवलाच्छादनमात्र समर्थः सूर्यगतं चान्द्रं अमृतं पिबति इति।

प्रमातृ प्रमाण प्रमेय त्रितया विभागकारित्वात् स पुण्य-कालः पारलौकिक फलप्रदः।

ततः प्रविशति चिदर्कं एकैकया कलया अपान चन्द्रमा पूरयति। यावत्पंचदशी त्रुटिः पूर्णिमा, तदनन्तर पक्षसंधिः ग्रहणं च इति शाश्वत, स तु ऐहिक फलप्रदमिति मासोदयः।

अथ वर्षोदय: । तत्र कृष्णा स्वउतराध्यर्धाष्टसु अङ्गुलेषु संक्रान्ति: मकरात् मिथुनान्तम् । तत्र प्रत्यङ्गुलं पञ्च तिथय: तत्रापि दिनरात्रि विभाग: स्वांशे दक्षिणायनं, गर्भत्वम्, उद्भीच्छा, उद्भमूढता, उद्भविष्यत्वम्, उद्भमारम्भ: उद्भवता जन्मादि विकारषट्कं च इति क्रमात् मकरादिषु । तथैव उपासना अत्र फलं समुचितं करोति । अत्र च दशाया पितृकर्मान्तारूढा: सन्त्यश्च मादशा विपत्य: इति वर्षोदय: ।

प्रत्यङ्गुलं षष्टि: तिथय: इति क्रमेण सङ्क्रान्तौ वर्षम् इत्यनेन क्रमेण प्रवेशनिर्गमौ: द्वादशाब्दोदय: प्रत्यङ्गुलतिथीनां शतत्रय, षष्ठांशे अङ्गुले वर्षं, यत्र प्राक् षष्ठ्यब्दमितिगण-नयासंक्रान्तौ पञ्चवर्षाणि इति अनया परिपाट्या एकस्मिन् प्राण निर्गम प्रवेशकाले षष्ट्यब्दोदय: अत्र एकविंशति सहस्राणि षट्-शतानि इति तिथीनां संख्या यावतो एव अहोरात्रे प्राणसंख्या इति न षष्ट्यब्दोदयात् अधिकं परोदयते आनन्त्यात् ।

तत्र मानुषं वर्षं देवानां तिथि: अनेन क्रमेण दिव्यानि द्वादशवर्षसहस्राणि चतुर्युगम् । चत्वारि त्रीणि द्वे एकमिति कृतात् प्रभृति तावद्भि: शतै: अष्टौ संध्या: । चतुर्युगानां एकसप्तत्या मन्व-न्तरम्, मन्वन्तरचतुर्दशभि: ब्राह्मं दिनं, ब्रह्मदिनान्ते कालाग्निदग्धे लोक-त्रये, अन्यत्र च लोकत्रयधूमप्रस्थापिते सर्वे जना: वेगवदग्निप्रेरिता जन-लोके प्रत्याकलीभूय तिष्ठन्ति ।

प्रबुद्धास्तु कूष्माण्डहा वैशाख महोदैके क्रीडन्ति । ततो निशान्ते ब्राह्मीसृष्टि: ।अनेन मानेन वर्षशतं ब्रह्मायु: ।तत: विष्णो-दिनं तावती च रात्रि: तस्यापि शतमायु: । तदूर्ध्वं रुद्रलोकश्रो रुद्रस्य तावती रात्रि: प्राग्वत् वर्षं तत् शतमपि च आयु: ।तत्र रुद्रस्य तदवसितौ शिवस्य गति:, रुद्रस्य उक्ताधिकारावधि: ब्रह्माण्डधारकाणां तत दिनं शतरुद्राणां निशा तावती तेषामपि च शतमायु: । शतरुद्रक्षये ब्रह्माण्डविनाश: ।एवं अनन्तत्वात् अव्यक्ता-न्तम् एतदेव क्रमेण रुद्राणामायु: ।पूर्वस्यायुरुत्तरस्य दिनमिति ।

ततश्च ब्रह्मरुद्राश्च अवान्धिकारिण: अव्यक्ते तिष्ठन्तीति श्रीकण्ठनाथः तदा संहर्ता ।

एषां वान्तरप्रलय: तत्क्षणे सृष्टि: ।तत्र शास्त्रान्तर-मुक्ता अपि बुध्यन्ते ।यत्तु श्रीकंठनाथस्य स्वमायु: तत कंचुकवासिनां रुद्राणां दिनं तावती रजनी, तेषां यदायु: तत गहनेश दिनं तावती एव छाया तस्यां च समस्तमेव मायायां विलीयते ।पुन: गहनेश: सृजति ।

स्वमय: अव्यक्त: काल: तं दशभि: परार्धै: गुणयित्वा मायादिनं कथ्येत् तावती रात्रि: ।स एव प्रलय: ।

मायाकालपरार्धकेन गुणितं ऐश्वरतत्वे दिनम् ।अत्र प्राणो जगत्सृजति ।तावती रात्रि: यत्र प्राण शम: । प्राणो ब्रह्म विद्याभिन्न शान्तो पि वा संवित् तत्राप्यस्ति क्रम: ।

ऐश्वर्यकाले परार्धशतगुणिते या संख्या तत्सदाशिव दिनं तावती निशा, स एव महाप्रलयः। सदाशिवः स्वकालपरिमाणे बिन्दुव-र्धने निरोधिका आकुञ्चनादेलीयते, नादः शक्तितत्त्वे तत् व्यापिन्यां स च अनाश्रित दिनं।

अनाश्रितः साम्यने पदे यत् तत साम्यस्यं सार्धं तत ब्रह्म-वस्मात् साम्यस्यात् असत्यात् कालात् निमिषोन्मेषमात्र तया प्रोक्ता शैणाकालप्रसरप्रविलयं चक्र भ्रमोदयः।

एकं दशशतंसहस्त्रं अयुतंलक्षंकोटि नियुतं अर्बुदं वृन्दं खर्वंनिखर्वं पद्मशंखकुमुदं अन्त्यम् परार्धमितिक्रमेण दशगुणितानि अष्टादशेति गणितविधिः।

एवम् संख्या सृष्टिप्रलयाः एकस्मिन् महासृष्टिरूपे प्राणे सो पिसंविदि, सा उपाधौ, स चिन्मात्रे। चिन्मात्रस्यैव अयम् स्पन्दः यदयं कालोदयो नाम। तदेव स्वप्न संकल्पादौ वैचित्र्यम्, न अस्य विरोधावहम्।

एवम् यथा प्राणे कालोदयः तथा अपाने पि हृदयात्मूल-पीठ पर्यन्तम्। यथा हृत्कण्ठ तालु-ललाट-रन्ध्र द्वादशान्तेषु ब्रह्म विष्णुरुद्रेश सदाशिवानाश्रितास्यं कारणषट्कम्। तथैव अपाने पि हृत्कन्दानन्द संकोच विकास द्वादशान्तेषु बाल्य-यौवन-वार्द्धक-निधन पुनर्भवमुक्त्याधिपतय एते।

अथ समाने कालोदय: । समाने हार्देषु दशसु नाडिषु संचरन समस्ते देहे साम्येन रसादीन् वाहयति । तत्र दिगष्टके संचरन तद्दिक्शानि चेष्टयिव प्रमातु: अनुकारयति । ऊर्ध्वाधस्तु संचरन् तिसृषु नाडीषु गतागतं करोति । तत्र विषुवद्दिने बाह्ये प्रभातकाले सपादां घटिकां मध्यमार्गे वहति । ततो नवशतानि प्राणविदां प्राणानामिति गणनया वहि: सार्धघटिकाद्वयं वामे दक्षिणे वायेति पंचसंक्रान्तय तत: संक्रान्तिपंचके वृत्ते पादोनासु चतुर्दशघटिकासु अतिक्रान्तासु दक्षिणं शारदं विषुवन्मध्यान्हे नवप्राणशतानि ।

ततो ऽपि दक्षिणवामे दक्षिणे इति संक्रान्ति पंचकं प्रत्येकं नव शतानि इत्येवं रात्रावपि इति । एवं विषुवद्दिवसे तद्रात्रौ च द्वादश संक्रान्तय: । ततो दिनवृद्धिक्षयेषु संक्रान्ति वृद्धिक्षय: । एवम् एकस्मिन् समान मारुति वर्णाद्यंश्वासप्रश्वासयोगाभावात् । अत्रापि वर्षशब्दोदयादि पूर्ववत् । उदाने तु द्वादशान्तावधिसंचार: स्पन्दमात्रात्मन: कालस्य अत्रापि पूर्ववत्विधि: ।

व्याने तु व्यापकत्वात् अक्रमे ऽपि सूक्ष्मोच्छलत्तायोगेन कालोदय: ।

अथ वर्णोदय: । तत्र प्रत्यर्धप्रहरे वर्णोदय: विषुवति सम: । प्रतिवर्णस्य द्वे शते षोडशाधिके प्राणानाम् वहि: षट्त्रिंशत् वर्ण-कापि इत्युदय: अयम् अयत्नजो वर्णोदय: ।

यत्नजस्तु मन्त्रोदय: अरघट्ट घटीयन्त्रवाहनवत् एकानु-संधिबलात् चित्रं मन्त्रोदयं दिवानिशम् अनुसंदधत्, यत्र देवतया सह तादात्म्यमिति ।

तत्र सदोदिते प्राणचारसंख्ययैव उदय संख्या व्याख्याता, तद्द्विगुणिते तदर्धमित्यादिक्रमेण अष्टोत्तरशतैकविशतोदया: इति क्रमेण स्थूलसूक्ष्मे चारसाध्ये विश्रान्तस्य प्राणचारे क्षीणे कालग्रासे वृत्ते संपूर्णमेकमेवेदं संवेदनं चित्रशक्तिनिर्भरं भासते ॥

काल भेद एव संवेदनभेदक: न वेद्यभेद: । शिखरस्थ ज्ञानवत् । ज्ञानस्य यावान् कालस्थितिकाल: स एव क्षण: प्राणोदये च एकस्मिन् एकमेव ज्ञानं अवश्यं चेतत् अन्यथा विकल्पज्ञानम् एक न किंचित्स्यात् -क्रमिक शब्दावभासित्वात् मात्रया अपि क्रमिकत्वात् । यदाह-

'तस्यादि उदात्तमर्धह्रस्वम्' (पा०व्या०१-२-३२) इति तस्मात् स्पन्दात्मनां यावत न उदितं तावत एकमेवज्ञानम् । अतएव एकाशिति पदस्मरणसमये विविधर्मनिप्रवेशक्रमेन एक एव । असौ परमेश्वरविषयो विकल्प: अभ्यासेन अविकल्पात्मा एव संपद्यते इति ।

एवमखिलं कालाध्वानं प्राणोदय एव पश्यन् सृष्टिसंहारांश्च विचित्रान् निसंख्यान तत्रैवाकलयन्, आत्मन एव परमेश्वरप्रत्यभि-ज्ञानात् मुक्त एव भवतीति । यथा-

संविद्रूपस्यात्मनः प्राणशक्तिं,
पश्यन्रूपं तत्रां यातिकालम् ।
साकं सृष्टिस्थेमसंहार चक्रे
नित्योद्युक्तो भैरवो भावमेति ।।[1]

वैदाङ्गव्याकरण दृष्टी कालः कालशक्तिश्च-

'कालः परिमाणिना'[2] इति सूत्रे मासस्य त्रिंश अत्रात्मकत्वं प्रतिपादितमस्ति । किंच तत्रैव भगवता पातंजलिना कालस्वरूपम् इत्थं व्यवस्थापितम्- येन मूर्तिनामुपचयाश्चापचयाश्च लक्ष्यन्ते तं कालमाहुः[3] इति -अत्र येनेति तं कालमिति चैक वचनेन कालस्यैकत्वं सूचितम् । कालस्यैकत्वे होरात्रादिभेदव्यवहारः कथं स्यादिति जिज्ञासायां महाभाष्यकारस्येदं समाधानं यत- तस्यैव कयाचित् क्रियया युक्तस्याहरिति च भवति रात्रिरिति च । कया क्रियया ? आदित्यगत्या । तयैवासकृदावृत्तया मास इति भवति संवत्सर इति च[4] । अनेन महाभाष्य सन्दर्भेण सूर्य क्रियया एव कालोपाधित्व प्रतिपादितम् । तथा चैकस्यापि कालस्य सूर्य क्रियारूपोपाधिवशात् क्षणदिनमाससंवत्सरादिव्यवहारास्पदत्वमिति निष्कृष्टम् । एवं 'तस्मिन्पौर्णमासीति'[5]

१- तन्त्रसार आन्हिक ६ वाराणसेय सं०संस्थान प्रकाशित ।
२-पा०सू० २।२।५
३- पा०सू० २।२।५
४- म०भा० २।२।५
५- पा०सू० ४।२।२१

विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्य:[1] इत्यादिभि: मास विशेषस्यापि सङ्केत: सूत्रे भाष्यादौ च कृतो स्ति । फाल्गुनीप्रोष्ठपदानां च नक्षत्रे[2] इत्यादिना सम्बन्धिवेलादिगणतोतिथिनां तथा अमावस्यदन्यतरस्याम्[3] इति सूत्रे अमावस्याया: सा स्मिन् पौर्णमासीति सूत्रे च पौर्णमास्या: प्रयोगो दृश्यते ।

रात्राह्नाहा: पुंसि[4] रात्र्यह: संवत्सराश्च[5] इत्यादौ अहोरात्रस्य चर्चा कृता । अथ: परुत्परार्येषम:[6] हैयङ्गवीनं संज्ञायाम्[7] इत्यादौ गतादिपदस्य ग्रहणम् 'श्वस्तुर'[8] च इत्यत्र आगामिदिवसस्य च निर्देश:कृत: । ऊकालो ज्झस्वदीर्घप्लुत:[9] इत्यादौ मात्रात्मको पि कालो निर्दिष्ट: वर्तमाने लट्[10] भूते[11] भविष्यति[12] इत्यादिभि: वर्तमानभूत भविष्यद्रूप त्रितयभेदात्मक: कालश्चर्चित: । भेदत्रयात्मको प्ययं काल: अवान्तरभेदेन पुनरेकादशधा भिद्यते[13] ।

---

१- पा०सू० ४।२।२३
२- पा०सू० १।२।६०
३- पा०सू० ३।१।१२२
४- पा०सू० २।४।२९
५- पा०सू० ५।४।८७
६- पा०सू० ५।३।२२
७- पा०सू० ५।२।२३
८- पा०सू० ४।३।१५
९- पा०सू०१।२।२७
१०- पा०सू०३।२।१२३
११- पा०सू० ३।२।८४
१२- पा०सू० ३।३।१३६
१३- वा०प०३ का०का०समु०कारि ३८

श्रीभर्तृहरिमते कालस्वरूपम्-

वाक्यपदीयकृता श्री भर्तृहरिणा पि कालविषये महाभाष्यकृत् सम्मतेरनुमोदनमेवविहितम् ।तथाहि-

मूर्तीनां तेन भिन्नानामाचयापचया: पृथक् ।
लक्ष्यन्ते परिणामेन सर्वासां भेद योगिना ।।इति

किंच -

उत्पत्तौ च स्थितौ चापि विनाशे चापि तद्वताम् ।
निमित्तं काल मेवाहुर्विभक्तेनात्मना स्थितम् ।
समस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते ।
प्रतिबन्धाभ्यनुज्ञाभ्यां तेन विश्वं विभज्यते ।
यदि न प्रतिबध्नीयात् प्रतिबद्धं च नोत्सृजेत् ।
अवस्था व्यतिकीर्येरन् पौर्वापर्यविनाकृता:
तस्यात्माबहुधा भिन्नो भेदैर्धर्मान्तराश्रयै: ।
नहि भिन्नमभिन्नं वा वस्तु किंचन विद्यते ।
नैको न चाप्यनेको स्ति न शुक्लो नापि चासित: ।
द्रव्यात्मा स तु संसर्गादिव रूप: प्रकाशते ।
संसर्गिणां तु यो भेदो विशेषास्तस्यते मता: ।
सभिन्नस्तैरवस्थानां कालो भेदाय कल्पते[1] ।। इति

---

१- वा०प० ३ का० काल० ३-८

अयम्भाव: वस्तूनामुत्पत्तिस्थितिविलयेषु उपाधिभेदात् भिन्नरूपेणावस्थित एक एव काल: कारणम् । अस्य विश्व प्रपंचस्य प्रतिबन्धाभ्यनुज्ञाभ्यां स एव नियामक: । यस्याभिव्यक्ती स प्रतिबन्धमाचरति तदवस्तुनाभिव्यज्यते,यस्य चाभिव्यक्तिं सो नु जानाति तदभिव्यज्यते च ।समस्तानामपि वस्तूनाम् अवस्थाभेदे कारणभूत: सर्वव्यापकश्च काल: स्फोटापर नामधेयस्य शब्दात्मकस्य ब्रह्मण: स्वातन्त्र्य शक्तिरूप: । जगतो जन्मनं कारणभूतता: सन्त्यन्या ब्रह्मणो वान्तरशक्तय: कलोभिधेया: ताश्च कलनात्मिका: शक्तय एतस्यां कालशक्तावन्तर्निविष्टा: एवं साध्यस्वभावक्रिया विषयकं क्रियाधारत्वं कालस्य सिद्धान्तितम् । तन्त्यपदार्थानाम् जन्मस्थिति निरोधेषु उपकुर्वन् काल: क्रियात्म्य: ।[1]

'कालात् क्रिया विभज्यन्ते आकाशात् सर्वमूर्तय:' एवं सर्वपदार्थानां उपचयादिधर्मान्यथानुपपत्त्या अखण्डकाल: सिद्ध्यति इति भाष्यकृन्मतम् ।उक्तं कृत्स्नु कालस्यैकत्वे तस्य कार्य वैचित्र्यं नोपपद्यते इति दा धारारूप: काल स्वीकर्तव्य: ।प्रवाह नित्यतया नित्यत्वं समूहरूपेणैकत्वम् औपाधिकार वस्तुनस्तु सर्वस्यापि पदार्थस्य एकत्वानेकत्वशुक्लत्वकृष्णत्वादयो धर्मा औपाधिका एव न स्वाभाविका: । नहि गौ स्वरूपेण गौ: नापि अगौ: गोत्वाभिसंबंधेन तुभौ: । एवं आदित्यादिक्रियाविशेषणा एव कालस्य औपचारिकाधर्मा अहरादि विशेषहेतव: । तोभिन्नस्वरूप: कालो दिनादिव्यवहाराणामेदाय कल्पते । उत्पत्त्यादि क्रियाहेतनद्वारा द्रव्यस्यापि परिच्छेदक: काल: इति तत्त्वम् ।[2]

---

१- वा०प० ३।७।६

२- महाभाष्य उ० २।२।५

एतद् विरोधे तु तपरस्तत्कालस्येतिसूत्रस्थं भाष्यं[1] कालस्य क्रियात्मकत्वं प्रतिपादयत् एकदेशिन्या मन्तव्यम् ।अत: काल: क्रियाया आधार एव नतु क्रियारूप: ।

इदानीं घट: इत्यादि व्यवहारेण घटस्य आधार: काल: स च क्रियारूप: कथं भवितुमर्हति, क्रियायाम् आधारत्वस्या संभवात् । अपितु घट एव क्रियाश्रय: इति वक्तुं युज्यते ।

न्यायदर्शने कालस्वरूपम्-

न्यायवैशेषिकसिद्धान्ते कालस्य द्रव्यत्वं विभुत्वमेकत्व-मौपचारिकं नानात्वं च प्रतिपादितम् ।तथाहि काल लिङ्गानां परापरादिप्रत्ययानां अविशेषाद् भेदा प्रतिपादकत्वाद् अन्यता-मुख्यया वृत्त्या कालस्यैकत्वे पि सिद्धे नानात्वोपचारान्नानात्वव्य-पदेश: इति[2] ।

वैशेषिकनये कालस्य अनुमेयत्वमेव[3] ।एतस्य संख्या परिमाण पृथक्त्वसंयोग विभागगुणा:[4] ।सर्वोत्पत्ति निमित्तं जादाधारश्च काल:[5] ।

---

१- म०भा०१।१।७० २- न्याय कन्दली

३- न्या०सि०मु० पृ०१५१-१५३

४- प्रशस्त पा०भा० द्रव्यनि०

५- कारणाद सि च० पृ० १०

अनुमान द्वारा कालस्य सिद्धिरुक्ता तर्कामृते । तथाहि परत्वजनकं बहुतर रविक्रियाविशिष्टशरीरज्ञानमिदं परम्परासम्बन्ध घटक सापेक्षम् । साक्षात्सम्बन्धाभावे सति विशिष्टज्ञानत्वम्, लोहितः स्फटिक इति प्रतीतिवत । परम्परा सम्बन्धस्य स्वसमवायिसंयुक्तसंयोगः तेन सम्बन्ध घटकः कालः सिद्ध्यति । अत्र स्वपदेन रविक्रिया[1] तत्समवायी रविः (सूर्यः) तत्संयुक्तः (कालः) तत्संयोगी शरीरे ।

न्यायमंजर्यां श्री जयन्तभट्टेन कालकृताभ्यां परत्वा परत्वाभ्यां कालो नुमीयते इत्युपपाद्य तस्य विभुत्वम्, एकत्वादि च समर्थ्य क्रियारूपोपाधिवशात् एकस्यापि कालस्य वर्तमानादि भेदव्यपदेशः इति निरूपितम् ।

अन्ते च चाक्षुषत्वम् लैङ्गिकत्वम् औपाधि नानात्वं च निरूपितम् तथाहि-

दृष्टः परापरात्वस्य दिक्कृतस्य विपर्ययः ।
युवस्थविरयोः सो पि विना कालं न सिद्ध्यति ।
सिद्धः कालः चाक्षुषो लैङ्गिको[2] वा
तन्नानात्वं सिद्धमौपाधिकं च ।

---

१- तर्कामृतम् पृ०निरू०

२- न्यायमंजरी २।५

दीधितिकृता आचार्यशिरोमणिनानुवदुपाध्यवच्छिन्न परमेश्वरः एव कालः न तु तदतिरिक्तः कश्चन कालपदार्थः प्रमाणा-भावात्। अथवा क्षणाः एव अतिरिक्ताः इदानीमित्यादि व्यवहार विषयाः। विभाग प्रागभावावच्छिन्न कर्मणः क्षणत्वासंभवात्। एवं उपाधीनाम् अतिरिक्तानां क्षणिकपदार्थानां वा क्षणा-नामवश्याभ्युपेयतया तैरेव सर्वे कालव्यवहारा उपपादनीयाः किमतिरिक्तेन कालेन इति सिद्धान्तितम्[1]।

एतन्मते समीक्षापूर्वकं विशेष निरूपणम्-

इदमान्नाय दर्शनीयकालस्वरूपविवेचनं व्याकरणदर्शने पि स्वीकृतमेवास्ति।नास्य खण्डनं व्याकरणग्रन्थेष्वप्युपलभ्यते।यद्यपि वाक्यपदीये शब्द ब्रह्मण स्वातन्त्र्याख्यशक्तिरूपतया कालो निर्दिष्टः यो दीधिति कृता परमेश्वरो रूप तथैव निर्दिष्टः। तथापि तत्र न कश्चन भेदः।शक्तिशक्तिमतोरभेदात्।अतएव व्याकर दर्शनस्य अद्वैतप्रतिष्ठा-पाकत्वमपि संगच्छते। अथ वै तत्सम्बन्धविषये इदमवश्यं ज्ञातव्यमस्ति यत् कालिकसंबन्धेन सर्वमिति सर्वत्र वर्तते इत्यस्या उक्तेः को विषयः इति जिज्ञासायां वा विशेषः स इत्थम् कालिक सम्बन्धेन सर्वे पि पदार्था काले वर्तन्ते इत्यत्र तु न कस्यचन विमतिः। तत्र ये खलु जन्याः पदार्थाः तेषां सर्वेषां साक्षात् क्रियाद्वारा वा कालोपाधित्वमित्य-त्रापि न विमतिः।

---

१- सि०मु० दीधितः पृ० २।६०

तत्र च उपाधिउपधेययोरभेदाद् उपाधिष्वपि कालत्व व्यवहार: इति कृत्वा कालरूपेषु जन्येषु घट पट वृक्ष नदी पर्वतादिषु औपचारिक:कालपदव्यवहार्यता आगता ।अत: सर्वेषु जन्यपदार्थेष्वपि कालात्मकत्वात् सर्वाधिकरणता न्याय प्राप्त्य एव ।

तांत्रिकदृष्ट्या कालस्वरूप-

कालस्य धर्म: परिणाम: ।सर्वे प्राकृतिक वस्तूनि: कालराज्ये अवस्थिता: तथा परिणामशीला वर्तन्ते ।

परिणामक्रमे अतीतनागतावर्तमाना च त्रिभेदगणना भवति अतीतात् प्रवहमाना सृष्टिधारा वर्तमानम् भेदयन अनागतं प्रति प्रवहति अथवा अनागतात् प्रवहमाना सृष्टिधारा वर्तमानम-विभेदयन् अतीतं प्रतिगच्छति । स्वंप्रवाह: कालपरिणामसूचक: ।

अत्र कालार्थे खण्डकालेति ज्ञातव्य: ।

आगमशास्त्रानुसार खण्डकालस्योर्ध्वे महाकालावस्थिति किन्तु तत्काले परिणामधर्मस्याभावा: वर्तते ।महाकालस्य समय: विश्वस्य प्रत्येकस्मिन्क्षेत्रे अक्षत भावे विद्यमान: ।

सांख्ययोगशास्त्रधारायां: पर्यालोचने परिणाम: प्रकृति धर्म: इति निरूपित: ।परिणामेन सह कालस्य नित्यसम्बन्ध: वर्तते ।

---

१- सम्बोधि ले० महामहो पं० गोपीनाथ कविराज

तांत्रिकग्रन्थमाला (प्रथमखण्ड ) सन् १९८१

परिणामस्य द्वौ भेदौ यथा- सदृशपरिणाम विसदृश परिणामश्चेति ।

महाप्रलय काले प्रकृतिः सदृशपरिणामयुक्ताभवति।सृष्टि काले विसदृश परिणामो भवति सदृश परिणामेप्राकृतिक उपादानानां कैचितपरिवर्तनम् न भवति ।

सत्वरजतमेति प्राकृतिकोपादाना सन्ति । सत्व सत्वरूपे, रजः रजरूपे,तमः तमरूपे स्पन्दति । अयमेव सदृश परिणामः । अस्मिन्परिणामे त्रिगुणानाम् मिश्रणम् न भवति ।एते त्रयः स्व स्वरूपे परिणताः भवन्ति । किन्तु विसदृशपरिणामे त्रयाणाम् परस्परमिश्रणं भवति तथा वैषम्यो पि जायते । मिश्रण परिणामे कैचित्सत्वप्रधाना केचित् तम प्रधाना भवन्ति । त्रिगुणानांमिश्रण मिदं गुणगत तारतम्येन भवति । सृष्ट्यादितः कालक्रीडा चलति । संहारावस्थायां सदृश परिणामःभवति ।इयम प्रकृतेसाम्यावस्था वर्तते । प्रकृतेर्गुणवैषम्येन वस्तु सृष्टिर्भवति ।

प्रकृतिः धर्मी तथा प्रकृतेर्धर्मः प्रत्येकानि वस्तूनि । एष वैषम्यरूप परिणामः त्रिभेदाः धर्मगतम् लक्षणगतम् अवस्थागतंचेव । एका प्रकृतिर्विभिन्नधर्मरूपे परिणता भवति ।वस्तुषु लक्षणगत परिणाम कालेन परिवर्तनं भवति ।एष कालगतपरिणामस्योद्भवः ।

अनागतलक्षणेन वस्तुनि वर्तमानलक्षणे उपनीता भवति । तथा वर्तमानात् अतीतावस्थाम गच्छति ।

शास्त्रेष्वयम् त्रिकाल परिणाममेतिकथ्यन्ते । त्रिषु परिणामेषु अतीतानागतस्यान्तराले विद्यमान: वर्तमानस्योभयस्वरूपोस्त: ।

प्रथमो व्यापक: द्वितीयो क्षणिक: ।प्रथमो बहुकालावधि आत्मप्रकाशं करोति किन्तु क्षणिक:परिणाममात्र क्षणकालावधि स्थायी भवति ।एष क्षणिकपरिणाम: ।अवस्था परिणामेति कथ्यते ।काल राज्ये एतदस्य परिणाम: नित्यभावे घट्यते । एतस्मात् कारणात् सृष्टिधारायाम् एको क्रम: परिलक्ष्यते ।अयमेव पौर्वापर्येत्युक्तम् । कालस्येयंपौर्वापर्य: सर्वत्र वर्तते ।अयमेव कालधर्म: काले यत् किंचिदपि दृश्यते तेषु एष क्रम: अवश्यंभावी रूपे विद्यते ।

काल: क्रमबद्ध: अत: क्रमेण विकसति । यदहम्-क्रम: विकास: कथयामि तत्काल व्यापारमवेति । कालाश्रयगृहीत्वा क्रम विकास संभव: । क्षण एको असंहश्च । स्पन्दनवशात् तस्मिन्क्रम प्रतीति: भवति । अयम प्रतीयमान क्रम: कालस्वरूपे आत्मप्रकाशं करोति । क्षण एको द्वितीयश्च ।एष एको क्षणैरेव निखिल विश्वं प्रकाशयति । काल स्थित: जीव: मनेन्द्रियेभ्यो क्षणम् गृहीतुमशक्य: ।

यावत्कालातिक्रमणं न भविष्यति तावत् क्षणसन्धान: असंभव: ।

योगभाष्यकारेण व्यासदेवेनोक्तं-

"एक एव क्षण: तस्मिन् एकस्मिन् स्वक्षणे सर्वजगत् परिणामं अनुभवति" ।

तस्मिन् एकक्षणे निखिलविश्व परिणामः अनुसंघटति । क्षणज्ञानं दुर्लभं दुरुहंच ।

जीवेन्द्रियाणि कालाधीनाः मनश्चापिकालाधीनम् । अतएव क्षणं ग्रहीतुं न शक्यः । कालस्यैव धर्मः क्रमविकासः यदा क्रमोदयः परिसमाप्तिष्यति तदैव क्षणस्यात्मप्रकाशः भविष्यति । क्रम समाप्त्याभावे क्षण प्राप्तिरसंभव: । अस्मिन्प्रसङ्गे गुणानां परिणाम् क्रम समाप्तिः इति योगिनां उक्तिः स्मर्तव्यः ।

गुणानां परिणामगतक्रमसमाप्तिः अपेक्षितः । खण्ड दृष्टिना दृष्टे सति उपलब्धिर्भविष्यति यत 'गुणानाम् परिणाम क्रमसमाप्तिरेव पूर्णतेति ।

परिणाम क्रमसमाप्त्या प्रकाशस्योदयः संभवः । प्रकाशे न तु परिणामः न क्रमस्थिश्चैव । अतएव विकासपूर्णे सति प्रकाशस्य साक्षात्कार संभविष्यति । विकासस्य (कालस्य) मूले बीजावस्थितिः । बीजवपन क्षेत्रे भवति तथानाना परिकर्मेन तदभिव्यक्तिः परिपुष्टिश्च भवति । जलसिंचनेन सूर्यकिरणवायुस्पर्शादिना सहकारिकारणवर्गेण भूगर्भस्य बीजस्य अंकुरणं विकासं च भवति । बीजवपनस्योद्देशः वृक्षोत्पत्तिः फलाद्विमितश्च । एतावस्थाः क्रम विकासेन जायन्ते । अत्र बीज शुद्धिः मृत्तिकाशुद्धिः सहकारिकारवर्गस्य सहायकत्वं ऋतुकालमपि विवेचनीयं भवति ।

सर्वकारणाधिकरणस्य सम्यक्समष्टिना संम्यकसम्मेलनेन च बीजेन वृक्षः वृक्षेण फलः प्रसवति । फलस्यापि विभिन्नावस्था वर्तते । अपक्वेन सुपक्वावस्थापर्यन्ता एतत्क्रमः। प्रकृति राज्ये विकासेन प्रकाश संभवः । विकासस्य साधकता प्रकाशरूपो लक्ष्यैव वर्तते । अयम विकासः कलेत्युच्यते । अयमेव जगद्धर्मः । प्रकाशप्राप्तिः विकासोद्देश्यः किन्तु प्रकाशः कालातीतः ।

इदमपि स्मर्तव्यं मत विकासरहितप्रकाशः कालातीतजगतोः क्रीडनं वर्तते ।

यद्यपि प्रकाशः नित्यसिद्धः तथापि प्रकृतिजगतौ कालजगतौ वा तदोपलब्धिः विकासावलम्बनेन भवति ।

कालस्य मुख्य कार्यः कलनं अतएव कालराज्ये सर्वत्र परिणाम क्रिया चलति ।

पृथिव्याम् जायते, अस्ति विपरिणमते वर्धते, अपक्षीयते एवम् नश्यतेति एते षट्विकारः कालगत परिणामस्यैव स्वरूपाः सन्ति ।

देवलोके सामन्यतः आविर्भाव तिरोभावस्थिति त्र्यव स्थान्तर्गतः परिणामः कार्य करोति । तत्रापि परिणामः सूक्ष्मरूपेण भवति ।

अपि उभयाविपरीताशक्ती कार्यशीला ।
एका भावशक्ति: अनुग्रहशक्तिर्वा ।
द्वितीया कालशक्तिर्तिरोधान शक्तिर्वा ।
पूर्ण परमतत्वे इमे शक्ती भेदरहिता

अभिन्नरूपेण स्वतंत्र स्वरूपसंज्ञाभ्याम् कार्यान् कुरुत: ।

यदा परमेश्वर: आत्मसंकोचनंकृत्वा ।जीवरूपे आत्मप्रकाशं करोति तदा एतयोधारा पृथक् पृथक् संजाता । एकाशक्ति जीवभावं पशुभावं वा पोषयति तथा द्वितीया पशुभावं निर्वृत्य परस्वरूपे प्रत्यावर्तनं करोति ।

अनुग्रहशक्ति: आत्मानम् परमस्वरूपे पुन: प्रतिष्ठापयति । कालशक्तिश्च निरन्तर बहिर्मुखी प्रेरणया जीवनसंसारे बध्यति ।

या शक्ति: स्वधिकारेण क्रमश: कालम् अपसारयति तस्या: संज्ञा कालसंकर्षिणी शक्ति: ।

यत्र अचिन्त्याशक्तिप्रभावेण कालमात्राधायते तत्र काल सन्धि प्रकाशते तथा चाप्रकाशस्य सहजानुभूतिर्भवति ।यदासाण: स्थायी रूपेण प्रतिष्ठित: तदा कालमात्रस्याभाव वर्तते ।एषा कालसंकर्षिणी अवस्थेति निगद्यते ।

कालस्य महाकालस्य च तात्पर्यः

कालः महाकालश्च स्वरूपतः एकैव वर्तते तथापि उभयोर्पार्थक्यं विद्यते। जगत्परिणाममूले कालशक्तिः क्रियाशीला। प्रकृतिः परिणामशीला अतः सृष्टिधारया नियंत्रितः।

पातंजल दृष्टिना प्रकृतिः परिणामिनी।
परिणामे पि सदृश विसदृशेति द्विभेदो वर्त्तते।

गुण त्रयाणां साम्यावस्था प्रकृतेस्स्वरूप वर्त्तते। वैषम्येन सृष्ट्युदयः जायते। लयकाले गुणानि स्वस्वरूपे लीनं भूत्वा सदृश परिणामान प्राप्नुवन्ति।

प्रकृतेपरिणामः स्वभाव सिद्धः तथापि गुणानां पाप कर्माणि काल सापेक्षाणि। गुणपाकस्याभावे विसदृशपरिणामः तत्त्वान्तर परिणामः वा न घटयति। यदि असंभावित तत्त्वान्तर परिणामः तदा सृष्ट्युदयः अपि असंभवः। सृष्टिमूले कर्मसंस्कारः आवश्यकः तथापि अपक्व संस्कारेण सृष्टिरसंभवः। अतएव कालः अपेक्षितः। उक्तं महाभारते - "कालःपचति भूतानि" इति।

तांत्रिकदृष्टौ काले महाकाले च पार्थक्यं वर्तते। पूर्णत्व मार्गस्यारोहणे कालाख्यस्य भेदं कृत्वा महाकाल राज्ये प्रवेश संभवति। पश्चात् महाकालभेदनोपरान्त पूर्णाखण्ड राज्ये प्रवेश संभूतः। यथा शास्त्रे महाप्रलय वर्णने विवरणं श्रूयते तथैव महासृष्टेरपि विवरणमुपलब्धं।

महासृष्टौ अतीतानागतवर्तमानसंक्रान्तविषये न को पि भेद: । अनंतसृष्टे: सम्प्राप्ता तत्र प्रकाशित: ।

तत्र अनन्तासृष्टिरिदम् रूपेण प्रकाशित: न तु अहमरूपेण ।

इदं विश्वम् कालराज्यैअवस्थित: । यम् ब्रह्माण्डेति निगदितं तत्कालाधीनं यत: तत्रापि सृष्टिस्थितिसंहार कार्याणि भवन्ति । तद्ब्रह्माण्डानि अनन्तानि । ब्रह्माण्डसमष्टिना प्रकृत्यण्डस्य सृष्टिर-जायत । प्रकृत्यण्डो पि असंस्यात: । तत्रापि सृष्टि: स्थिति संहार कार्याणि सन्ति ।

समस्त प्रकृत्याण्डानां समष्टि: मायाण्डसृष्टि: । तुल्य प्रकारकानि मायाण्डानि असंख्यात्मनि । अत्रापि सृष्टिस्थितिसंहार क्रीडा विद्यमाना । मायाण्डस्य कर्ध्वभागे शक्त्याण्डस्यस्थिति: वर्तते । तत्र स्थूला सृष्टिस्थितिसंहारलीला न भवति वरंच सूक्ष्मा भवति, इति भेद: । प्रकृति पुरुषयो: समन्वयेन विश्वरचना उक्त: । तत्पुरुषाख्यस्य कालश यज्ञश्च इति भेदेन द्वौ विवर्तौ स्त: ।

काल पुरुष: अनादि: व्यापक:, यज्ञपुरुष: सादि परिच्छन्न: व्यापकस्य कालपुरुषस्यैव यत्किंचित् परिच्छिन्न भूत प्रदेश: सैव यज्ञपुरुषेति उक्त: ।

कालपुरुष: सृष्टे: प्रथम: प्रवर्तक: । स्वयं यज्ञपुरुषो पि कालपुरुषाश्रयेणैव जगत्रचना कार्यसमर्थ: ।

तन्महाकालोदरे अनन्तविश्वचक्राणि भ्रमन्ति । एषः मन्त्रसंहितासु कालः तथा उपनिषत्सु परात्पर नाम्ना प्रसिद्धः । सर्वमृत्युघन- अमृतत्वस्य नामैव परात्परः । सदमृतत्वः असत् मृत्युतत्वः उक्तं च यथा-

"अन्तरे मृत्योरमृतं मृत्यवमृतमाहितम्[1]
तदन्तरस्य सर्वस्य तद सर्वस्यास्य बाह्यतः[2]"

इत्यानुसार उभौ उभयोः ओतप्रोतौ । तमः प्रकाशवत् विरुद्ध परस्परौ तथापि अविनाभूतौ ।

उभयोरेकः सत् अपरश्च असत् । सदसद्रूप अमृतमृत्योः समष्टिरेव तत्काल पुरुषः । एतदाधारमतः कृष्णस्योक्तिर्यथा- "अमृतंचैव मृत्युश्च सदसच्चाहमर्जुन"

वेदेष्वप्युक्तम्- "नैव वा इदमग्रे सदासीत्, नैव सदासीत् । आसीदिव वा इदमग्रेनैवासीत् । तस्मादेतत् ऋषिणाभ्यनुक्तं नासदासीन्नो सदासीत्तदानीम् इति ।[3]"

एवम विलक्षण तत्वस्य संज्ञा परात्परः अयमेव काल- पुरुषः ।

तदसीम् परात्परे प्रतिक्षणे विलक्षधर्मा माया बला उदयन्ति लयन्ति च ।

---

१- शत० १०।५।२

२- ईश० ५

३- शत० १०।४।१

यद मायाबल: असीमम् ससीमं कर्तुम् समर्थ: यत्प्रभावेण तदविश्वातीत: विश्वचरा विश्वे भवति तथा या शक्ति: कालम् यत्रूपे परिणायति तत् महामायाया:संज्ञा प्रकृतीति ।अस्या: समन्वये-नैण कालपुरुष: स्व यत्किंचित्प्रदेशेन बध्वा कामना चक्रे निपतति ।

एकैकेन मायया एकैक विश्वचक्रमुद्भवति । मायावलो कल: । अनन्तविश्वचक्राणि तस्मिन् ।अनन्तविश्वधिष्ठाता तत्पुरुष: "काल:" नियति खड्गं हस्ते धृत्वासर्वशासक: भवति ।तत्पूर्ण पुरुष: सर्वोपरि प्रतिष्ठित: ।

सर्वेश्वस्य कालपुरुषस्य निरूपणे उक्ता: अथर्वश्रुतय:-

कालो अश्वो वहति सप्तरश्मि: सहस्रक्षो अजरो भूरिरेता: ।
तमा रोहन्ति कवयो विपश्चितस्तस्य चक्रा भुवनानि विश्वा ।

स इमा विश्वाभुवनान्यंजत काल: स इयते प्रथमोनुदेव: ।

कालो द्विवमजनयत काल इमा पृथिवीरुत ।
कालेहं भूतं भव्यं चेषितं हृषितिष्ठते ।।

काले तप: काले ज्येष्ठं काले ब्रह्म समाहितं
कालो हि सर्वस्येश्वरोय:पिताधीत् प्रजापते:
काल: प्रजा असृजत् कालो अग्ने प्रजापतिम्
स्वयंभू: कश्यप: कालात् तप: कालादजायत ।।

"कालेयमङ्गिगरादेवो थर्वाचाधितिष्ठत: इमंच लोकं परमंच लोकं पुण्यांश्चलोकान् विधृतोश्चपुण्या: सर्वाल्लोकानभिजित्य ब्रह्मणा काल: । स इयतेपरमो नु देव इत्यादि ।अत्र काले सामर्थ्य भावेन शक्तोनि निरूपित: ।

---

१- अथर्व सं० १९।६।५३-५४

<u>नैमिषे काल शक्त्यात्मिकाया:आद्या शक्तेरविर्भाव: ।</u>

एषा काल शक्ति: त्रिस्वरूपा वर्तते सूक्ष्मा महच्च ।
य: काल: प्रपंचस्य परमाण्वादि सूक्ष्मावस्थायाम् व्याप्त: स: अनन्तसूक्ष्म: ।तथा यो सृष्ट्यादि प्रलय पर्यन्त सर्वासां अवस्थानां भोगकर्ता स परमो महानिति ।

एषा सूक्ष्मा कालशक्ति: यदा परमाण्वादिसूक्ष्मावस्थात: स्थूलं प्रति विकासोन्मुखो भवति तत्काले एको विशिष्टावस्था भवति यत्र अव्यक्तसूक्ष्माशक्ति : स्व ज्योतिर्मयं विग्रहम् द्योतयन् दृष्टादृश्य-स्यानुसंधानं करोति तदवस्था कालविभागे निमेषाख्या भवति ।

एवम् कालानन्तैर्महत्तु प्रकाशक: ।विन्दु विशेष: निमेष संज्ञा संज्ञित: ।

अनेन देव्या: निमेषेन समस्तविश्वानि निखिलब्रह्माण्डानि नश्यन्ति पुनश्च भगवत्या निमेषमात्रेणैव सृज्यन्ति उक्तंच श्रीमद्देवी-भागवते -

निमेषमात्रंकालश्च[1] श्रीदेव्या:प्रोच्यतेमुने ।
एवं नश्यन्ति सर्वाणि ब्रह्माण्डान्यखिलानि च ।
निमेषान्ताकालेनपुन: सृष्टिक्रमेण च ।
एवं कतिविधा सृष्टिलय: कतिविधो मिता ।।

श्री मद्भागवत पुराणे कालविभाग प्रसङ्गे लिखितम्-

---

१- श्रीमद्देवीभा०पु० ६।८।७५-७६

अणुर्द्वौपरमाणूस्यात्त्रय त्रसरेणुस्मृत: जालार्करश्म्यवगत: खमेवानुपतन्नगात् ।त्रसरेणु त्रिकंभुङ्क्ते यकाल: त्रुटिरुच्यते, शतभागस्तु वेध: स्यात् । तैस्त्रिभि: लवस्मृत: निमेषस्त्रिलवोज्ञेय: [1] इत्यादि अत्रनिमेषस्य यावस्था यत्स्थानात् कालशक्ते: महत्तु उद्भासते ।निमेष विन्दवोद्भासितकालसत्ते सन्निभावि स्वरूपं निमेषे भवम् नैमिषम् इत्युक्त: । एवंच कालरूपकालचक्रस्य सृष्टिचक्रस्य नैमिषोऽपि स्थलं चापि यत: भगवत्या: निमेषोन्मेषेण लीलया उद्भवत्यादि लीला नैमिषे सम्भवति अतस्वरूपं नैमिष एव कालशक्तेराविर्भाव भूमि: सुदर्शित: ।

श्रीमद्भागवतस्य द्वितीयस्कन्धेऽपि अस्य संकेत: निरूपित: तत्र लिखितम्-

एकोऽहं बहुस्याम् इति कामनया मायाशक्ति: स्वस्वरूपे स्वतन्त्र कालकर्मस्वभावमधिकृत्य स्वीकृत्य वा कालरूपेण गुणान् विक्षोभ्य महदजायत् ।तेन महदेव तमप्रधानाहंकार:अजायत । अहंकारेण आकाश: ।आकाशस्य तन्मात्रा गुणश्च शब्द: ।एष शब्देन दृष्टा-दृश्यस्य बोधो भवति [2] ।

---

१- श्रीमद्भागवत पु० ३।११।४-७

२- श्रीमद्भागवत पु० २।५।२१-२५

अत्र मायाशक्तिसंकल्प एव निमिषोन्मेषक्रिया प्रोक्ता इति ।

लिखितंचापि-

उन्मेषनिमेष शब्दाभ्यां तदुपचरितवृत्तिभ्याम्[1] इच्छामात्रमेकंशंकर संबन्धि प्रतिपद्यते स च तस्य नित्यो धर्म: । स्वभावभूत: तस्य उन्मेष निमेष शब्दवाच्यत्व मित्थं च उपचारात् ।

स्पन्दकारिकाख्य ग्रन्थे पि निमिषोन्मेषेण सृष्टिचक्रस्योद्भवलयादि निरूपित:यथा-

यस्योन्मेष निमेषाभ्यां जगत: प्रलयोदयौ ।
तं शक्तिचक्रविभवप्रभवं शंकर स्तुम: ।।

वायुपुराणे पि इत्याशय:प्रकटित: यथा-

यदुन्मेष निमेषाभ्यां जगत्प्रलयोदयौ ।
भवेतां यस्य शक्तिर्यदादारत्यास्थिता ।।

यद्यपि वस्तुतस्तु एका शक्ति: तथापि प्रसारभूमिकायाम् एषा अनन्तधाराभि: प्रवहति । निखिलविश्वपदार्था: शक्तिरूपा: सन्ति ।

सामान्यपति दशायाम् चिदानंदइच्छाज्ञानक्रियादि ।पंच असंकुचितमुख्यरूपेणुसतत् विकासशीला एषा विशेषपशुदशायाम (जीवभावे) प्राणान्त:करणेन्द्रियादि अनन्तप्रमेयेषु प्रवहति ।

---

१- स्पन्दकारिका विवृति ४ पृष्ठ

२- स्पन्दकारिका १।१

प्रमातुरभिन्ना स्वातंत्र्यशक्तिरेव तस्य अनियनता सैव इच्छाशक्ति: प्रकाशरूपता स्वचिच्छक्ति: विमर्शमयता एवं ज्ञान-शक्ति: तथा विभिन्नाकार क्रमाभासामर्थ्यं एव क्रिया शक्ति: ।

इदमेव निखिल दृश्यमान प्रपंच: मौलिकस्वातंत्र्यशक्तेरेव विकास:वर्तते ।

एतावन्मात्ररूपधारिणीभूत्वापि मुख्यत: इच्छाज्ञानक्रियादि रूपेषु शाश्वदस्फुरति ।

पतिदशायामिष्यमाणा विश्वकल्पना प्रथमेच्छाशक्तौ अभिन्नभावे स्थिता भवति । अनन्तर ज्ञानशक्त्या विमृश्य क्रियाशक्त्या बहिराभासात्मिका भवति । एवम् एका स्पन्दशक्ति: परमेश्वरी स्व-स्वातंत्र्यबलेन इच्छाज्ञानक्रियादिनाम व्यपदेशपात्रं धारयति । एते व्यपदेशा: उन्मेषागत मायाशक्तौ: सामर्थ्येन भवन्ति । नान्य: किंचित्मात्र संकल्पात्मकगत्यातिरिक्तं निमिषोन्मेष: स्वसंकल्पा-त्मक गति शैवागमे इच्छा शक्तीति कथित: । इयमेच्छाशक्ति: शंकरस्य (ब्रह्मतत्त्वस्य) नित्यधर्मस्वभाव: वा उक्त: यत: शक्ति: शक्तिमतोश्च अभिन्न: ।

यस्योन्मेषनिमेषादि०[1] सूत्रे संकल्पमात्रद्योतनाय इच्छा शक्ति प्रकाशनाय वा निमेषोन्मेष शब्द: प्रयुक्त: । उन्मेषावस्था परमेश्वरसंकल्पे विश्वोत्पत्तिरूपविशुद्ध चिन्मात्ररूपावास्थितेर्धनिक: उन्मुखता एव भवति ।

१- वायु०पु० १०४।३३

निमेषावस्था परमेश्वरसंकल्पे स्वप्रसंसारस्य अनन्त विभेदपूर्ण वैचित्र्यप्रसारोन्मुखता एव भवति। उन्मेषे इदं भाव: प्रमातृभाव: वा अहंरूपे विशुद्धचिन्मात्र प्रमातरि लयति। शैवशब्दावल्या-मेषअनुग्रह: शक्तिपातेति निगदित:। निमेषे चिन्मात्र प्रमातरि अभिन्न वर्तमाना प्रमेयता पूर्वोक्तमायाशक्तिप्रभावेण भिन्ना भूत्वा विकासे आगच्छति। शैवशब्देऽनुग्रहा तिरोधानेतिउक्ता।

परमेश्वरसंकल्पे इमौ रूपौ अन्तर्मुखस्पन्दबहिर्मुखस्पन्देति निगदितौ।

मालिनी विजये प्युक्तम्-

या सा शक्तिर्जगद्धातु कथिता समवायिनी।
इच्छात्वं[1] तस्य सा देवो सिसृक्षो प्रतिपद्यते।

विश्वरूपे प्रवृत्तोन्मुखीपरमेश्वराभिन्नाशक्ति: आदौ इच्छारूपा पुनश्चक्रमेवाग्रेप्रसृतोन्मुखा ज्ञानक्रियारूपे आविर्भवति। ज्ञानशक्ति: वर्णमन्त्रपदेति त्रिषु तथा क्रिया शक्ति: कलातत्व भुवनेति त्रिषु प्रसृत्य वाच्य विश्वस्य रूपं धारयति। प्रथमत्रिभ्य: रूपेभ्य: वाचकविश्वस्य तथेतररूपेभ्य: वाच्य विश्वस्य विकास: भवति। इति।

अतएव स्पष्टं यत् शक्तिनिमिषोन्मेषेण वा परमेश्वर संकल्पेनैव प्रकाश्य प्रकाशकभाव:उद्भवन्ति इति।

---

१- मालिनी विजय ३ ५

अथर्ववेदे मुण्डकोपनिषदि यजुर्वेदे चापि निमिषन् शब्द: जगत्चेष्टार्थे प्रयुक्त: । निमेषणादिक्रिया परमेश्वरेच्छा येन विश्वोद्भवलयावबोधक: चेष्टारूपकाल: कालशक्तिर्वा, आविर्भवति ।

वायुपुराणे प्युक्तम्-

काल: आदिनिमेषो संख्या वसुरित्युच्यते,अहोरात्र मूर्ति: निमेषावयव: ।

शिवपुराणे पि लिखितम्-

निमेषमात्रेव कार्यपरिमाण: यद्यपि प्रलयान्तमेव संख्यारूपकालस्यावधि: तथापि निमेष: प्रथमो वर्तते पश्चादेव काष्ठा कला, मुहूर्त दिन पक्ष,मास वर्ष,मन्वन्तरकल्पादिनाम गणना ।

अतएव उपरोक्त कथनेन स्पष्टं यत् कालस्य शक्तेर्वा प्रारम्भिकस्वरूपप्रकाश: निमेषेण एव भवति ।

एष बिन्दुस्वर: शक्तिचक्रस्य ब्रह्मनाम्ना चक्रस्य वा नेमिशीर्णस्थलं चापि वर्तते - अतएव अर्थेन: नैमिषमिति नाम्ना प्रसिद्धेति सजात: ।

श्रीमद्भागवतपुराणे नैमिषे निमिषक्षेत्रे त्युक्त्वा परमेश्वर संकल्पात्मक अहं रूप द्योतिनो विशुद्धचिन्मात्ररूपं प्रमातरि लीनावस्थाया: द्योतनमिष्टमिति । अत्र संकेत व्यायेन ब्रह्मात्मभूता शक्तेरा विर्भाव तिरोभावं रूप दिव्यस्थलं द्योतनमिष्टम् ।एषापैव विकासोन्मुखीभूत्वा क्रियारूपे काले प्रवर्तते ।

१- अथर्ववेद का० १०।८।६ वायुपु० अ० ३१ मुण्डको०२।१
शिवपु० वा०सं० अ० ६ श्रीमद्भागवत पु० १।१।१

शक्तिचक्रस्य स्वरूपम्-

साध्यवाचकमयस्य विश्वस्य सर्वतोमुखी विकास कार्यं सम्पादयित्री परमेश्वर्या: शक्तय: कदाचित् मातृका रूपिणीभूत्वा अकारपर्यन्ताष्ट वर्गाणामधिष्ठात्री अभवन् माहेश्वरी[1] ब्राह्मणी, कौमारी वैष्णवी ऐन्द्री याम्या चामुण्डा योगी श्वेतापाष्टशक्तीनाम रूपेषु कदाचित् अन्तर्बहिष्करणायाम् सह संबन्धिनी खेचरी भूचरी दिक्चरी गोचर्यादि शक्तिरूपेषु कदाचित् प्राणबुद्ध्यन्त:करणेन्द्रियादि महाभूतस्वरूपेषु प्रसृता भवति ।

तात्पर्यमिदम् यत् लोके भूतधाम्न्य असंख्यप्रमेयपदार्थाः ये प्रत्यक्षत: अनुभूता: ते सर्वे परमेश्वरस्यानन्ता शक्तिना भौतानेव सन्ति ।

एतनन्तशक्तिश्रेणीनाम् शास्त्रीय संज्ञा 'शक्तिचक्रमिति'[2] निगदित: ।

एष शक्तिचक्र: विभवेनपूर्ण: । विभवशब्द: ऐश्वर्याभिप्राय बोधक: । ऐश्वर्य: कर्तुं:करणीयस्य अकरणीयस्य अन्यथा करणीयस्य वा स्वातन्त्र्येच्छा बोधकश्च । अभिप्रायोऽयं यत् शक्ति: शक्तिभूतत्वात् नित्योदीयमाने शाश्वतत्वे च पूर्णाभिदाहंविमर्शस्य स्वरूपिणी अस्ति । विश्वोत्तीर्णा चिन्मात्ररूपावस्थिता शक्तिरपि निखिलान् विभूतान् धारयति ।

---

१- तदेवशक्तिभेदेनमाहेश्वर्यादिचाष्टकम् वि० ३।१३-१४

अथवा विश्वस्य शान्तप्रसारूपावस्थिता भूत्वापि कल्पनातीत विश्वनिर्माण । दुर्घटकार्यसमर्था परिपूर्णा च ।

अपरिमितकल्पनातीतानेकाकारतायामपि एकाकारतया: मधुरतमरसैनपरिपूर्णस्वरूपाधारे विश्वकर्तृत्वे पि सा स्वयं निर्मल-कारयिनी । विश्वावभासनकारी अनन्तशक्तिभिरनुप्रवहमानापरिपूर्ण शक्त्या सह संघट्टमप्यावस्थैव शक्तिमन्तोपरिपूर्णावस्थावर्तते । एषा दिव्यस्वरूप: अहमस्फुरणात्मक भूतत्वात् केवलानन्दरूप: [2] निष्कलरहित: अवर्णनीय: अनुभवगम्यश्च । शकनं शक्ति: - सामर्थ्यविश्वनिर्माणादिकारिभिरस्वरूपैव[3] अत्र स्पन्दकारिकायाम् शक्तिचक्रविभवप्रभवमिति कथनेन - शक्तिचक्र: अर्थात् प्राणबुद्धीन्द्रियादिरूपेषु, प्रवहमानशक्तिपुंजस्य विभवात् वस्त्वनुभूतित्वादेव प्रभव: शंकररूपस्याभिव्यक्ति: इति निरूपित: ।

स्पन्दनिर्णये प्युक्तम्-

देहाद्याविष्टोऽपि परमेश्वर: करणोन्मीलनिमीलनाभ्यां[4] ।
रूपादिपंचकमयस्य जगत: सर्गसंहारौ करोति ।

---

१- स्पन्दकारिका प्रथमसूत्रव्याख्या पृष्ठ २२-२३

२- दिक्कालकलनोन्मुक्ता देशोद्देशाविशेषिणी
व्यपदेष्टुमशक्यासावकथ्या परमार्थत: ।
अन्त: स्वानुभवानन्दा विकल्पोन्मुक्तगोचरा ।
यावस्था भरिताकारा भैरवी भैरवात्मन: ।
तद्वपुस्तत्त्वतो ज्ञेयं विमलं विश्वपूरणम् । -वि०भै०१४-१६

३- वि०भै० १३ पृ०

४- स्प०नि०पृष्ठ ८

तंत्रसाराख्यग्रन्थे पि लिखितम्-

तत्र परमेश्वर:पूर्णसंवित्स्वभाव: पूर्णतैव अ शक्ति: कुलं सामर्थ्यं ऊर्मि: हृदयसारं स्पन्द: विभूति: त्रीशिका काली कर्षिणी चण्डी वाणी भोगो दृक्नित्या इत्यादिभि: आगमभाषाभि: तत्तदन्वर्थप्रवृत्ताभि: अभिधीयते,तेन तेन रूपेण ध्यायिनां हृदि आस्थाय इति।

सा च समग्रशक्तितादर्शनेन पूर्णतासंवित्प्रकाशने ।शक्तयश्च अस्य असंख्येया: ।किंबहुना,यत् विश्वं ता अस्य शक्तय:,ता: कथम् उपदेष्टुं शक्त्या: तिसृणु तावत् विश्वं समाप्यते यथा इदं शिवादि-धरण्यन्तम् अविकल्प्य संविन्मात्र इति ।रूपतया बिभर्ति च पश्यति च भासयति च परमेश्वर:सा अस्य श्रीपराशक्ति: ।यथा च दर्पणहस्त्यादिवत् भेदाभेदाभ्यां सा अस्य श्री परापराशक्ति: ।यथा परस्पर विविक्तात्मना भेदेनैव सा अस्य श्रीमदपराशक्ति: ।एत त्रिविधं यदा धारणम् आत्मन्येव क्रोडीकारेण अनुसन्धानात्मा गृह्यते,सा अस्य भगवतो श्रीपरैव श्रीमन्मातृ-सद्भावकालकर्षिण्यादिशब्दान्तरनिरूपिता ता एता चतस्र: शक्तय: स्वकृत्यात् प्रत्येकंत्रिधैव वर्तन्ते ।सृष्टौ स्थितौ संहारे च इति द्वादश भवन्ति । तथाहि संवित्पूर्वम् अन्तरेवभावं कलयति,ततो बहिरपि स्फुटतया कलयति, तत्रैव रक्तिरूपतां गृहीत्वा तत: तमेव भावमन्तरुपसंजिहीर्षया कलयति, ततश्च तदुपसंहारविघ्नभूतां शङ्कां निषिध्यतीति ग्रसते च- ग्रस्त शङ्कां-शभावभागम् आत्मनि उपसंहारेण कलयति, ततोपसंहर्तृत्वं ममेदं रूपमित्यपि स्वभावमेव कलयति, तत उपसंहर्तृस्वभावकलने कस्यचिद्भावस्य वासनात्मना अवस्थितिं कस्यचित् संविन्मात्रावशेषतां कलयति ।तत: स्वरूपकलानान्तरीयकत्वेनैव करण चक्रं कलयति ।तत: करणेश्वरमपि कलयति तत: कल्पितं

मायीयं प्रमातृरूपमपि कलयति सङ्कोचत्यागोन्मुखं विकासग्रहणरसिकमपि प्रमातारं कलयति ततो विकसितमपि रूपं कलयति इत्येता द्वादश भगवत्यः संविदः प्रमातॄन् एकं वापि उद्दिश्य युगपद्रूपेण भिन्नाः त्रिशक्त्यादिस्थित्यापि[1] उदयभागिन्यः चक्रवदावर्तमानाबहिरपि भासकलाराश्यादिक्रमेण अन्तर्वा घटपटादि क्रमेणापि भासमानाः चक्रेश्वरस्य स्वातन्त्र्यं पुष्णत्यः श्रीकाली शब्दवाच्याः ।

ब्रह्मनेमिचक्रस्य स्वरूपम्

आगमोक्त शक्तिचक्रस्य श्रीचक्रस्य वा वर्णनम् उपनिषत्सु ब्रह्मनेमिचक्रस्वरूपे कृतम् ।

श्वेताश्वतरोपनिषदि यथा- ब्रह्मवादिनः वदन्ति

किं कारणं ब्रह्म कुतः स्म जाता,
जीवाम् केन क्वच सम्प्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु,
वर्तामहे ब्रह्मविदो व्यवस्थाम् ।।[2]

१- तन्त्रसार ४ आ०पृ० २४
२- श्वेताश्वतर उ० १।१-४

कालः स्वभावो, नियतिर्यदृच्छा भूतानि योनिः पुरुषः इत्यनेक कारणानाम् वर्णनम् शास्त्रेषुपलब्धः तत्को हेतुः ? यदि एषाम् संयोगः मन्यामहे तदपि न आत्मभावात् । आत्मापि न सुख दुःखहेतुत्वाद् अनीश्वरहितोति ।

इत्येवं चिन्तयमानाः ब्रह्मवादिनः ध्यानानुगताः स्वगुणैर्निगूढाम् देवात्मशक्तिमपश्यन् यः एकः तानि कालात्मयुक्तानि निखिलानि कारणान्यधि तिष्ठति ।

परमेश्वरस्वरूपभूता अचिन्त्यशक्तिदर्शिकाः ऋषयः ऊचुः वयम एकं विचित्र चक्रम् पश्यामः यो एकनेमिम् त्रिवृतम् षोडशान्तम् शतार्धारम् विंशति- प्रत्यराभिः षड्भिः अष्टकैः युक्तम विश्वरूपैकपाशम् त्रिमार्ग भेदम् द्विनिमित्तैकमोहमिति ।

अत्र अव्याकृत प्रकृतिरेवनेमिः सत्वादि त्रिगुणादेव आवृता पृथिव्यापोऽनलो वायुः खं मनो बुद्धिरेव अष्ट सूक्ष्म तथाष्ट स्थूल तत्वान्येव षोडशान्तम् अन्तःकरणस्य पंचाशत्वृत्त्यः शतार्धारं पंचभूतदशेन्द्रियाणि पंचविषयाण्येव विंशतिप्रत्यराः अष्टप्रकृतिः अष्टधातुः अष्टैश्वर्यः अष्टदेवयोन्यः अष्टाभवः अष्टगुणाः एते षडष्टकाः आसक्तिः विश्वरूपैकपाशः देवयानः पितृयानः योन्यन्तगतिश्चैव त्रिमार्गभेदः पुण्यपापकर्मश्च द्विनिमित्तम् अज्ञान एव नाभिः इत्येवं चक्रम् ब्रह्मणोमयमुक्तम् । अस्मिन् सर्वाजीवे सर्वसंस्थे बृहन्ते ब्रह्मचक्रे[१] हंसः (जीवः) भ्राम्यते । इति ।

---

१- श्वेत०उ० १।६ ।

उपरोक्तशक्तिचक्रं ब्रह्मनेम्यचक्रं वा पुराणेषु-
धर्मचक्र इत्यपि निगदितः ।

नैमिषनाम कारणाश्रय प्रसङ्गे पुराणोक्त ब्रह्मनेमय चक्र-धर्मचक्रादि नामोल्लेख वर्णनम् करिष्यामि । केचित्पुराणेषु विष्णुना संदर्शितं च ऋषिभिप्रकाशितं तत्र श्रीचक्रस्यैवग्रहणं प्रयोजनम् ।

शक्तिचक्रम् श्रीचक्रम्, ब्रह्मनेमय चक्रंच अत्र न कोऽपि भेदः वर्तते ।

परास्य शक्तिः विविधैव श्रूयते इति वचनेन् एका शक्तिः विभिन्न-रूपेषु संज्ञासु च अनुवर्तते ।

अतएव शक्तिचक्रम्, ब्रह्मनेमय चक्रम् परमात्मा शक्तिचक्रम् । श्री चक्रम् इति कथनेन जगदोत्पत्त्यादि नाते शक्तिहेतुत्व निरूपणमेव प्रयोजनम् ।

अस्याः शक्तेरनन्तम् कालादि वंशापि चतुर्दशभ्रमणेण उन्मिषन्ति निमिषन्ति च ।

सदस्योन्मेषनिमेषस्थ नैमिषं अत एवोक्तं कारणत्वा-त्मिकाभावात् आविर्भावस्थंचापि नैमिषमिति ।

शक्तेन चक्रस्य संसारचक्रात्मकस्वरूपे कालचक्रत्व स्वरूपः-

त्रिपुरामहिमस्तोत्रे लिखितम्-

> श्रीचक्रं श्रुतिमूलकोश इति ते संसारचक्रात्मकं
> विख्यातं तदधिष्ठिताधारशिवज्योतिर्मयं सर्वतः ।
> एतन्मन्त्रमयात्मिकाभिररुणं श्री सुन्दरीभिर्वृतं
> मध्येबैन्दवसिंहपीठललिते त्वं ब्रह्मविद्या शिवे ॥

तत्र टीकायाम् लिखितम्-

श्रीचक्रं श्रुतिमूलकोश इति ख्यातम् ।कथं भूतम् ।संसार चक्रात्मकम् ।पुनः कथं भूतम् ।तदधिष्ठिताधार शिवज्योतिर्मयम् । पुनः कथं भूतम् सर्वतः श्री सुन्दरीभिर्वृतम् । कथं भूताभिः । एतन्मन्त्रमयात्मिकाभिः ।पुनः कीदृशम् । अरुणम् मध्येत्वं ब्रह्म विद्या ।कथं भूते मध्ये ।बैन्दवसिंहपीठललिते इत्यन्वयः ।

श्रीचक्रं महात्रिपुरसुन्दर्याः पूजा चक्रम् ।श्रुतिमूलकोशः वेदानां प्रणवः 'ओंकारप्रभवा वेदाः' इति वचनात् । तस्य कोशभूतं श्रीचक्रान्तर्गतत्रिकोणं तस्य कामकलाधारातबिन्दुत्रयत्वात् । बिन्दुत्रयाणां ब्रह्मविष्णुरुद्ररूपत्वात् । 'ब्रह्मबिन्दुर्महेशानी वामा शक्तिरुदीरिता' इति ज्ञानार्णववचनात् । विश्वं वमतीति वामा वामाशक्तेःशब्दार्थसृष्टिकारणत्वेन श्रीचक्रस्य श्रुतिमूलकोशत्वमित्यादिः। इति कारणात् ।हे महात्रिपुरसुन्दर्याः ।संसारचक्रात्मकं संसारचक्रं कालचक्रं देशचक्रं च ।श्री चक्रस्य कालचक्रेण देशचक्रेण च साम्यं तन्त्रराज्ये ष्टाविंशतितमे पटले शिवेन प्रतिपादितम् । यैरेव मूलविद्याक्षरैः श्री चक्रं प्रवृत्तं तैरेवाक्षरैः संसारचक्रम् प्रसूतमिति ज्ञानार्णवोक्तिः।

यथा- लकारात्पृथिवी जाता सशैलवनकानना ।
पंचाशत्पीठ संपन्ना सर्वतीर्थमयीपरा ॥

सर्वगह्वरमयीसर्वदेवत्रयात्मयी शिवे ।
सकाराच्चन्द्र तारादिग्रहात्मस्वरूपिणि ।
हकारान्महदसंबन्धव्याप्तब्रह्माण्डसंस्थिता ।
ईकारात्त्रिजगद्वीर्यं माया तुर्यात्मिका प्रिये ।
लकारादैश्वर्यशक्तिर्विश्वधारणतत्परा ।
रकारात्तैजसाकृता परं ज्योतिःस्वरूपिणी ।
ककारात्कामदा कामरूपिणी स्फुरदव्यया ।
अर्धचन्द्रेण देवेशि विश्वयोनिरितीरिता ।
बिन्दुना शिवरूपेण शून्यरूपेण शाङ्करी ।

एवं संसारचक्रात्मता मूलविद्यायास्तदात्मकता श्रीचक्रस्येति वा साम्यम् । विस्तारतं प्रसिद्धम् । तदधिष्ठातारौ शिवयोरैक्यम् । तदधिष्ठितानि श्रीचक्राधिष्ठितानि यान्यक्षराणि तान्येव बीज-भूतास्तदावरणदेवतादिमूर्तिरूपाणि त एव शिवा । अणिमासिद्ध्यादयः कामाकर्षिण्यादयः अनङ्गकुसुमादयः सर्वसिद्धिप्रदादयः सर्वज्ञादयो वशिन्यादयः कामेश्वर्यादय एव ज्योतींषि तन्मयं तत्पुरं सर्वतः श्रीचक्रमित्याख्या एतन्मन्त्राक्षरात्मिकाभिः एतद्विद्याक्षरप्रसूताभिः । हकाराच्चतुरस्रं सदैवतम् एकादशत्रिकोणारं सदैवतम्, बिन्दोर्बिन्दवमिति मूलविद्यानवाक्षरैः संपूर्णं श्रीचक्रं सावरणं प्रसूतमिति गुरोरभिप्रायः । उक्तं च ज्ञानार्णवे- लकारः पृथिवी बीजं तेन भूबिम्बमुच्यते । सकाराच्चन्द्रमानन्दे तस्माद्वसुदलं भवेत् । ईकारस्तु सदा माया भुवनानि चतुर्दश । पश्यन्ती परा तस्माच्चक्रकोणं भवेत्प्रिये ।

शक्तिरेकाशस्थाने स्थित्वा सूते जगत्त्रयम् ।
विष्ण्वादीनिति ख्याता वा विष्णोर्दशरूपकम् ।
खकारात्परमेशानी चक्रं व्याप्य विजृम्भिता ।
दशकोणकरं तस्मादुकारी ज्योतिरव्ययः ।
कला दशान्विता वह्निदशकोणप्रवर्तकः ।
ककारान्मदनो देवि शिवं चाष्टस्वरूपकम् ।
यन्निविष्टं तदा चक्रं वसुकोणाद्धिकं भवेत् ।
अर्धमात्रा गुणान् सूते नादरूपा यतस्ततः ।
त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं भवेत् ।
कामेश्वररूपं तत्सदाचार स्वरूपकम् ।
श्रीचक्रं तु वरारोहे श्रीविद्यार्णवसंभवम् । इति ।

अरुणं बालार्कप्रभम् ।श्रीसुन्दरीभिर्वृतं श्रिया सौन्दर्येण सुन्दर्यः श्री सुन्दरीप्रभृतयः ।श्री सुन्दर्याःपंचमहाशव संनद्धसिंहासनं कामेश्वरा इति ।उपवेशनमिति विशेषणः ।वृत परिवेष्टितम् । मध्ये मध्यत्रिकोणमध्ये ।बैन्दवसिंहपीठस्थिते बैन्दवं बिन्दुचक्रं तत्र सिंहासनं पूर्वोक्त रूपं ते स्थिते निरूपकौ भान्विते । त्वं महात्रिपुरसुन्दरी । मूलविद्या परब्रह्मात्मिका ।शिवे कल्याणरूपे ।

---::---

---

१- तंत्रसंग्रह पृ०भा०त्रिपुरामहिम्नस्तोत्रम् श्लोक २८टीका नित्यानन्द

## तृतीय कणिका

प्रकृतिपुरुषयोः शक्तिब्रह्मणोर् ऐक्यस्यान्योन्याश्रितत्व प्रदर्शनं च-

शक्तिब्रह्म प्रकृतिपुरुषश्च उभौ नामरूपेण भिन्नौ वस्तुतः तात्त्विकदृष्टौ आत्मस्वरूपे अन्योन्याश्रयी अभिन्नौ भासेते ।

पुराणोपनिषदादि ग्रन्थेषु तदभिन्नान्योन्याश्रयि स्वरूपस्यैव वर्णनमुपलभ्यते । यथा-

"या प्राणेन सम्भवत्यदितिर्देवतामयी, गुहां प्रविश्य तिष्ठन्ती या भूतेभि व्यजायत एतद्वैतत् ।"[1]

अत्र आत्मचेतनकारी या महाशक्तिः सा एव ब्रह्म नान्यत्- इत्याशयम् प्रकाशितम् ।

अन्यत्र तैत्तरीयेयथा-

"असद्वा इदमग्र आसीत् । ततो वै सदजायत । तदात्मनः स्वयमकुरुत । तस्मात्सुकृतमुच्यतेति ।"[2]

---

१- कठोप० २।१।७

२- तै०उ० ७ अनु०

ऐतरेये यथा-

संज्ञान विज्ञान प्रज्ञानमेधा दृष्टिधृतिर्मतिर्मनीषा जूति स्मृति संकल्पः क्रतुः कामोवशः इत्यादि का शब्दाः तदेतानि सर्वाणि संविद्रूपस्य एव नामधेयानि भवन्ति। अत्रापि शक्ति-ब्रह्मणोरैक्यं प्रतिपादितम्[1]।

श्रीमद्भगवद्गीतायामपि-

'मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्' अव्यक्तोऽक्षर इत्युक्त-स्तमाहुः परमां गतिम्' इति कथनेन प्रकृतिपुरुषयोः ऐक्यम् प्रति-पादितम्[2]।

श्वेताश्वतरोपनिषद्यपि विभिन्नस्थाने शक्तिब्रह्मणोरैक्य निरूपितम्[3]।

मुण्डकोपनिषद्यपि एवम् प्रदर्शितम्[4]।

केनोपनिषद्यपि यक्षप्रकरणे शक्तिब्रह्मणोरैक्यं प्रतिपा-दितम्[5]।

---

१- ऐ०उ० ख० ३।२-३

२- गीता ८।१८, ९।१०

३- श्वेता० १।१२, ३।२, ४।१, ४।१०

४- मुण्ड० ख० २।१०

५- केन उ० खण्ड ३।२-१२

मैत्र्युपनिषदि लिखितम्-

ब्रह्मणः[1] द्वे मूर्तो वस्तः मूर्तरूपं अमूर्तं च- मूर्तमसत्यं अमूर्तं सत्यं चैव ब्रह्मैव ज्योतिरिति ।

जाबालोपनिषद्यपि सोमसूर्य स्वरूपे शिवशक्तिपदास्पदः[2] उक्तः ।

निरालम्बोपनिषदि-

विचित्र जगन्निर्माणसामर्थ्या बुद्धिरूपा ब्रह्मशक्तिः[3] प्रकृतीति निगदितः ।

अथर्वशीर्षेऽपि-

शक्तिः[4] ब्रह्मस्वरूपिणी तथा प्रकृति पुरुषात्मकं जगत् इत्याशयं प्रकटितम् ।

---

१- द्वे वाव ब्रह्मणो रूपे मूर्तञ्चामूर्तञ्चाथ यन्मूर्तं तदसत्यं यदमूर्तं तत्सत्यं तद्ब्रह्म यद्ब्रह्म तज्ज्योतिः । (मैत्र्युप० ५।३)

२- जाबालेशमत्स्यावधूतः कालाग्निरयमूर्ध्वगः ।
तथैव निम्नगः सोमः शिवशक्तिपदास्पदः । (जा०उ०८-६)

३- निरालम्बोपनिषद् मंत्र ६ (बौलोपु०)

४- अथर्वशीर्ष दुर्गासप्तशती ।

योगवाशिष्ठग्रन्थे[1] पि एवम् लिखितम् यथा-

ब्रह्मणा शिवशक्तिश्च चिच्छक्तिर्वा एक एव परम तत्वस्य उपाधि: वर्तते, या जाति भिन्नरूपे आविर्भवति। एकस्यासंज्ञा शक्ति: द्वितीयस्य शिव इत्युक्तम्।

एक: क्रियात्मक: अन्य: शान्त्यात्मक:। एकस्य बाह्य पदार्थे दर्शनम् अपरस्य हृद्गुहायाम्। एकस्य उपासनात् अभ्युदय सिद्धि तदन्यस्योपासनात् नि:श्रेयस सिद्धिर्भवति। द्वयो: स्वरूपयो: उपासनाया: अविरोधात्मक: समन्वय: वर्तते इति।

कठमुण्डकश्वेताश्वतरोपनिषदिष्वपि ब्रह्मणो भासमेव शक्तिपदार्थेषु[2] भासयति इत्युक्तम्।

अहिर्बुध्न्यसंहितायामपि- एषा शक्ति: न तर्कविषया। एवमेव परमात्मशक्तिरपि चन्द्रकिरण इव सर्वत्र भाति। इति कथनेन शक्तिब्रह्मणो[3] अभेदम् उक्तम्।

---

१- योगवाशिष्ठ ३।१००।५-१०

२- अहिर्बुध्न्य संहिता ३।२-५।

३- नतत्रसूर्योभाति न चन्द्रतारकं।
नेमाविद्युतो भान्ति कुतो अग्नि:।
तमेव भान्तमनुभाति सर्वम्।
तस्य भासा सर्वमिदं विभाति।
कठोप०व-२ मं०१५। मुण्डकोपनिषद २।२।१०। श्वेता उ०३।१४

पुराणेष्वपि ऐक्य निरूपणे लिखितम्-

ब्रह्मस्वरूपा प्रकृतिर्न ब्रह्मभिन्ना । सनातन: पुराण:यो भगवानिति निगदित: सो सदा प्रकृत्यैव सृष्टिं करोति । एषा सनातनो नारायणो परमपुरुषस्य परमा शक्तिरित्युक्ता यथा शक्त्याविना परमेश्वर: सृष्टौ असमर्थ: तथैव स आत्मेश्वर: शक्तिमानिति निगदित:[1] ।

पूर्णब्रह्म[2]स्वरूपा मूलप्रकृति: सैव भाति ।

यथाग्नौ दाहिकाशक्ति: चन्द्रे कमले च शोभा तथा सूर्ये प्रभा सदा युक्तैव विभाति[3] न भिन्ना भवति तथैव परमात्मनि प्रकृतिर्नित्यभूता तिष्ठति ।

यथा स्वर्णकार: स्वर्णं विना कुण्डलादि करणे असमर्थ: तथैव यस्याश्रयेन श्रीहरि: शक्तिमान भवति सा एव प्रकृति देवी शक्तिस्वरूपेति च ।

---

१- ब्रह्म वै०पु० ब्रह्मखण्ड ३०।१२।१३
श्रीमद्देवीभागवतपु० ९।१।५८-५९

२- ब्रह्मवै०पु० ३०।१८-२१

३- ब्रह्मवै०पु० प्र०ख० २।७-११
श्रीमद्देवीभा०पु० ९।२।६-११

श्रीमद्देवीभागवत पुराणे लिखितम्-

उभौ प्रकृतिपुरुषौ सर्वव्यापकौ आद्यन्तरहितौ वास्तः। त्रिषु कालेषु समन्वित भावेन तयोर्विकाराः एककालेतरे एव भाति। संसारे एकस्या भावे नान्या वस्तुसत्ता। अतएव स्पष्टं यत् या शक्तिः स एव परमात्मा तथा यो परमात्मा सा एव शक्तिरेव। निर्गुण-निर्मलचिदात्मस्वरूपे उभौ एकमेव। अभेदः सूक्ष्मस्वरूपे उभयोः।[1]

शिवपुराणेऽपि लिखितम्-

परमेश्वरस्य स्वाभाविकी विलक्षणा शक्तिः विद्या-एकाभूताऽपि अनेकरूपेण प्रतिभाति। यथा सूर्यप्रभा एकैव अनेकरूपेष्वपि भासते। यथाग्नौ बहवः स्फुलिङ्गाः भवन्ति तथैव तया विविध-शक्तयः पुरुषादयः संभवन्ति। सा शक्तिः सर्वव्यापिनी सूक्ष्मा-ज्ञानानन्दरूपिणी च भवति।

अनयैव शीतांशुभूषणः शिवः शक्तिमानित्युच्यते शिवः शक्तिमानवेषः शक्तिरूपिणी शिवाविद्या चेति।

अन्यपि यथा-

शक्त्याऽशक्तिमान्[3] अभिन्नः उभयोर्तादात्म्येन परमानन्दपद-प्राप्तिर्भवति।

---

१- श्रीमद्देवीभाग० पु० ३।७।११-१५

२- शिवपुराण वा०सं० अ० ७

३- शिवपु० वा०सं०२ अ० ७।

अपि च-

यथा चन्द्रिका विना चन्द्रमा न शोभते तथैव शिवो पि शक्तिम् विना न शोभते। यथा सूर्यम् विहाय प्रभा न तिष्ठति तथैव प्रभां विहाय सूर्यो पि नहि।

शक्ति: शक्तिमांश्चैव उभौ सदैव परस्परापेक्षौ अन्योन्याश्रयौ चेति।[1]

सृष्टिविधौ निर्गुणं ब्रह्म आत्मानम् द्विधा विभाजति। तद्दक्षिणार्धः पुरुषः वामार्धं प्रकृतिः (शक्तिः) स्मृतः।[2]

अङ्गाङ्गिभावेन उभौ अभिन्नौ। ब्रह्म रूपे उभौ नित्यौ सनातनौ। तौ अग्निदाहिका यथा तथैव परस्पराभिन्नौ। एकस्याभावे नास्ति अपरस्य भावमिति च।[2]

ब्रह्मणः पारमेश्वरस्य वा द्वौ पदार्थौ स्तः एको सच्चिदानंदात्मकः पुरुषाख्यः द्वितीयः मायाप्रकृतिसंज्ञकः प्रकृतिःशक्तिरिति। उभयोःसंयोगादेव सृष्टिर्भवति तथा अन्तकाले प्रलयेवा उभौ एकावस्थावस्थितौ भवतः।[3]

---

१- शिवपु० वा०सं०उ०ख० ४। ८०-८२

२- ब्रह्मवै०पु०प्र०ख० ३। ६-१०

श्रीमद्देवीभा०पु० ६। ३। ६-११

३- श्रीमद्देवीभा०पु०

सदाऐक्यं ब्रह्मणोऽपि च न किंचिद्भेदः या सा शक्तिः सैव ब्रह्म् यो सो ब्रह्म सा एव शक्तिः। अत्र बुद्धिभेदेनैव भ्रमः। वस्तुतः शक्ति-शक्तिमान् एकैव भाति। ब्रह्म् एकमेव किन्तु जगत्रचना काले द्वैतभावं परिलक्ष्यते। यथा एको दीपः लघु महदादुपाधिभेदेन अनेक भवति अथवा एकमुखस्येव छाया दर्पणभेदेन भिन्नं भासते तथैव ब्रह्मशक्तिश्च एकीभूत्वपि कार्यकारण भेदेन बिम्बप्रतिबिम्ब भावेन भिन्नं भासते।

कार्यार्थे दृश्यादृश्य भेदं सर्वथायुक्तम्।
जगद्भावे स्त्रीपुं नपुंसकादि भेदं परिसमाप्तम्।
सृष्ट्यारंभे पुन भेदो दयः भवति।

जले शीतलता अग्नावुष्णता सूर्यप्रभा इव ब्रह्मशक्तिः विभाति।

जादि शक्त्याभावे स्पन्दमात्रमपि असंभवम्।
उभयोसंयोगादेव संसारस्थितिः। एकस्या भावेनापरस्य अस्तित्वं वर्ते। इति।[1]

---

१– श्रीमद्देवीभागवत पु० ३।६

कालिकापुराणे प्रकृतिपुरुषयोरैक्य प्रदर्श्य लिखितम्-

जगत्कारणकारणं परमानन्दं आत्मानन्तस्वरूपिणम्
शम्भुः पृथक् न दृश्यते किन्तु सृष्ट्यर्थं प्रकृति स्वरूपी तद्भिन्नां भासते
पृथग्भूताम् तदेविकाम्बिका तस्यैवाभ्यासे ददर्श । पुरुषश्चापि ततः
वसनः ददर्श ।

यथा अग्नौ स्फुलिङ्गारिव अजस्रम् भासते । तदेव कालरूपेण
च मुहुर्मुहुर्भासते । सृष्टिस्थित्यन्तयोगानाम् वर्त्मेन कारणम् प्रकृति
पुरुषं कालं अभिन्नं भासमानम् चापि तदर्थं भिन्नं प्रतीयते इति[1] ।

ब्रह्माण्डे पि लिखितम्-

व्यक्तस्यात्मन्यवस्थिते विकारस्य प्रतिसंहृते काले प्रधान-
पुरुषौ साधर्म्येणावतिष्ठेते । एतौ तमस्सत्व गुणौ समत्वेन व्यव-
स्थितौ भवन्ति । उभौ रहितौ एतौ परस्परानुचराविव अनुबध्यन्ति च[2] ।

गरुणपुराणे पि यथा-

ब्रह्मस्वरूपो विष्णुः एव व्यक्ताव्यक्तस्वरूपे तथा पुरुष-
रूपेण कालरूपेणापि तिष्ठति[3] ।

---

१- कालिका पुराण २२। ५५-५८

२- ब्रह्माण्डपु० लोकसर्गि०पु० ४६-४७ श्लोक १-२ बरेलीप्रकाशन

३- गरुण पु० सृष्टि कर्म पृ० ४३ श्लोक ४ बरेली प्रकाशन

क्षेत्रक्षेत्रज्ञौ प्रधानपुरुषौ एतौ संहारविस्तारावस्थायां व्यक्ताव्यक्तस्वरूपयोर्निष्ठतः । साधर्म्य वैधर्म्य कृतःतयो संयोगः ।

महापुरुषस्य संयोगः अनादिमान् । इति ।

पुनिसर्ग वर्णने पि लिखितम् 'प्रधानपुरुषाणां च साधर्म्येणैव निष्ठति'[1] ।

अपि च ब्रह्माण्डे प्रधानपुरुषौ[2] अनादि संयोगयुतौ उभौ सूक्ष्मौ इत्यपि लिखितम् । अत्र प्रधानशक्तिरिति ।

अन्यत्रापि- अव्यक्तप्रकृतिम्[3] शक्तिमन् ब्रह्मणः योनिमित्युक्तम्

अतस्तयात्र प्रकरणे ब्रह्माण्डे लिखितम् ब्रह्मणः द्वे रूपे वर्तेते एकम् प्रधानम् यत्सर्वलोकगुणात्मकं अपरं गुणातीतं परात्परं महापुरुषात्मकम्[4] ।

---

१- ब्रह्माण्ड पु० पू० १२८ श्लो० १०५-१०६

२- क्षेत्रज्ञस्य प्रधानस्य पुरुषस्य प्रवर्त्स्यतः ।
आदिदेवः प्रधानस्यानुग्रहाय प्रपद्यते ।
अनाद्यौ वरमुत्पादौ उभौ सूक्ष्मौ तु तौ स्मृतौ ।
अनादि संयोग युतौ सर्व क्षेत्रज्ञमेव च ।
—ब्रह्मा० पु०खण्ड२, पृ०१४२ श्लोक१२७-२२१ वेंकटेश्वरप्रे०

३- अव्यक्तमेव यस्य योनिं वदन्ति, व्यक्तं देहं कालमेतं गतिंच ।
वह्निर्ववक्त्रं चन्द्रसूर्यौ च नेत्रे दिशः श्रोत्रे घ्राणमाहुश्च वायुम ।
—ब्रह्मपु०ख०२ पृ० १५० श्लोक ७१

४- ब्रह्माण्ड पु० ख० २ पृ० १५४।२१

सदसदात्मिका अव्यक्तोक्ता या नित्या सूक्ष्मा प्रकृति: सा अजरा अक्षया अपरिमेया शब्दस्पर्शादिरहिता अनाश्रिता भवति। एषा अनाद्यन्ता परा सृष्ट्यादौ अविज्ञेय ब्रह्मकाशाद् जगद्योनि: त्रिगुणप्रसवा भवति। यो असंप्राप्तमविज्ञेयं ब्रह्म सैव प्रधानम्। प्रधानस्वरूपो ब्रह्म उत्पत्ति आदि अवभासको भवति। प्रलयान्ते तस्मिन्नेव गुणा: अव्याहत भावेन तिष्ठन्ति च। उभयोर्संयोगादेव सृष्टिरिति निगदितम्।[1]

श्रीमद्भागवत पुराणे पि वर्णितम्-

मायापति: सृष्ट्येच्छया स्वमायया स्वस्वरूपे स्वयंप्राप्तं कालकर्मस्वभावंच स्वीकृतवान्। तदा भगवच्छक्त्या काल: गुणान् क्षोभयति। तत: कर्मस्वभावानुसृत्य वैकारिका:गुणा: अभिवर्धयति च। अत्र पि ब्रह्मशक्त्योरैक्यम् प्रदर्शितम्।[2]

---

१- मार्कण्डेय पु० पृ० ३६७।२६-२५ वरेलोप्र०

२- श्रीमद्भागवत पु० २।५।२१-२२

विष्णुपुराणेऽपि लिखितम् यत् ब्रह्म तदेव व्यक्ताव्यक्त पुरुषकालेति निगदितः तेनैव जगद्व्याप्तम् । अन्ते एकं प्राधानिकं ब्रह्म पुमान् च आसीत् ।[1] इति ।

वायुपुराणेऽपि वर्णितम्-

सदसदात्मिका (शक्तिः) तत्त्वचिन्तकाः यं अव्यक्तंकारणं प्रधानप्रकृतिः गन्धवर्णरसैहीनं शब्दस्पर्शादिशून्यं ध्रुवमक्षय्यं नित्यं स्वात्मन्यवस्थितं जगद्योनिम् महद्भूतं परंब्रह्म सनातनं सर्वभूतविग्रहं अव्यक्तमित्युक्तं तदानन्तरहितं सूक्ष्मं त्रिगुणप्रभवं अग्रे अज्ञातमविज्ञेयं ब्रह्मैव आसीत् ।[2] इदंजगत तदात्मनैव व्याप्तमिति ।

नारदपुराणेऽपि लिखितम्-

विष्णुःब्रह्मस्वरूपो तच्छक्तिरपि तत्तुल्यैव भवति । यथाग्नौ दाहिका शक्तिः स्वाश्रये व्याप्य तिष्ठति तथैव परब्रह्मणःशक्तिः प्रकृतिरपि स्वाश्रये परमात्मनि व्याप्यस्थिता भवति ।[3] इति ।

---

१- तद्ब्रह्म परमंनित्यमजमक्षयम व्ययम् ।
   एकंस्वरूपं तु सदा हेया भावाच्च निर्मलम् ।
   तदेव सर्वमेतद्व्यक्ताव्यक्त स्वरूप वत
   तथा पुरुषरूपेण कालरूपेण च स्थितम् ।
   परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज ।
   व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा ।। -विष्णुपु०२। १३-१५ गीताप्रेस

२- वायुपु० ४। १८-२२ प्रयागप्रकाशन

३- संक्षिप्तनारद पु०अ०३८ एवं अ०२५१, गीताप्रेस

बृहदारण्यकेप्येवम् यथा--

एकाकी न रमते स द्वितीयमैच्छत ।सहैतावान[1] ता पुंस्त्वं स्त्रीत्वं च अभावयत् ।पतनात् पति पत्नी च ।इति ।

मनुस्मृतौ यथा-

द्विधाकृत्वात्मनो देहमर्धेन पुरुषो भवत्[2] ।
अर्धे नारी तस्यां च विराजमसृजत्प्रभुः ।।

अष्टक प्रकरणाख्यग्रन्थस्य तत्त्वप्रकाशेतिप्रकरणे ब्रह्मशक्त्योरभेद प्रदर्शने लिखितम्-

ब्रह्मरूपो शिव: पशुगणस्य जीवस्य भोगमोक्षादि सिद्धये पंचविधि कृत्यकरणे[3] न आत्मना शक्तिकरणेनैव समर्थ: नान्य करणान्तरेण च ।

---

१- बृहदारण्यक उ० १।४।१४

२- मनुस्मृति १।३२

३- शक्तो यथा स शम्भुमुक्तौ मुक्तौ च पशुगणस्य ।
नाथैका चिद्रूपाख्या सर्वात्मना स्मि न त: ।
(अष्टक प्रकरण तत्वप्र० श्लोक २)

नतु देहेन्द्रिय रहितस्य कर्तृत्वं न दृश्यते ? इति चेन्न तद्रहितस्यात्मनः शक्तिमात्रादेव स्वदेहस्पन्दादौ सामर्थ्य दर्शनात् । उक्तं चापि 'करणं तु न शक्यन्ते'[1] । श्रुतौ प्युक्तं 'एकोऽनेकतां याति शिवशक्तिस्वरूपाश्रितः' स्मात् इति कथनेन जस्या इच्छादि भेदः वामादि भेदश्च ज्ञेयः । कार्योपाधिभेदे न उपचारात् न तु परमार्थतः इति । स्पन्दा एका चिद्रूपा तत्र चिद्धनः शिवः चिद्रूपा चिन्मात्रा शक्तिः अतएव न तयोर्भेद इति ।

अन्यत्रापि सकलनिष्कलाख्य नादबिन्दुस्वरूपे सदाख्ये उभौ तत्समाश्रितौ उक्तौ[2] ।

अत्र निष्कल बिन्दु शुद्धपरं ब्रह्म शिवम् तेन सकलो बिन्दुः तेन अक्षर बिन्दुः नादश्च स्थूल अनिलः । परबिन्दु शिवतो नादोत्पत्तिः कार्यत्वम् तत्र शक्ति तत्त्वान्तर्भावितमिति चोक्तम् । स्थूलध्वनौ तौ (शक्ति शिवौ) अन्तर्भूतौ ज्ञेयौ ।

---

१- मृ०वि० २।४

२- अष्टक प्रकरण त०प्र० ३१

कण्ठसूरिप्रणीत रत्नत्रयपरीक्षाग्रन्थे-

ब्रह्मरूप:शिव: तथा तदविकारिणी शक्ति: अपि एक एव इत्युक्तम् ।चिन्मात्रस्वरूपे तयोरभेदमिति[1] ।

लक्ष्मीतंत्रे पि लिखितम्-

ब्रह्मणो अहन्तानामात्मभूतानपायिनी सनातनी परमा शक्ति: हिमदीधिते: ज्योत्स्नेव अभिन्ना[2] ।इति ।

शारदा तिलकाख्य ग्रन्थे पि निष्कलशिवेन सच्चिदानन्द सकलं शक्ति स्वरूपंचापि आविष्कृतं प्रदर्शितम्[3] ।इति ।

---

१- एक एव शिवस्तच्छक्तिरप्यविकारिणी
लयभोगाधिकारेषु तौ चिन्मात्र रूपिणौ ।।
रत्नत्रयपरीक्षा २८३-२८४

२- तस्य या परमा शक्तिर्ज्योत्स्नेव हिमदीधिते ।
सर्वावस्थां गता देवी स्वात्मभूतानपायिनी ।
अहन्ता ब्रह्मणस्तस्य साहमस्मि सनातनी ।।
लक्ष्मीतंत्र २।११-१२

३- निर्गुण: सगुणश्चेति शिवो ज्ञेय: सनातन: ।
निर्गुण: प्रकृतेरन्य: सगुण: सकल: स्मृत: ।।
सच्चिदानन्दविभात्सकलात्परमेश्वरात् ।
आसीच्छक्तिस्ततो नादो नादाद्बिन्दु समुद्भव: ।
पराशक्तिमय: साक्षात्त्रिधा सौ भिद्यते पुन: ।।
-शारदातिलक १।६-८

तन्त्रसाराख्यग्रन्थस्य प्रारम्भे प्रथमश्लोके शिवशक्त्योरैक्यं प्रतिपादितम्[1]।

तत्र यामल शब्देन शिवशक्तिसामरस्य एव प्रकाशितम् सृष्टि मूले यो परमाद्वैत तत्व:यं परमसाम्येति निगदित: तद्भावे यदा ईषत् वैषम्योदय: तदा एक: द्वौ बहूवेतिसंख्या जायते। शिवशक्तिसामरस्येन उभयोर्द्वैत धारक: विसर्ग: स्वभावत: बहिर्भूत: भवति शास्त्रेषु हार्धकलारूपे अस्य वर्णनमिति।

ज्ञानार्णव तन्त्रे-

यन्त्र प्रकाशितम्[2] बिन्दुत्रयात्मकं परं ब्रह्मरूपं शिवशक्तिमयं उक्तम्। एष शिवशक्तिमयस्वरूपमेव विश्वं शिवंच व्याप्य तिष्ठति। एषास्वहकारादि सकारपर्यन्ता मातृका वर्णरूपा च। सो हम् शब्देन एतदस्यैवावबोधनंभवति। एतदुभयात्मकं रूपमेव उत्पत्त्यादि कारणं पूर्णगुणम् उक्तम्।

---

१- विमलकलाश्रयाभिनवसृष्टिमहाजननी
भरिततनुश्च पंचमुखगुप्तरुचिर्जनक:।
तदुभय यामलस्फुरित भाव विसर्गमयं
हृदयमनुत्तरा मृतकुल मम संस्फु रतात्।। तंत्रसार आ० १।१

२- परं ब्रह्म स्वरूपं यन्त्राद् विन्दुत्रयात्मकम्।
शिवशक्तिमयं तत्तु कथयामि तवानघे।।
व्याप्यतिष्ठति विश्वं सा शिवं च परमेश्वरि।
पूर्णगुणांस्तु कथिता शिवशक्त्यात्मक शृणु।।

कुलार्णव तन्त्रे पि लिखितम्-

निखिल द्वन्द्वात्मके जगदि शिवशक्तिमयरूपमेव आधाराधेय रूपे भोगमोक्षस्वरूपे तथान्य अग्निषोम -बिन्दुनाद-प्राणापान-वागर्थ स्त्रीपुंस्त्वादि बोधे सुखदुःख विधिनिषेधादि भावेन सर्वलोकेषु भावा-भावस्वरूपे अवबुध्यतेति च[१]।

---

- हकारादि सकारान्ता मातृका शक्तिरव्यया।
हकार परमेशानि केवलंशिव मुच्यते।
आद्यन्तादार भावेन तदा हं सकलात्मकः।
यदुच्यते मातृका वर्णैस्तत्सर्वमहमीश्वरि।
हकारःपरमेशानि शून्यरूपो सदाव्ययः।
सकारः शक्तिरूपत्वात्पराबाचो विसर्गवान्।
उत्पत्तेः कारणं यस्माच्छक्तिरित्यभिधीयते।
आत्मानं दर्शयेद्यो यः सो हम शब्देन सुन्दरि।
बिन्दुत्रय समायोगान्महात्रिपुर सुन्दरी
नाद रूपे सा देवी हकारार्ध स्वरूपिणी
हकारः परमेशानि शिव रूपी यतस्तदा
तस्यार्धाङ्ग महाशक्तिर्हकारार्धस्वरूपिणी।।

-ज्ञानार्णवतंत्रे पटल१० श्लोक२-६

१- शचीन्द्रौ रोहिणी चन्द्रौ स्वाहाग्नी च प्रभारवी।
लक्ष्मीनारायणौ वाणीधातारौ रात्रिवासरौ।
अग्निषोमौ बिन्दुनादौ देवि प्रकृतिपूरुषौ।
आधराधेयनामानौ भोगमोक्षौ कुलेश्वरि
प्राणापानौ च वागर्थौ प्रिये विधिनिषेधकौ।
सुखदुःखानि यद्वन्द्वं दृश्यते श्रूयते मया।
सर्वलोकेषु तत्सर्वं भावाभावे न संशयः।
पुंस्त्रीरूपाणि सर्वाणि वाचयोरं शकानि हि।

कूर्मपुराणेऽप्येवमुक्तम्यथा-

शक्तिश्च शिवश्च शक्तिशिवौ एकौ एकत्वप्रकाशनाय एव शक्तिमान् शिवःइत्युच्यते । अन्याशक्तय: शक्तिमतएवैव सर्वे शक्ति समुद्भवारेव भवन्ति ।

योगिन: परमार्थत: शक्तिशक्तिमान विषये भेदंकुर्वन्ति किन्तुतत्वचिन्तका: अभेदमनु पश्यन्ति ।

सवशिक्तय: गिरिजादेवी सर्वशक्तिमन्न:शंकरश्चेति। महेश्वरपत्निव्रता विश्वेशी भोग्या तथा नीललोहित: भगवान कदर्पी भोक्तेति[2] ।

कूर्मपुराणे ईश्वरगीतायामपि लिखितम्-

यथा एकया शक्त्या स्वभावतो भिन्नतत्वं भिन्नं भासते तथा भमादन्तरहितं शाश्वतसायुज्यमुपलभ्यते ।पुरुषस्य पराशक्त्या मूर्तभावोत्पत्ति: तथा अपरशक्तिना तस्य लोप: अतएव आद्यन्तरहित: पुरुष:(ब्रह्म) अविद्यायुतएवोक्त:[3] ।

---

- शिवशक्तिमयत्वाच्च मुक्तिमुक्तिप्रदानत: ।
 सकर्मापि च निष्कर्म सगुणश्चापि निर्गुणम् ।।
 (कुलार्णवतंत्र ३।८८-९५)

२- कूर्मपुराण पूर्व वि० ११।४०-४५

३- कूर्म पु० उ०वि० अ० ६ ।

अपि च-

मायाधिष्ठातृ भावेन मायावी कृष्णैव जगत् संहर्ता सृष्टा परिपालक: च भवति। तस्यैव शक्ति: मायालोक विमोहिनी च। एषा एका कृष्ण अधिष्ठिता कृष्णमयी कृष्णरूपिणी सर्वान्तरा शक्ति: कृष्णरूपम् विधाय निखिल जगत्रचनाम् करोति[1]।

इयमेव जगन्मयी जगन्नाथ नारायणानन्त वादिनी चापि।

शिवपुराणे पि लिखितम्-

आदौ निर्गुणं कृष्ण परमात्मा वा सृष्टेच्छया लीला मूर्तिम-कल्पयत्। सा मूर्ति: निखिलैश्वर्यगुणसंपन्ना सर्वज्ञानमयी शुभस्वरूपा-सर्वव्यापिनी सर्वस्वरूपा सर्वकारिणी सर्वदर्शिनी सर्व वंद्या सर्वाधासर्व प्रदायिनी सर्वसंस्कृतीनां केन्द्रभूता चासीत्[2]।

तत्काले एकाकीभूत्वा स्वेच्छा विहारदृष्ट्या स्वविग्रहेणैव एकां स्वरूपभूतां शक्तिरचा प्रकटयत्। सा तदङ्गभूता भिन्ना चासीत्।

श्रीमद्देवीभागवते पि 'तदात्मरूपं चित्संवित परब्रह्मैकनामकम्' इत्युक्तम्[3]।

---

१- कूर्मपु० ३।२८-२२

२- शिवपुराण अ० ६ गीताप्रेस

३- श्रीमद्देवीभा०पु० ७।३२।२-३

नारदपंचरात्रे लिखितम्-

ब्रह्मस्वरूप: श्रीकृष्ण: यथा ब्रह्मरूप: तथैव राधा ब्रह्मस्वरूपावेति[1] ।

पद्मपुराणे पि लिखितम्-

यो रस: परमानन्देत्युक्त: तदेकैव द्विधा भूय राधाकृष्णेति निगदित:[2] ।

ब्रह्मवैवर्ते पि लिखितम्-

वेदेषु राधाकृष्ण विषये न को पि भेद: वर्तते राधांश: कृष्ण: कृष्णांश: राधेति च[3] ।

स्कन्दपुराणे पि 'आत्मा तु राधिका तस्य'[4] इत्युक्तम् ।

---

१- यथा ब्रह्म स्वरूपश्च श्रीकृष्ण: प्रकृते पर:।
तथा ब्रह्मस्वरूपा च निर्लिप्ता प्रकृते: पर: । (ना०पंचरात्र २।३।५१)
अपि च- प्राणाधिष्ठात्री या देवी राधारूपाच सामुने ।
—ना०पंच २।३।५५

२- रसो य: परमानन्द एक एव द्विधा सदा ।
श्री राधाकृष्णरूपाभ्यां तस्यै तस्मै नमो नम: ।। (पद्मपुराणपातालखण्ड)

३- त्वं कृष्णार्धाङ्गसम्भूता तुल्या कृष्णेन सर्वत: ।
श्रीकृष्णस्त्वमयं राधा त्वं राधे स्वयं हरि: ।
नहि वेदेषु मे दृष्टो भेद: केन निरूपित: ।
अस्यांशात्त्वं त्वंशो वाप्ययं केन निरूप्यते ।
(ब्रह्मवैवर्तपु०कृष्णजन्मखण्ड १७।२२३-२३०)

४- स्कन्दपुराण

पुरातात्विकदृष्ट्या मिथिचित्रैः मूर्त्तिकला दृष्ट्या शिलालेखादिभि अर्व मिथुनीकृतभाव समर्थनम् ।

पुरा साहित्ये शक्तितत्वस्य ब्रह्मतत्वस्य च परस्पर-अङ्गाङ्गिण सम्बन्धेन एव सृष्टिस्थित्यादि निरूपिताः ।

जगद्विवृद्ध्यर्थं एतयोर्लीला व्यवहारः मिथुन कार्यमिति निगदितम् । एतद विषये कूर्मपुराणे लिखितम्-

"अनादिनिधनौ एतौ उभौ ईश्वरौ मतौ ।
तत्च संज्ञावुभाववे प्रोच्यते ज्ञानचिन्तकैः[1] ।

ब्रह्मवैवर्ते पि लिखितम्-

शक्तिब्रह्मरूपौ राधाकृष्णः न पृथक् विधते,या राधा सैव कृष्णः यो कृष्णः सैव राधिका न एतयोपृथक्भेदो वर्तते ।

यथा दुग्धे धवलता अग्नौ दाहिका शक्तिः पृथिव्यां गन्धः तथैव तौ ।

सृष्टिकाले पि जगत्रचनोपादानभूता राधाशक्तिः कृष्ण-सहयोगिनी भवति ।

कृष्णोक्तिश्चापि यथा कुम्भकारःमृत्तिकां बिना घटकर्तुमक्षमः स्वर्णकारः स्वर्णाभावे कुण्डलादि कर्तुमक्षमः तथैवा हम् त्वदभावे सृष्टि-कर्तुमशक्तः ।

---

१- कूर्मपुराण २४४ अ०श्लोक १२

त्वं (राधा) तु सृष्टेराधारभूता (अहं (कृष्ण:) तु बीज रूपो च्युत: । यदाहं योगेन सर्वबीजस्वरूपी भवामि तदा त्वं सकलस्त्रीरूप धारिणी भवसि ।[1]

पृथक् पश्यन्नापिशक्तिबुद्धि ज्ञान तेज इत्यैनदृष्ट्या तुल्यावेवावां विभ्राव: ।

सामरहस्ये लक्ष्मीनारायण सम्वादे लिखितम् -

अनादौ यंपुरुषक स्वास्ति तदेवं रूपं विधाय सर्वान् रसान समाहरति, स्वयमेव नायिका रूपं विधाय समाराधन तत्परो भूत: तस्मात्वं राधां रसिकानन्दां वेदविदो वदन्ति तस्मादानन्द मयो यं लोक इति ।[2]

स्कन्द पुराणे पि लिखितम्-

आत्मा तु राधिका तस्य तथैव रमणादसौ ।

आत्मा राम तया आर्षो: प्रोच्यते गूढ वेदिभि: ।

अत्र कृष्णेन सह रमणात् राधिका तस्यात्मा[3] निरूपिता । परमात्मन: कृष्ण: तस्य स्वात्म रमणमेव मैथुनमिति ।

---

१- ब्रह्मवैवर्त पुराण जन्मखण्ड अ० १५

२- सामरहस्य (शक्तितात्त्व दर्श स्क०१ पृ०सं०२६७

३- स्कन्द पुराण ।

राधातापिन्युपनिषद्यपि लिखितम्-

या एषा राधा यश्च कृष्णः रसस्सागरः तौ एक एव एकौ भूत्वापि लीला विनोदाय द्विधा जातम् । तौ देहद्वयेन शोभमानः ।[1]

अध्यात्मरामायणेऽपि सीतारामव्याजेन ब्रह्मशक्त्योः मिथुनम् प्रदर्शितम्- तत्र लिखितम् सर्गस्थित्यन्तकारिणी मूलप्रकृतिः ब्रह्म सन्निधि मात्रेण अतन्द्रिता जगत् सर्जनम् करोति ।[2]

भैरवयामलेऽपि कुण्डलिनीशक्तेः शिवसंयोगः एव मैथुनमिति निगदितम् ।

पुरातत्वदृष्ट्या शक्त्युपासना प्राचीना इत्यतः प्रागेव बहुदेशेषु प्रचलितासीत् ।

शक्त्युपासना आविर्भावविषये प्रथमदृष्टिः तंत्रशास्त्र प्राचुर्यकालादेव आसीत् । किन्तु सिन्धुनद समीपवर्ति प्रदेशे नववस्तूनाम विशेषतः योन्याकार मूर्तीनामुपलब्धिः ताम्रयुगीय सिन्धुप्रदेशे मातृशक्त्योपासना प्रचलनं प्रमाणयति ।

---

१- राधातापिनी

२- अध्यात्मरामायण

३- कुलकुण्डलिनीशक्तिः देहिनां देहधारिणी ।
तथा शिवसंयोगो मैथुनं परिकीर्तितः ।
-(भैरवयामल)

सरजानमार्शल इत्याख्य प्रसिद्धैक महोदयेन संसूचितम् यत् शक्तिपूजा भारतवर्षे अतिप्राचीन कालादेवप्रचलिता ।

मातृमहादेव्युपासनादेव अस्यारम्भः तथा शैवमतादस्य घनिष्टतमः सम्बन्धः वर्तते ।

भारतीय शक्तिवादवदेव एशियामाइनरे, मिश्रदेशे यूनाने: फिनोशियामपि शक्त्युपासना प्रचलनं दृश्यते ।

एतद्देशीय प्रधानसिद्धान्तेषु तथा भारतीयशक्तिवाद मतेषु अत्यन्त साम्यं वर्तते अतएव महत्कुतूहलं जायते तथा प्रतीयते यत्प्राग्युगीन भारते पश्चिमेशिया मध्ये च तत्काले बहुधा आवागमनम् आसीत् ।

मोहनजोदड़ो[१] भारतीयसभ्यता भेदे च शाक्तमतम् ईशात: चतुस्सहस्त्रप्रागेव भाति ।

पुरा मातृकाशक्त्युपासना अधिकांशदेशेषु प्राय: प्रचलिता दृश्यते ।

प्रमाणं कार्ये अनेकेषु देशेषु मातृमूर्तिनाम् दर्शनोपलब्धि: भवति यथा-

अमेरिकाया: ब्राजीलप्रान्ते कतिपयस्थानेषु शिवपार्वतीय मन्दिराणि सन्ति ।

---

१- मोहन जोदड़ो एण्ड इन्डुज सिविलाइजेशन पृष्ठ ५७-५८

यौरपदेशस्य कोरियानगरे पार्वतीमन्दिरंवर्तते । ७ागफुके जनाम्ना इति प्रसिद्ध देशे एको धनारोश्वरमूर्ति विद्यते ।

बहु०कोल यौ कम्बोडियेति नाम्ना प्रसिद्ध: तद्देशे वेयनेति नामकाख्य मन्दिरे वहव: देवीदेवतानाम् मूर्तय: सन्ति ।

एवम प्रत्यक्षादयप्रमाणेन वयं प्रमाणयितुम् शक्न: यत् मातृका शक्त्यौपासना ताम्रयुगादारम्य अविच्छिन्ना ।

उपरोक्त कथनेन सिद्धम यत् शक्त्योपासना ईशात: ईशान: त्रिचतुःसाहस्रवर्षादधिकं वर्तते ।

केचिद्वैदेशा द्रविणी संस्कृति: इत्याप्युक्तम् तन्निराधारम् वैदिकी संस्कृते: प्राचीनत्वात् । इति ।

वी०सी०रामचन्द्रन् दीक्षितारमहोदयेन प्रमाणितं यत् मोहन जोदड़ोस्थानोपलव्धमूर्तिनाम् योगमुद्रा वायुपुराणान्तर्गत वर्णित पाशुपतयोग स्वरूपवर्णनमिव सन्ति ।

एषा प्राचीन शाक्तसंप्रदाय: आद्यभारतीयमूलेभ्यो आरम्य कालेन क्रमश: परिवर्द्धितं परिवर्तितञ्च संजातम् ।

फरक्यूहरोति वैदेशिकेन लेखकेन - स्वग्रन्थे प्रकाशितम् यत् प्रत्यक्षो परोक्षो वापि शक्ति: मूलप्रकृतिश्च एकैव । तथा एतत् जगत् तद्विवृति: इति ।

---

१- रोलिटरेचर आफ इंडिया पृष्ठ २० ।

डी०सी०सेन इति लेखकेन स्वग्रन्थे[1] प्रदर्शितम् यत्-

एषां शक्तेः मातरोपासनापद्धतिः प्राचीनम्। प्रायः सर्वं पुराणादिधर्मशास्त्रादयः शक्त्योपासना विषयेन रंजितः सन्ति।

उड़ीसा प्रान्तस्थ जगन्नाथमन्दिरे भुवनेश्वर प्रासादे च उत्कीर्णायुगलमूर्त्यः शक्तिब्रह्मणोः सहधर्म्यमेव मिथुनभावेन प्रकाशयन्ति।

दैवज्ञाधिष्ठितप्रधानशक्तिरेव सृष्टिस्थिति संहारकार्ये प्रधाना इति वैदिकमतस्यैव प्रकाशकोद्देशकाः तदिमविचित्राणां अंकनमिति।

एवम् अजन्तादिगुहादेशे पि ब्रह्माधिष्ठिता परमेश्वरो एव स्वमिथुनेन लीलाविहारेण वा जगत्कार्यम् करोति तदेव लोके प्रधाना इत्याशयम् प्रकाशितम्।

भगवत्पाद शंकराचार्य महाभाग विनिर्मित प्रासादेष्वपि शक्तियुक्तभावान शिवस्य युगलमूर्तिनाम अङ्कनम् दृश्यते।

तेन लिखितंचापि "शिवः शक्त्यायुक्तो यदि भवति शक्तः प्रभवितुम्" इति सौन्दर्यलहर्यां उक्त्वा ब्रह्मरूपो शिवस्य जगत्कार्यसमस्वरूपे शक्तिसहधर्म्यमेव उक्तम् तदेव मिथुन भावेन भित्तिचित्र व्याजेन प्रसादेपि प्रकाशितम् इति।

---

१- हिस्ट्री आफ बंगाली लैंग्वेज एंड लिटरेचर पृष्ठ २३।

शक्तिपूजा प्रस्तरकला च-

वेदान्तसङ्ख्यास्थैना पिपुरुषप्रकृत्योर्सिद्धान्तम प्रतिपादितम्-तेन अस्माकंप्रस्तरकलायामपि नव विचाराणाम समावेश: संजात: ।

अस्माकं जनय: पुरुषप्रकृतिम् ईश्वरशक्तिश्चाप्युक्त: । हिन्दुजना: विष्णुशिवंच ईश्वर: मन्यन्ते तथा तन्मय्र प्रकृतिम् शक्तीति कथ्यन्ति ।एवम् शक्तिपूजा विष्णुना शिवेन सह सम्बद्धा वर्तते ।

प्रस्तरकलायां एतयोर्सम्बन्धदिग्दर्शन: सम्यक् निरूपित: ।

शिल्पे न केवल तद्देवानाम शक्तय: लक्ष्मी पार्वत्यादिकानाम् मूर्तय: एव न सन्ति वरन ईश्वरशक्तेर्विन्नत्वं अत्युन्मत भावम प्राप्नोति यथा- काश्मीरे प्रस्तरस्य तथा नेपालेधातुनिर्मित अर्धनारीश्वर[१] शिवस्य सुन्दरतमा मूर्तय: सन्ति येषु ईश्वरशक्तीनां समावेश: एकमूर्तौ कृतम् ।

हिन्दुनाम शक्त्येश्वर पूजाप्रभाव: बौद्धधर्मे दृश्यते ।

महायानस्योत्पत्ति: शक्त्येश्वरपूजा प्रभावेरेव ।बौद्ध धर्मे शक्ति महत्वं गता, यस्मिन् तारा रूपा शक्ति विशेषोल्लेखनीय: ।

---

१- कल्याण शक्ति अङ्क पृष्ठ ५७२ से ७६

महालक्ष्मी शक्ति:-

शक्तानाम् विश्वासो यमिति यत शक्तिरेव सर्वसमर्था नान्य: को पि ।

तत्सर्व समर्था शक्ति: महालक्ष्मीति निगदित: ।

देवी माहात्म्ये महालक्ष्म्या समग्र देवी देवतानांच उत्पत्ति: वर्णित: ।

शिल्पशास्त्रे महालक्ष्मीवर्णनम् निम्नश्लोकरीत्यानुसार भवति यथा-

वरं त्रिशूलं खेटंच पानपात्रंच बिभ्रती ।
नीलकण्ठे च नागं हि महालक्ष्मी सुखप्रदा ।

प्रस्तर कलायामपि महालक्ष्मेर्विशिष्टस्थानं वर्तते ।मुम्बई प्रान्तस्य कोल्हापुर नामकस्थाने मन्दिरागारे एका महालक्ष्म्या: भव्या मूर्ति: प्रतिष्ठिता अस्ति । तन्मूर्तौ चत्वारि भुजा: सन्ति यस्मिन् पात्र गदा त्रिशूलखेटादिनाम चिन्हानि सन्ति ।मूर्त्यार्ध्वभागे शिवलिङ्ग: दृग्गोचर: भवति ।एष तीर्थानामेको मुख्यकेन्द्र वर्तते ।

योगशक्ति:-

योगशास्त्रेषु कुण्डल्येव शक्तिसमता निरूपिता: ।
तत्कुण्डल्या: षट्प्रधानस्थानानि सन्ति ये - चक्राकारे यन्त्राकारे वा प्रदर्शिता: ।एतन्यन्त्रा: बीजाक्षरसमन्विता: तन्मुख्ययन्त्रम् श्रीचक्रेति कथित: ।एष: मेरु कैलास भूस्वरूपे च शिल्पे प्रदर्शित: ।

अस्य यंत्रस्य अंकनम् धातौ पाषाणे वा भवति । एतन्यन्त्रम् मानवाः भूतप्रेतादि बाधा दूरीकरणाय धारयन्ति च ।

यद्यपि पूर्ण भारते यन्त्रपूजा प्रचलितः तथापि दक्षिण भारतस्य प्रदेशेषु अस्य शक्ति पीठाख्यस्य स्थापना विशिष्टः । तत्र प्रतिदिन यंत्रपूजा भवति ।

शक्तिमूर्तिः-

प्रत्येकं देवानाम् केवला प्रतिकृतिः शक्तिरपि भवति । एवमेव साधारणतया प्रत्येकम् देवाभिस्सह तदर्धाङ्गिनी स्त्री मूर्तिरपि भवति ।

देवीनाम् मूर्तयः देवताभिस्सह द्विभुजा भवन्ति, एके हस्तं कमलयुक्तं अपरं तु सामान्यम् । परन्तु यदा शक्तिमूर्ति देवसमीपस्था स्वतन्त्रस्था भवति तदा शिल्पोऽत्वं त्रिभंगं समभंगं वा चित्रयति ।

तस्मिन्मूर्तौ देवशक्त्यालिङ्गनस्याङ्कनमपि भवति । एषम् दृष्टान्ते सत्यपि प्रायः तस्याः सम्बन्धः शिवेन सह प्रतीयते । उत्तरकामिकागमे ग्रन्थे चतुर्भुजी त्रिनेत्रा देव्याश्च वर्णनं दृश्यते यथा-

चतुर्भुजा त्रिनेत्रा च पुष्टनीलस्तना ।
दुकूलवसना देवी करण्ड मुकुटान्विता ।
वरदा भयसंयुक्ता पाशाङ्कुश करान्विता ।

इयम् शिवपत्न्यपि उक्ता । प्रस्तरकलायाम् अन्याः देवीनामपि भवन्ति यथा षडक्षरादेवी या -पाशाङ्कुशशंखचक्रधरा अथवान्य शिव-शस्त्रधरा तच्च अभयवरदमुद्रायाम् भवन्ति ।

एतादेव्याः शिवासनेस्थितामवन्ति। एवमनेका मूर्तयः सन्ति ये शिवेन सह शिवपार्वतरूपा पाषाणे उट्टिङ्कताः।

शैवातिरिक्त वैष्णव शक्तयः अपि भवन्ति। प्रस्तरकलायाम एका विशेषा शक्तिमूर्तिरपि मिलति या विष्णानुजेतिकथ्यन्ते।

सुप्रभेदागमनामकारव्यग्रन्थे अस्योल्लेखःवर्तते इयम देवीशिखुस चक्रमयापि मुद्राङ्किता चाष्टहस्तावा एवालंकारयुक्ता महिषशिरस्थलोपरि संस्था वा प्रदर्शिता भवति।

दक्षिणभारतस्य महाबलीपुरमिति मन्दिरे एवम सुपाषाण प्रतिमा प्रतिष्ठिता।

सुप्रभेदागमानुसार एषा मूर्तिः आदिशक्त्यैति उक्ता।

धर्मशास्त्रकारैभिः अवस्था कार्यानुभेदेन शक्तेः नामकरणं कृतम्।

एकवर्णीया संध्या त्रिवर्णी सरस्वती सप्तवर्णा चण्डा अष्टवर्णा शाम्भवी नववर्णा दुर्गा दशवर्णा गौरी त्रयोदश वर्णा महालक्ष्मी षोडशीया ललितावस्था विशेषातिरिक्त कार्यविशेष प्रधाना महिषासुरमर्दिनी तमोपहा ऊषा इत्यादिदेवीनाममूर्तयः अपि दृश्यन्ते भवन्ति। यद्यपि अनेकसंख्या मूर्तयः सन्ति किन्तु पार्वतीतेषु शिवशक्तिषु श्रेष्ठतमा प्रधाना वर्तते।

भारते प्रायः सर्वत्र मन्दिरेषु शिवपार्वती पूजा भवति प्रस्तरकलायाम् शिवपार्वती मूर्ति विभिन्नभेदेन प्रदर्शितः। एलोराख्य गुहायाम एव सुसुन्दरी विचित्रा पार्वतीमूर्तिरुपलब्धा एषा केवला पार्वती मूर्तिः।

कमलासनसंस्थिता चतुर्भुजीमूर्तिरियम् -मस्तके सुकिरीटमुकुट मण्डिता वर्तते। दक्षिण हस्तयोः रुद्राक्षमाला शिवलिङ्गश्च वामयोः कमण्डलु गणेशमूर्तिरिति धारिणी एतामूर्तिः प्रायः उत्तर-भारते न दृष्टिगोचरा भवति।

वैष्णवशक्तिः लक्ष्मीस्वरूपे एतां लक्ष्म्याः मूर्ति विष्णुनासह पृथक्यापि पूजनीया। यदा इयम् विष्णुना सह भवति तदा द्विभुजा भवति।

विष्णुनासहस्थिता शेषशायीभगवच्चरणसमीपस्था कमला-सन संस्थिता वा देवी द्विभुजा अन्यथा चतुर्भुजा भवति। चतुर्भुजेषु कृमशः कमलं बिल्वफलम् -अमृतघटम् शंखम च भवति।

एता चतुर्भुजीमूर्ति कमलासनस्थिता परिचारिका युक्ता युग्मगजशुण्डतलाभिषिक्ता भवति। दक्षिणभारतस्य महाबलीपुरम् तथा "एलोरा" गुहायां एवम सुन्दरा मूर्तयः उपलब्धाः श्रीसंज्ञाभिधाः एताः।

उत्तरभारते इयम मूर्तिः गजलक्ष्मीत्युच्यते। एका गजाभिषिक्ता कमलासनस्था सुन्दरीमूर्तिः काश्याम् कलाभवने सुरक्षिता वर्तते।

लक्ष्म्यातिरिक्त अवतार शक्तीनां यथा रामशक्ति सीता कृष्ण शक्तिः राधा, वाराही नारसिंही कौमारी ऐन्द्रीः ब्रह-माण्यन्या मूर्तयः प्रायः उत्तरभारतस्य मन्दिरेषु प्रस्तरखण्डेषु प्रदर्शिताः।

शक्तिसिद्धपीठानां संक्षिप्त परिचय:-

भगवान शंकर: दक्षयज्ञे प्राणाधिकास्वप्रियां सतीं वह्नौ दह्यमानां दृष्ट्वा मुहुर्मुहु: हा सतीत्युक्त्वा भ्रान्तचित्त: सतीदेहं स्कन्धे आरोप्य नानादेशेषु बभ्राम ।

तदाप्रभृत्यपि देवाश्चिन्तामापु: । भगवन्तं विष्णुं प्रार्थयामास, विष्णुस्तु तत्र त्वरया मार्गण: धनुरुपयम्य सत्या: अवयवान चिच्छेद । यत्र यत्र स्थानेषु सत्यावयव: निपतितानि तत्तद्स्थानानि सिद्धपीठान्युक्तानि । इति । श्रीमद्देवीभागवतानुसार एतानि दिव्यष्टोत्तरशत स्थानानि निम्नाङ्कितानि सन्ति ।

| शक्तिस्थलानि | शक्तिसंज्ञा च |
|---|---|
| १- वाराणस्याम् | विशालाक्षी |
| २- नैमिषारण्ये | लिङ्गधारिणी |
| ३- प्रयागे | ललिता |
| ४- गन्धमादने | कामुकी |
| ५- दक्षिणमानसे | कुमुदा |
| ६- उत्तरमानसे | विश्वकामा |
| ७- गोमन्ते | गोमतीदेवी |
| ८- मन्दरे | कामचारिणी |
| ९- चैत्ररथे | मदोत्कटा |
| १०- हस्तिनापुरे | जयन्ती |
| ११- कान्यकुब्जे | गौरी |
| १२- मलयाचले | रम्भा |

| | |
|---|---|
| १३- एकाम्रपीठे | कीर्तिमती |
| १४- विश्वे | विश्वेश्वरी |
| १५- पुष्करे | पुरुहूता |
| १६- केदारे | सन्मार्गदायिनी |
| १७- हिमवत्पृष्ठे | मन्दा |
| १८- गोकर्णे | भद्रकर्णी |
| १९- स्थानेश्वरे | भवानी |
| २०- विल्वके | बिल्वपत्रिका |
| २१- श्रीशैले | माधवी |
| २२- भद्रेश्वरे | भद्रा |
| २३- वराहशैले | जया |
| २४- कमलालये | कमला |
| २५- रुद्रकोटी | रुद्राणी |
| २६- कालंजरे | काली |
| २७- शालग्रामे | महादेवी |
| २८- शिवलिङ्गे | जलप्रिया |
| २९- महालिङ्गे | कपिला |
| ३०- माकोटे | मुकुटेश्वरी |
| ३१- मायपुर्यां | कुमारी |
| ३२- सन्ताने | ललिताम्बिका |
| ३३- गयायां | मङ्गला |
| ३४- पुरुषोत्तमे | विमला |
| ३५- सहस्राक्षे | उत्पलाक्षी |
| ३६- हिरण्याक्षे | महोत्पला |
| ३७- विपाशायां | अमोघाक्षी |
| ३८- पुण्ड्रवर्धने | पाटला |

| | |
|---|---|
| ३९- सुपार्श्वे | नारायणी |
| ४०- त्रिकूटे | रूपसुन्दरी |
| ४१- विपुले | विपुला |
| ४२- मलयाचले | कल्याणी |
| ४३- सह्याद्रौ | एकवीरा |
| ४४- हरिश्चन्द्रे | चन्द्रिका |
| ४५- रामतीर्थे | रमणी |
| ४६- यमुनायां | मृगावती |
| ४७- कोटितीर्थे | कोटवी |
| ४८- मधुवने | सुगन्धा |
| ४९- गोदावर्यां | त्रिसन्ध्या |
| ५०- गङ्गाद्वारे | रतिप्रिया |
| ५१- शिवकुण्डे | शुभानन्दा |
| ५२- देविकातटे | नन्दिनी |
| ५३- द्वारावत्यां | रुक्मिणी |
| ५४- वृन्दावने | राधा |
| ५५- मथुरायां | देवकी |
| ५६- पाताले | परमेश्वरी |
| ५७- चित्रकूटे | सीता |
| ५८- विन्ध्ये | विन्ध्यवासिनी |
| ५९- करवीरे | महालक्ष्मी |
| ६०- विनायके | उमादेवी |
| ६१- वैद्यनाथे | आरोग्या |
| ६२- महाकाले | महेश्वरी |
| ६३- उष्णतीर्थे | अभया |

| | |
|---|---|
| ६४- विन्ध्यपर्वते | नितम्बा |
| ६५- माण्डव्ये | माण्डवी |
| ६६- माहेश्वरीपुरे | स्वाहा |
| ६७- छागलण्डे | प्रचण्डा |
| ६८- अमरकण्टके | चण्डिका |
| ६९- सोमेश्वरे | वरारोहा |
| ७०- प्रभासे | पुष्करावती |
| ७१- सरस्वत्यां | देवमाता |
| ७२- तटे | पारावरा |
| ७३- महालये | महाभागा |
| ७४- पयोष्ण्यां | पिङ्गलेश्वरी |
| ७५- कृतशौचे | सिंहिका |
| ७६- कार्तिके | अतिशांकरी |
| ७७- उत्पलावर्तके | लोला (लोला) |
| ७८- शोणसङ्गमे | सुभद्रा |
| ७९- सिद्धवने | लक्ष्मी |
| ८०- भरताश्रमे | अनङ्गा |
| ८१- जालन्धरे | विश्वमुखी |
| ८२- किष्किन्धापर्वते | तारा |
| ८३- देवदारु वने | पुष्टिः |
| ८४- काश्मीरमण्डले | मेधा |
| ८५- हिमाद्रौ | भीमादेवी |
| ८६- विश्वेश्वरे | तुष्टि |
| ८७- शङ्खोद्धारे | धरा |
| ८८- पिण्डारके | धृति |
| ८९- चन्द्रभागायां | कला |

| | |
|---|---|
| ९०- वाम्बोदे | शिवधारिणी |
| ९१- वेणायाम् | अमृता |
| ९२- बदर्याम् | उर्वशी |
| ९३- उत्तरकुरौ | औषधि |
| ९४- कुशद्वीपे | कुशोदका |
| ९५- हेमकूटे | मन्मथा |
| ९६- कुमुदे | सत्यवादिनी |
| ९७- अश्वत्थे | वन्दनीया |
| ९८- कुबेरालये | निधि |
| ९९- वेदवदने | गायत्री |
| १००- शिवसन्निधौ | पार्वती |
| १०१- देवलोके | इन्द्राणी |
| १०२- ब्रह्ममुखे | सरस्वती |
| १०३- सूर्यबिम्बे | प्रभा |
| १०४- मातृमध्ये | वैष्णवी |
| १०५- सतीमध्ये | अरुन्धती |
| १०६- स्त्रीमध्ये | तिलोत्तमा |
| १०७- चित्रमध्ये | ब्रह्मकला |
| १०८- सर्वप्राणिवर्गे | शक्तिः |

मत्स्यपुराणे एवं वर्णितम् । देवीगीतायां पीठानां संख्या त्रिसप्तति उक्ता, तंत्रचूडामणौ द्विपंचाशत्तथा अन्ये केषु ग्रन्थेषु पीठ संख्या विभिन्नोक्ता इति ।

---

१- श्रीमद्देवीभागवतपु० ७।३०।५५-८३ ।

मत्स्यपु० १३।२६-५६

चतुर्थी कणिका

जगद्योनिभूतायाः परात्मिकायाः शक्तेर्लिङ्गस्वरूप विश्लेषणादि-
प्रकार वर्णनम्-

परमेश्वरस्य अचिन्त्याशक्तिः या महामाया योगमाया
कुण्डलिनी ब्राह्मी शिवाश्रितादि संज्ञाभिः अभिहिता सैव पराशक्तीति ।
एषा प्रकाशविमर्श शब्दार्थस्वरूपिणी पुराणागम ग्रन्थेषु सूर्ये प्रभा
चन्द्रे चन्द्रिकेव सहजा परमेश्वर निभिन्नेति निगदिता ।

ब्रह्म ईश्वरं वा निर्गुणं निराकारं चोक्तं तथापि तदस्तु
सहधर्मिणी मायाशक्त्या प्रकृत्या वा कादाचयुच्यते । अमूर्तः ईश्वरः
प्रकृतिमिश्रित मायामयो भूत्वा जगदुत्पादकः भवति ।

माया शक्तिमूर्तिः ईश्वरस्य मायायाः प्रतिपादनम् भाति ।
प्रकृत्येव ईश्वरावबोधका शक्तिः अतस्वीकृतम् ईश्वरसंकेतः शक्तिरिति ।

पुराणेषु प्रकाशितम् -

एषा प्रधाना मूलप्रकृतिः नित्या सदसद्रूपा अव्यक्ता अप्रमेया
अजरा अमरा अविनाशिनी निश्चला शब्दस्पर्शादिभेदशून्या अन्याधाररहिता
निराकारा च । तथैव चैव त्रिगुणा नाशोत्पत्तिविरहिता अनाद्या जगद्-
योनिभूतम् वर्तते । सृष्ट्यादारभ्य प्रलय पर्यन्तम् निखिलेदं कार्यभूतम्
प्रपंचम् तया व्याप्तमेव भाति ।[१]

---

१- विष्णुपुराण प्र०अं० २।१९-२१

पद्मपुराण ३।२६।१६

निराकार: ईश्वर: शक्तिव्यञ्जनेन तत्प्रतीकं लिङ्गमिति निरूपितम् । लिङ्गं ज्ञायमानमित्युक्तम् तर्कशास्त्रे ।

लिङ्गनिरूपणप्रसङ्गे तर्कभाषाया लिखितम्-

व्याप्तिबलेनार्थगमकं लिङ्गम् यथाधूमो वह्नेर्लिङ्गमिति ।[1]

श्रीमद्भागवतपुराणे पि लिखितम्-

निर्गुण: नारायण: सर्गस्थितिनिरोधावस्थाया मायया गुणान स्वीकरोति । ते द्रव्यज्ञानक्रियाख्यगुणा: नित्यमुक्तं मायिनं कार्यकारण कर्तृत्वे तं बध्नन्ति ।

एष स्वदर्शितात्मभगवत्पदवाच्यो अधोक्षज: पुरुष: त्रिभिर्लिङ्गै: सर्वेषां ईश्वर: भवति । मायेश: स्वमायया स्वेच्छया च स्वात्मनि काले कर्म स्वभावं स्वीकरोति अनुकरोति च । पुरुषाधिष्ठितात् कालात्[2] ।

लिङ्गपुराणे पि वर्णितम्-

या आद्यन्तविमुक्तापराख्याप्रधानप्रकृति: लिङ्गनाम्नाभिहिता सा शक्तिरेव सर्गप्रतिष्ठासंहारमुद्दिश्य लीलार्थलिङ्गो परमेश्वरम्

---

१- तर्कभाषा अनुमान निरूपण

२- श्रीमद्भागवत पु० २।५।१८-२०

अन्तर्हृदये विधृतो लोकया विश्वोत्पत्त्यादि कार्याणि करोति[1]।

स्कन्दपुराणे प्युक्तम्-

यया ब्रह्मशक्त्या जगत: उद्भवस्थितिसंहाराद्यावस्था द्योतयन्ति
सा लिङ्गमिति उदाहृता। जगद्वृक्ष:[2] तस्यैव लयन्ति अतस्व तत्त्व
विदा: तत्र लिङ्गमिति कथ्यन्ति।

वायुपुराणे ब्रह्माण्डे वा पि जगद्योन्यापराशक्त्या लिङ्गरूपे
विश्वोत्पत्ति वर्णने लिखितम्-

यन्नित्यं सदसदात्मकमव्यक्तं कारणं तत्वचिन्तका:
यं प्रधानप्रकृतीति कथ्यन्ति, तच्छब्दस्पर्शरूपरसगन्धादिशून्यं -जगद्-
योनिभूतं परब्रह्ममेव सर्वभूतविग्रहं जातम्। अनाद्यन्तमजंसूक्ष्मं त्रिगुण-
प्रभवाप्ययम्[3]।

---

१- निष्कलं सूक्ष्ममव्यक्तं सकलं च महेश्वरम्।
सर्गप्रतिष्ठासंहार लीलार्थी लिङ्गरूपिणाम्।
प्रधानं लिङ्गमाख्यातं लिङ्गी च परमेश्वर: ॥
(लिङ्गपु० १।१७।८९-९०)

२- उद्भातिस्थितिमाप्नोति तथा विलयमेति च।
तल्लिङ्गम् लिङ्गमित्याहु: ल्यनातत्त्वचिन्तमा: ॥
(स्कन्द पु०माहे०ख०केदारखं० ७।२४)

३- वायु पु० ४।१८-२६

तदिदं अविशेषंसमावृतम् ब्रह्म एव सम्भवति । तदात्मना पराशक्त्या इदंसर्वम् तमोमयं व्याप्तमासीत् । तदा गुणसाम्ये तमोमये गुणभावे सर्गकाले वै प्रधानस्य क्षेत्रज्ञाधिष्ठितस्य गुणभावात् वाच्यमानं महत्तत्त्वं संजातम् । अथ स महदव्यक्तेनावृतमेव जातम् । तत्र प्रथमं सत्त्वबहुलं सत्त्वबहुलं सत्त्वप्रकाशकं महान् इत्यजायत् । सत्त्वमात्रप्रकाशरूपं मनरेव महानिति मंतव्यम् । तथा तत्त्वान्तरेणापि मनः क्षेत्रज्ञाधिष्ठितत्वात् स महत् लिङ्गमात्रं समुत्पन्नम् । लोकतत्त्वार्थ हेतवः धर्मादीनि तत्स्वरूपाणि । सिसृक्षया चोद्यमानम् महत् सृष्टिं कुरुते । बुधैः तं मनोमहान्मतिर्ब्रह्मापू बुद्धिः ख्यातिरीश्वरः प्रज्ञा चितिः स्मृतिः संविद विपुरमिति चोच्यते ।

एषाभिः सौक्ष्म्यात्तेन विवृद्धभूतानां चेष्टाफलं मनुते यस्मात् तस्मात् मन इत्युच्यते । पुरुषोपभोगसंबन्धि मानं विभर्ति मनुते विभागमपि चमन्यते तेन असौ मति ख्यातः । बृहत्त्वाद्बृंहणत्वाच्च बृंह्यते भावान् तस्मात् ब्रह्मेति निरुच्यते ।

यस्मात् निखिलदेहान् नियततत्त्वभावांश्च आपूरयति तेन भू इति । यस्मात् सर्वहिता हितान् भावान् पुरुषम् बुध्यते बोधयते च तेन बुद्धिरिति निगदितः । भोगस्य ज्ञान निष्ठत्वात् ख्यातिः तथा प्रत्युपभोग संवर्तन ख्यातिः एवम् गुणैः अनेकशः नामभिः ख्याति तेन महत संज्ञा ख्यातिरित्यभिधीयते । एष महात्मा ईश्वरः प्रज्ञा स्मृतिः संवित् ज्ञानम् ब्रह्म भवादि शब्देनापि लोके प्रसिद्धम् । एषः सिसृक्षया चोद्यमानः महासृष्टिम् वितनुते । संकल्पाध्यवसायवृत्तिद्वययुक्तं महत् त्रिगुणात्मिकमितिविशेयम् ।

---

१- ब्रह्माण्ड पु० ३।८-२२

ततः रजसोद्रिक्तादहंकारः एषः महाभूतः आदिभूतः विकृतश्चासीत् अनेन तमसोद्रिक्तादहंकारः तेन भूततन्मात्रा संजाता । भूतादयः तामसः प्रकीर्तितः । ततः शब्दस्पर्शरूपरसगन्धादयः तथा तदाधारकः वाय्वाकाशादीनि अजायत । एतत् तन्मात्रा अविशेषेति ख्यातः । ततः सत्वोद्रिक्तात् सात्विकात् वैकारिक अहंकारात् पंचज्ञानेन्द्रियाणि पंचकर्मेन्द्रियाणि दशदेवता एकादशं मनश्च अजायत तत्र देवाः वैकारिकाः स्मृताः ।

पुरुषाधिष्ठितत्वात् अव्यक्तानुग्रहेण च ते महदादयः अण्डमुत्पादयन्ति । विशेषेभ्यो ऽण्डम् बुद्बुदकेभ्यो समुत्पन्नं जलबुद्बुद्वत् अजायत । ततः तस्मिन् ब्रह्मणः कार्यकरणार्थं संसिद्धम् । एतदण्डस्य विवृद्धे सति तस्मिन् सद्रूपक्षेत्रज्ञः ब्रह्मा अभवत् । स वै प्रथमः शरीरी पुरा पुरुष उच्यते । अग्रे समवर्तितः ब्रह्मा भूतानां आदिकर्ता सर्गे प्रतिसर्गे च । एष चतुर्मुखः हिरण्यगर्भः क्षेत्रज्ञः इति स्वरूपेणभवति ।

एष ब्रह्मा सृष्टिकाले करणैसह सृज्यते समाहारं त्यजति तथा समाहारं सन्निवेशु देहान स्वीकरोति च ।

हिरण्मयः मेरुः तन्महात्मनः उल्बं तथोदकं गर्भः समुद्रानि जरा पर्वतानि स्थानि च ।

इमे सप्तलोकाः सप्तद्वीपा ससागरा पृथ्वी अस्मिन्नण्डे समाहिताः सनक्षत्रा सग्रहा चन्द्रादित्याः वाय्वादयाः यत्किंचित् लोकालोकम् तत्सर्वम् अण्डे प्रतिष्ठितम् ।

एतद् अण्डः दशगुणाभद्भि: बाह्यसमावृत: । तथैव तेज: वायुना तथा वायु: नभसा वृतम् । तथाकाश: भूतादिमहतावृतम् । महतापि अव्यक्तेनावृतम् । एभि: सप्तभि: प्राकृतावरणै: अण्डम् आवृतम् ।

अन्योन्यमावृत्य एता: अष्ट प्रकृतय: स्थिता: । सर्गस्थित्यन्त काले च एता: वृसित्वा परस्परोत्पन्ना परस्परम् धारयन्ति च ।

आधाराधेय भावेन विकारा: विकारिषु निवसन्ति । अव्यक्तं क्षेत्रं क्षेत्रज्ञं ब्रह्मेति च निगदितम् । क्षेत्रज्ञाधिष्ठितमेण[1] प्राकृत: सर्ग: । अबुद्धिपूर्वकैव प्रथम: सर्ग: तडित्वद् प्रादुर्भूत: । इति ।

कूर्मपुराणेऽपि लिखितम्-

ब्रह्मयोनि: प्रकृति: शक्तिर्वा स्वमायया इदं जगदुत्पादयति ।

---

१- वायुपु० ४। ३६-४०
ब्रह्माण्ड पु० ३।२३-३८

एषा पराशक्त्य एव ब्रह्माण्ड विवृद्धिरिति[1] ।

वायुपुराणे पि प्रकाशितम् यत्- सूक्ष्मा प्रलयधर्मिण्या परा-
शक्त्या एव क्षेत्रज्ञः ब्रह्म संज्ञितो जायते ।अनया एव मूर्तामूर्तानाम्
प्रादुर्भाव तिरोभाव स्थित्यनुग्रहश्चापि भवति ।इयमेव अण्ड ब्रह्माण्डानां
प्रकाशिनी चेति[2] ।

---

१- ममयोनिर्महद्ब्रह्म तत्रगर्भंदधाम्यहं।
मूलं मायाभिधानं तु ततो जातमिदं जगत्
प्रधानं पुरुषो ह्यात्मा महान् भूतादिरेव च ।
तन्मात्राणि महाभूतानीन्द्रियाणि च जज्ञिरे ।
ततोऽण्डमभवद्धैमं सूर्यकोटिसमप्रभम् ।
तस्मिन् जज्ञे महाब्रह्मा मच्छक्त्या चोपबृंहिता ।।
(कूर्मपु०उ०वि०८।२-५)

२- सूक्ष्माप्रलयधर्मिण्यस्ततः प्रकृतः स्मृतः ।
येस्यां विकारा संजज्ञे क्षेत्रज्ञो ब्रह्मसंज्ञितः ।।
तासुप्रकृतिमत्सूक्ष्ममधिष्ठातृत्वमव्ययम् ।
अनुत्पाद्यं परं धाम परमाणु परेश्यम् ।।
अक्षयश्चाप्यनूह्यश्च अमूर्तिर्मूर्तिमान सो ।
प्रादुर्भावतिरोभावः स्थितिश्चैवाप्यनुग्रहः ।।
विधिरैन्द्रीरनौपम्यः परमाणुर्महेश्वरः ।
सतेजा एष तमसो य पुरस्तात्प्रकाशकः ।।
यदण्डमासत्सौवर्णं प्रथमं स्वोपसर्गिकम् ।
बृहतं सर्वतो वृतमश्विराड्यजायत ।।
ईश्वराद्बीजनिर्भेदः क्षेत्रज्ञो बीज इष्यते ।

महाभारतसंकलितश्रीमद्भगवद्गीतायामपि वर्णितम्-

इदं ज्ञान परां[१] शक्त्यैव धारयति । तद् शक्त्यैव ब्रह्मयोनि:[२]

यद्गर्भे ब्रह्माण्ड जीवि: निवसन्ति च ।

---

१- योनिप्रकृतिमाख्याते सा च नारायणात्मिका
विमुलोकसृष्ट्यर्थं लोकसंस्थानमेव च ।
सन्निसर्ग: स तन्त्रा च लोकपालु महात्मन: ।।
(वायु०पु० १०२।२२२-२२६)

अपि च-

योनेरधिष्ठितं तत्र बीजाख्यं भजते तु तत् ।
महदाद्यं विशेषान्तं चतुर्विंशति गुणात्मकं ।
क्षेत्रज्ञस्य प्रधानस्य पुरुषस्य प्रपत्स्यते ।।
।वायु पु० १०३।१२-३५

१- अपरेयमितस्त्वन्यां प्रकृतिं विद्धिमे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ।।
एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।।
-श्रीमद्भगवद्गीता ७।५-६

२- मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभव: सर्वभूतानां ततो भवति भारत ।।
सर्वयोनिषु कौन्तेय मूर्तय: सम्भवन्तिया:।
तासां ब्रह्महद्योनिरहंबीजप्रद: पिता ।।
-श्रीमद्भगवद्गीता १४।३-४

श्वेताश्वतरोपनिषद्यपि लिखितम्-

यथा काष्ठान्तर्निवह्नेः स्वरूपम् न दृश्यते तथैव लिङ्गस्वरूपे त्रिभेदो क्वापि न दृश्यते किन्तु न तदा भावम् वर्तते यथाग्निः अरणि-मन्थनेन इन्धनयोनिना आविर्भवति तथैव आत्मपरमात्मस्वरूपेण ब्रह्म लिङ्ग-मपि प्रकृति विमर्शेण[1] आविर्भवति च ।

अग्रेचाप्युक्तम्-

यदिदं ब्रह्म ब्रह्माण्डगर्भे निवसति तदेव प्रत्यक्षो निजस्वरूपे भासयति भविष्यत्काले पि स एव आविर्भविष्यति । एष सर्वतोमुखमेव सर्वदेहधारिषु (लिङ्गेषु) लिङ्गो भावे निवसति[2] ।

श्रीमद्भगवद्गीतायामपि 'देही नित्यमवध्योऽयं देहे सर्वस्य भारत' इत्युक्तिना शक्तिमाध्यमो ब्राह्मणः एव निरूपणम् कृतम् -तदेतत् पराशक्तिरेव आद्ययोनिः या चैतन्यां शक्तानि भोगानि स्वान्तः धारयति काले प्रकाशयति च ।

---

१- श्वेताश्वतर १।१२-१३

२- श्वेता उ० २।१६-१७

महाभारतपुराणे पि--

पराशक्तेर्लिङ्गरूपम् प्रकाशितम् यथा- एषा पराशक्ति: अतीन्द्रिय भूतत्वाद लिङ्ग ग्राह्या लिङ्गाख्या[1] ।

दुर्गासप्तशती ग्रन्थेनापि स्तुति व्याजेन पराशक्तिम् उद्भवस्थितिसंहारकारिणी, ब्रह्मविष्ण्वादि त्रिलिङ्गदेवानाम-न्तर्धारिणी लिङ्गधारिणी विश्वधारिणी वा उक्तम्[2] ।

प्राधानिकरहस्ये चापि व्याप्या पराशक्ति: महालक्ष्मी स्वरूपे वर्णिता । चतुर्भुजा एषा स्व हस्तेषु मातुलुङ्ग गदाखेटं पानपात्रं तथा मूर्ध्नि नागं लिङ्गं योनिमिति मौलि च धारयति । एतद्रहस्य प्रधानामूर्ति: । नन्दिकं रहस्यमिति प्रकाशने भुवनेश्वरी संहिता-याम् लिखितम् - हस्तयुतं मातुलुङ्गं कर्मराशे: गदा क्रियाशक्ते: खेट: ज्ञानशक्ते: तथा पानपात्र: तुरीयवृत्ते परिचायक: भवति । एवमेव नाग: कालस्य योनि: प्रकृते: तथा लिङ्गम् ब्रह्मण: प्रतीकं वर्तते । इति मूर्ति भेदेन पराशक्तिरूपामहालक्ष्मीसप्तशतीगानात्मिका आद्यारूपिणी ब्रह्मविष्ठात्रीति निरूपिता[3] ।

---

१- महाभारत वनपर्व २११। १२

२- त्वमेव संध्या सावित्री त्वं देवि जननी परा ।
त्वयैतद्धार्यते विश्वं त्वयैतत्सृज्यते जगत् ।।
विष्णु: शरीरग्रहणमहमीशानमेव च ।।
-दुर्गासप्तशती १।७५-८४

३- प्राधानिकरहस्य श्लोक ४-५

मार्कण्डेय पुराणे पराशक्तिम् ब्रह्माण्डोत्पत्ति कारणा उक्ता-

तत्र एषा पराशक्ति: सूक्ष्मा नित्या सदसदात्मिका अव्यक्ता ध्रुवा अजा शब्दसंज्ञया गन्धरूपरसहीना अनाद्यन्ता त्रिगुणा जगत योनिभूता प्राक्प्रलयात् तत्प्रलये अविज्ञेया इति निरूपिता। तस्मिन्नगुणसाम्यावस्थायामेव सर्गकाले क्षेत्रज्ञ स्थिति चापि प्रकाशितम्।

तथा स्व गुणप्रकाश प्रधानोद्भवश्च[1] यथा- बीजेनत्वक् तथैव महदावृत: अव्यक्त: इति।

पातंजलियोगसूत्रे पि वर्णितम्-

यदा प्रकृत्या सह चेतन संयोगम् जायते तदा महदुत्पत्तिर्भवति। एषा प्रकृते: प्रथमम् कार्यम्[2]। सत्तामात्रेण स्वोपलब्धि: एतदेव एषा लिङ्गमात्रेति निगदिता।

मैत्रायण्युपनिषदि-

स वा एष सूक्ष्मो ग्राह्यो दृश्य: पुरुषसंज्ञक: बुद्धिपूर्वमिहैवावर्तते तेन सुषुप्तस्यैव बुद्धिपूर्वं निबोधयत्यथ योह खलु तावत् अस्यांशो यम् यश्चेतन मात्र प्रतिपुरुषं क्षेत्रज्ञ: संकल्पाध्यवसायभिमान लिङ्ग प्रजापति विश्वाख्यस्तेन चेतनेदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता चैष (शक्ति)अस्येति[3]।

---

१- मार्कण्डेय पुराण ४७।३२-३७ बरेली प्रकाशन

२- पातंजलि योगसूत्र १९

३- मैत्र्युपनिषद्

निरालम्बोपनिषद्यप्युक्तम्-

अलिङ्गो ब्रह्म पृथिव्यप्तेजवाय्वाकाशमहदहंकारभूत ब्रह्माण्डे कर्मज्ञानार्थं भासमाने सत्यपि समस्तोपाधिरहितं आद्यन्तरहितं शुद्धमाद्वितीयं पवित्रम् शान्तं निर्गुणमवर्णनीयं चैतन्यं परब्रह्ममिति उक्तम्[१]।

एतद् ब्रह्मैव यदा स्वप्रकृत्याश्रयेण लोकानुत्पादयति तथान्तःप्रविश्य ब्रह्मेन्द्रियाणि नियोजयति च तदा तच्चैतन्य: ब्रह्म-विष्णुशिवेन्द्रादि संज्ञा संज्ञित: । तथैषा जीवेति उदाहृत: ।

अलौकिका जगन्निर्माण समर्था बुद्धिरूपाप्रकृतिगर्भेण निरासक्तमब्रह्म ब्रह्मविष्णोन्द्रयम सूर्यचन्द्रदेवासुरमनुष्यस्त्रीपशवादिभावे आविर्भवति ।

एषा विश्वबीजानां प्रकाशिनी आद्याशक्ति: पुराणेषु लिङ्गधारिणी पराख्या च ।

---

१- निरालम्बोपनिषद् ४-६

कुलार्णवतंत्रे पि लिखितम्-

यथा तालवृंते निल: बीजे ङ्कुर: तिले तैलम् अग्नौ उष्णम् रवौप्रभा चन्द्रे ज्योत्स्ना काष्ठे नल: पुष्पे गन्ध: जले-द्रव: तथैव एतच्चराचरम् पराशक्त्यान्तर्गतम् भाति। तस्यानुग्रहेणैव अयम प्रपंच: आविर्भवति।[1]

यथा वटबीजे वृक्ष: सूक्ष्मरूपेण तिष्ठति तथैव इदं ब्रह्माण्ड-मपि सूक्ष्मभावेन तस्यान्तस्थमेव भाति च।

---

१- पराप्रसादमंत्रेण स्यूतमेतच्चराचरम्।
अभिन्नं तत्वतो देवि तालवृन्ते यथानिल:।
बीजे ङ्कुरस्तिलैतैलमग्नावुष्णं रवौ प्रभा
चन्द्रेज्योत्स्ना नल: काष्ठे पुष्पे गन्धे जले द्रव:॥

पराप्रसाद मन्त्रे पि प्रपंचो यं तथास्थित:।
वटबीजे यथा वृक्ष: सूक्ष्मरूपेण तिष्ठति।
पराप्रसादमंत्रे स्मिन् ब्रह्माण्डो पि यथा स्थित:।

-कुलार्णवतंत्र ३।५२-५६

शारदातिलकग्रन्थे लिखितम्-

परशक्तिमयो सो जाद त्रिधा अजायत । तत्त्रिभेदः विन्दुनादबीजत्वचोच्यते । विन्दुना व्यक्तं तं आकाशेति जातम् । ततः जातसादो सर्वव्यापी विन्मात्मन: कालबन्धु: सदाशिव: ततो रुद्र: ततो विष्णु: ततो ब्रह्मेति तेषाम् समुद्भवः[1] ।

ततः अव्यक्तात् मूलभूतात् महद् महतो हंकारः अहंकाराद्-गुणाः विधि भेदतः ।

वैकारिकाहंकारात् दशदेवाः दशेन्द्रियाणि तन्मात्रा पंचभूतादीनि अजायत् । तेभ्यो निखिल प्रपंचम् पंचीकरण मार्गतः समुद्-भवम् ।

वायुपुराणे पि-

परा शक्तिम् जायोनि: विश्वोद्भवकरी त्रिगुणेत्युक्तम्[2] ।

अपि च अन्यप्रसङ्गे लिखितम्-

ब्रह्मस्वरूपोमहेश्वर: यो अध्यात्मिकानाम् परमपदेति वाच्य: तद् द्वैधीभावेन चात्मानं प्रविश्य व्यवस्थितः । परापररूपे स: एव निष्कल: सकल: । अविज्ञेयगतेमथितविग्रहस्य जस्य पूर्वकाले आदिसर्गा-यलिङ्गरूप प्रथमं बीजं जातम् । कालक्रमेण तद्बीजं विष्णुयोनौ प्रविष्ट:-तयोन्या हिरण्मयो यमण्डम जातम् तेन पृथिव्यादि पंचभूतानाम् ब्रह्म-विष्णादिदेवानाम् समुत्पत्तिरिति ।

१- शारदातिलक प्रथम पटल ६-२८
२- वायुपुराण २३।५४-५६
३- वायुपुराण २४।७१-७७

एषा नित्यानित्यस्वरूपिणी महामाया महाविद्या सर्वकारणानां कारणा अव्यय प्रकृतिः परमात्मनः इच्छाशक्तिरिति ।

एका पराशक्तिरेव प्रलये सर्वजीवानाम् लिङ्गानि स्वशरीरे निवेश्य क्रीडति[1] ।

इयमव्यक्ताप्रकृतिः माया अविद्याश्चेति द्विविधा । शुद्धसत्त्वप्रधाना माया मलिनसत्त्वप्रधाना विद्या । या शरणागत रक्षिणी[2] माया तद् शुद्धसत्त्वप्रधानमायासहचर्येण ईश्वरः इत्युक्ता ।

परब्रह्मविद्सर्वज्ञः ईश्वरः सर्वोत्पादकः सर्वानुग्रहकर्ता च ।

मलिनसत्त्वप्रधाना विद्यायां यो प्रतिभाति तज्जीवः । जीवे सुख दुःखानां भानमिति ।

जीवेश्वरौ उभौ स्थूलसूक्ष्मकारणाभ्याम् त्रिविधेम् ।
कारणदेहाभिमानी जीवः प्राज्ञः ।
सूक्ष्मदेहाभिमानी जीवः तैजसः ।
स्थूलदेहाभिमानी जीवः विश्वम् इति ।

---

१- एषा संहृत्य सकलं विश्वं क्रीडति संक्षये ।
लिङ्गानि सर्वजीवानां स्वशरीरे निवेश्य च ।।
श्रीमद्देवीभाग०पु० ३।४।५१-५४

२- श्रीमद्देवीभागवत पुराण ७।३२।४३-५०

इत्थं ईश्वरो पि ईश-सूत्रात्मा- विरादिति त्रिसंज्ञाभिध: जीव: व्यष्टिरूप: समष्टिरूप: ईश्वरश्चेति ।

एष सर्वेश्वर: स्वेच्छया जीवानुग्रहाय विविधभोगाश्रय: । न गृहीत्वा नानालोकानुत्पादयति च ।

तथा शक्तिप्रेरणया एव निरंतरकार्य करोति ।

पराशक्तिरेव अहंभावेन निखिलतत्वेषु ओतप्रोता अतएव एषा कारणाश्रयो ईश्वर:लिङ्गाश्रयी विष्णु: स्थूलदेहाभिमानी ब्रह्मा चापि ।गौरी लक्ष्मीसरस्वती विष्णुरुद्रब्रह्मादयश्चापि एतदस्यैव रूपाणि च । एतस्मिन्नेवावस्थिता: देवतिर्यङ्मनुष्याधारम्य समस्त स्थावर जंगमादय: निखिल प्रपंचाश्च[1] ।

बहिरन्तरभावे यत्किंचिदपि दृश्यते श्रूयते च -तत्सर्वम् व्यापकत्वेन शक्तेरहंभावश्च । यथा बंध्या पुत्रोत्पादने समर्था तथैव पराशक्त्यभावे नान्यको पि विश्वोत्पत्तिकरणे समर्थ: ।

रज्जौसर्पादिवत् ईशत्वादि भावे पराशक्तेरवभासनं असंशयम् ।

यत् विना अधिष्ठानसत्तया कतिपयवस्तुभानमसंभाव्यम् तत्सिद्धम् जगदवभासनम् पराशक्तेरहंकारादेव इति ।

---

१- श्रीमद्देवीभागवत पुराण ७। ३३। १२-१६

यस्मिन्निदं बीजरूपे व्यवस्थितम् तथा यथा लिङ्गदेहोत्पत्तिरभवत्[1]। सा अव्यक्ता (शक्तिः)कारणदेहेति उच्यते। सैवात्मा सूक्ष्मशरीरिणी-[2] इयम् सा एव शक्तिः यस्योदरे कोटिशः ब्रह्माण्डानि विद्यमानानि[2] अनया एव सूत्रात्मा महदिति जातम् यो लिङ्गमित्युक्तम्[3]। इदमात्मनयाः सूक्ष्मशरीरं इयमेव सर्वात्मकम् यस्मिन् जगद्बीज रूपे समाहितम् तथा यथा लिङ्गदेहोत्पत्तिः भवति।

एषा परमात्मविग्रहा शक्तिः मनबुद्धयेन्द्रियाणि इति सप्तदशतत्वानि धारयति अतएव एषा सूक्ष्मा लिङ्गशरीरिणी इत्यप्युक्ता। एषात्मशक्तिरेव जगद्योनिरिति।

इयमेव कारणशून्य विश्वस्य बीजा कारणा वा एषा प्रकृतिरेव विश्वधात्री अजेत्युक्ता। लोहितशुक्लकृष्णा रजस्सत्व तमोपेता च। एषा विश्वबीजधारिणी शक्तिरेव सृष्टिकाले स्वगर्भस्थ बीजान् प्रकाशयित्वा संसार कार्यम् करोति च।

आगम ग्रन्थे प्युक्तम्-

चित्संविद्रूपा पराशक्तिः अव्यक्तादि जगच्चित्रम् स्वात्मभित्तौ प्रभेदयति[4]। इति।

१- श्रीमद्देवीभा०पु० ७।३२।२०-४१

२- ,, ७।३०।५

३- ,, ७।३१।७०

४- साचितिः परमा शक्तिः संविद्रूपा महेश्वरी।
स्वात्मभित्तौ जगच्चित्रमव्यक्तादि प्रभेदितम्॥

-त्रिपुरारहस्य ज्ञान ख० १५।५

अखण्ड सच्चिदानन्दपरमात्मनः स्वतंत्रा परमा शक्तिः[1]
तन्मयी तदभिन्ना च यद्वत तेजसाबुष्ण्यं अपृथक् तथैव सा ।
स्वातंत्र्य विश्रान्तिसहिता एकरसात्मिका परमदुर्घटा एषा मायाख्या ।

चिदेकरसरूपिणी एषा आदर्शे बिम्बप्रतिबिम्बवत् जगत्
वैचित्र्यभासनं करोति । इति ।

<u>योगिनी हृदये पि लिखतम्-</u>

सा पराशक्तिः[2] स्व प्राणिनाम अदृष्टवशात् स्वान्तः
संहृतलोकसिसृक्षया विमर्शरूपिणी स्वेच्छया विश्वरूपिणी विश्वं
सृजति ।

विश्वसर्जनमेव पराशक्तेः स्फुरन्ता तस्याः सृष्टिरूपत्वात् ।
तदा सृष्टिकाले षट्त्रिंशतत्वात्मकः विश्वचक्रस्य विश्वमयस्य पर-
देवता चक्रस्य संभवः ।

<u>कूर्मपुराणे पि लिखितम्-</u>

एषा ममस्वरूपभूता कूलरूपिणी अनन्ता परमा शक्तिः
ययाहं सदेवासुरमानवापूरितान् लोकान् विमोहयामि संहरयामि सृजामि
च[3] ।

---

१- त्रिपुरारहस्य ज्ञानखण्ड १८। ९७-११२
२- योगिनीहृदय पृ० १५ श्लोक ६
२- कूर्मपुराण पूर्व वि० १। ३६-३८

शिवब्रह्माद्य: देवा: एतदाश्रयी भूत: शक्तिमानिति संजात: । एषा सर्वशक्तिस्वरूपा विश्वोत्पत्तिकरी त्रिगुणा प्रकृतिरिति च ।

लिङ्गपुराणे पि-

सर्गप्रतिष्ठा संहार: लीलार्थलिङ्गरूपिणम्[1] इत्युक्तिना विश्वोद्भवकरो परमेश्वर विभिन्नालिङ्गरूपिणो पराशक्त्या एव विश्वोत्पत्तिम् प्रदर्शितम् ।

तंत्रसंग्रहग्रन्थे पि-

तुरीय कालिका भावे सुप्तकारणस्वभावा चिच्छक्ति: पराशक्तिर्वा सूक्ष्मालिङ्गशरीरिणीत्युक्तम् - इयमेव विश्वोत्पत्ति कारणा[2] च ।

---

१- अर्धकृष्णकला वर्णमृग्यजुरसाम रूपिणम् ।
ईशानमीश मुकुटं पुरुषास्यं पुरातनम् ।।
अघोरहृदयं हृष्टं वाम गुह्यं सदाशिवम् ।
निष्कलं सूक्ष्ममव्यक्तं सकलं च महेश्वरम् ।
सर्गप्रतिष्ठासंहार लीलार्थं लिङ्गरूपिणम् ।
प्रधानं लिङ्गमाख्यातं लिङ्गी च परमेश्वरम् ।।
(लिङ्गपु० १।२७।८९-९०)

२- लिङ्गदेहो निराकार: सूक्ष्म: सर्वैरनुंजित: ।
कारणं स्वभाव: सुप्त: चिच्छक्तिस्तुर्यकालिका ।।
(तंसं०भा०ण०रामध्यतंत्र ३।५६)

लिङ्गाधिष्ठानभूता एषा पराशक्तिरेव सृष्टिकारणा ब्रह्मशक्तियोगेनैव उत्पत्तिस्थित्याद्यवस्था संभवन्ति हि।[1]

शक्त्या आत्मगर्भस्थ लिङ्गानां प्रकाशनम्-

स्थूलसूक्ष्म कारणात्मकत्रयमिदं जगत् शक्तेर्विलासमात्रं वर्तते। शक्तेः आत्मदेवताभूतेति त्रिधास्थित्यानुसार एव परिणामो जगदपि त्रिधा संभवति।

यदा बहिर्मुखी शक्तिः घनीभावेन स्थूलत्वं गच्छति तदा भौतिकतत्त्वानामाविर्भावः भवति।

अपरपक्षे सा विरलयन् संकुचीभूय 'आत्मा बिन्दु' पद वाच्या वा भवति।

आत्मादेवता भूतश्च एकस्या आधारायाः तिस्त्रो वस्थाः सन्ति।

एवम् स्थूलकारण लिङ्गात्मकमिदं त्रैविध्यजगदपि मूलसत्तायाः परिणामम् विहाय नान्यद भवति। सत्तायाः शक्त्या सह कः सम्बन्धः इति साम्प्रतं न विवेचनीयं तदपि स्मरणीयमिदं यत् उभयोर्वैषम्येन जगत्सृष्टिः सम्यगेश्च तथा ईश्वरभावस्य जीव भावस्य उन्मेषणो चापि।

साम्यावस्था जायते इति सृष्टिः दृष्टिश्च एकार्थबोधको व्यापारौ भवतः।

---

1- सा भाख्या जगद्धात्री लिङ्गमूर्तिस्त्रिवेदिका
लिङ्गस्तु भगवान्द्वाभ्यां जगत्सृष्टि द्विजोत्तम ।।
-लिङ्गपु० बरेलीप्र०९२।९८७ )

स्वाभाविकनियमेन भूमिभेदानुसारं साम्योपलब्धिजायमाना सतो परमाद्वैतस्य महासाम्यम् वर्तते । स्थूलभूमौ ये शक्तिः सत्ता च आत्मप्रकाशिन्यौ स्त तत्पृथक्म् साम्यम् । एवम् जगत्संपकिण्याः शक्तेः सत्तायाश्च द्वितीयं साम्यम् । एवम् तृतीयन्चापि । यदैतत्साम्यरहितो एकत्वे यातः तदा पूर्णत्वं परमाद्वैतं वा शोभते ।

अस्मिन्नद्वैत तत्वे महाशक्त्युद्बोधनम् बिना प्रवेश असंभवः । शक्त्यात्मप्रकाशातिरिक्तं नान्यद् भाति । सुसूक्ष्मकारणं सूक्ष्मं लिङ्गात्मकं इन्द्रियगोचरं स्थूलं जगच्च शक्तेः विकासमात्राण्येव सन्ति । शक्तौ प्रकाशविमर्शस्थितिः अविनाभूतरूपेण वर्तमाना प्रकाशेनबिना विमर्शः तथा विमर्शम् बिना प्रकाशो नहि । अतएव प्रकाशविमर्शस्य नित्य सम्बन्धः। तदेव शिवशक्त्यात्मकं चैतन्यमिति महापुरुषानुभूतौ भाति तथा शास्त्रे प्रचरति ।

किन्तु प्रकाशविमर्शसाम्यं तच्चैतन्यम् अव्यक्तमित्युच्यते । एतदवस्थायाः परमपदमिति अपरनामधेयम् । अस्यामवस्थायां अनादि महाशक्तिः परमशिवेन सह सामरस्यभावापन्ना अद्वयभूता विराजति । स्वरूपदृष्ट्यावस्थायां परब्रह्म नामन्तरारूपा परन्तु स्वरूप स्वातंत्र्य नित्य वर्तमानत्वात् रूपतो विलक्षणा मायेति निगदिता ।

---

१- शक्तिउपासना पृष्ठ ६६ । डॉ० गोपीनाथ कविराज ,गीताप्रेस, गोरखपुर ।

एषा स्वातीतत्वात् विश्वात्मिका विश्वोत्तीर्णा च। विश्वातीतपरमपदात् अर्थादितत्स्वातंत्र्य विलसात् नित्यसाम्यस्य अभन्नत्वेपि प्रकारान्तरेण मग्नतदृशावस्थया: द्योतनं भवति। तथा वैषम्य परिणामेन गुणप्रधान भावेन षट्त्रिंशतत्वसमन्वित विश्वस्याविर्भाव भवति।

अखण्डपरमार्थस्वरूप शिवशक्त्यभिन्नौ सति स्वातंत्र्य जनित विदाभवशेन तस्मिन् भेदमयो यं प्रपंच: उदयति। त्रिविभागविशिष्टेदं निखिलं जगत् मूलत: शक्तेर्विकार: इति निश्चितम्[१]।

यदा एषा पराशक्ति: स्वात्मभूतं विश्वं दृष्टुमुन्मुखी भवति। तदा शक्तिशिवभावापन्नमात्रावच्छिन्न बिन्दुस्वरूपा जाता-येन परमार्थिं चैतन्यं प्रतिष्ठितम् तथा ज्योतिर्लिङ्गम् आविष्कृतम्।

तान्त्रिकपरिभाषायामेष बिन्दु: कामरूप पीठेति प्रसिद्धम् पीठेस्मिन् चैतन्यम् स्वयंभु लिङ्गमित्युक्तम्। शक्तिशिवसमत्वभावे एषपीठ: प्रतिष्ठित:। वामार्धे एतौ शक्तिशिव अंशौ शान्ता शक्ति: अम्बिका शक्तीति उक्तम्।

---

१- शक्ति उपासना अङ्क पृष्ठ १००

अस्मिन पीठे महाशक्तेरात्मप्रकाश: परावक्रिति प्रख्यात: । तंत्रानुमोदितं योगसाधका: जानन्ति यत इत: शब्दराज्यस्य सूचना भवति । एषा प्रणवस्य परमं रूपं वेदस्वरूप वा वर्तते ।

यदा विकासोन्मुखी शान्ता शक्तेर्परिणति इच्छारूपे भवति तदा शिवांशा अम्बिका शक्तिरपि "वामा" रूपे आविर्भवति ।

एतस्यां स्थितिवैषम्य भावे तदनुरूप चैतन्यस्य स्फुरणा भवति । एषा बिन्दु: पूर्णगिरिपीठेति निगदितम् । तथा चिदिकास वाण-लिङ्गेति उदाहृतम् शास्त्रीय दृष्टौ एषा पश्यन्ती वाक्ति कथ्यते ।

पराशक्ति: शब्दस्य प्रथमभूमौ कामरूप पीठे आत्मस्थं विश्वं नित्यवर्तमानावभासतो । अत्र नोन्नागतरूप: खण्डकालसत्ता अपि न तथा दूरस्थसमीप्यस्य व्यवधानमपि च नास्ति । तथा चात्र कार्यकारणस्य विशिष्टनियमं अपरिज्ञातं । नित्यमण्डले स्मिन्न कोप्या-[1] वरणं वाचत्वं विक्षोभं चापि न एषा शान्तिमयावस्था वर्तते ।

---

१- शक्तिउपासना अङ्क पृ० १०१

इच्छाशक्तिरुन्मेषेण शब्दस्य द्वितीयपङ्क्तौ सृष्टि-विकासम् जातम् । तन्नित्यषट्कं शक्त्यन्तस्थं बीजभूतम् विश्वमिति च ।

यदेच्छया तद्गर्भस्य एकदेशविवृतिः तदा सृष्टिरिति च एकभूमिना एव कालप्रभावम् प्रारभते । एषा सृष्टिक्रियाक्रमेणैव भवति । अस्मात् स्थानादेव कार्यकारण भावस्या स्फुरणमपि मन्तव्यम् ।

अस्मिन् परावस्थायां उपरतां गते इच्छाशक्तेः ज्ञान-शक्तिरुदयमिति । तथा तच्छिवाशः ज्येष्ठा शक्त्या सह अद्वैत भावे युज्य 'जालन्धरपीठेति' सामरस्य बिन्दोः प्रकाशनम् करोति । विकटाभिव्यक्तं चैतन्यं इतर लिङ्गेति प्रसिद्धम् ।

अस्मिन् पङ्क्तौ मध्यमा वा किति आविर्भवति । स्वात्मा विकासोन्मुखीलक्षणस्य प्राबल्ये यदा स्थितिः दीयते संहार-क्रियारम्भे च तदा ज्ञान शक्तिः क्रियाशक्तौ रौद्री शक्त्या सह साम्यम् करोति ।

परिणामतः पतितबिन्दुः आविर्भवति तद् 'उड्डियान-पीठेति' लोके प्रसिद्धम् ।

अत्र चिच्छक्तिः महातेजसम्पन्ना परलिङ्ग नामाभिधा ।

एषा शब्दस्य चतुर्थी भूमिः वैखरीति बोधव्यः अनुभवे दायधर्मी एषा ।

शान्तिनरं दृष्टौ एता पश्यन्ती मध्यमा वैखरीति शब्दानाम् अवस्था एव प्रणवस्य अकार: उकार: मकारश्च ऋग्यजुसामिति वेद-त्रयीवा प्रतीयन्ते ।

अखण्डपरात्परास्तुरीयस्य त्रिविध- परिणामुरेव त्रिलोक: त्रिदेव: त्रिकालाद्या सन्ति ।

शास्त्रेबिन्दुगर्भितं महात्रिकोणं यं निखिल ब्रह्माण्डस्य मूलमिति व्याख्यातं तदस्मिन्नेव कल्प चतुर्विधि शब्दसम्बन्धेन प्रकटितम् ।

त्रिकोणस्य पश्यन्ती मध्यमा वैखरीति त्रयो रेखा तथैमा: सृष्टिस्थितिसंहारस्य वामा ज्येष्ठारौद्री विंवा ब्रह्मविष्णुमहेशादि त्रिभेदो शिवांशस्य इच्छाज्ञानक्रियेति शक्त्यंशस्य प्रतिनिधीति वर्तते ।

त्रिकोणस्य मध्यबिन्दु:अम्बिका शान्तेति उभया शिव शक्त्यंशस्य अंशश्चेति ।

प्रधानत: बिन्दौ: शिवरूप तथा त्रिकोणस्य योनिरूपे परिणति: च । त्रिकोण मण्डलेन समस्तविश्वानामाविभाव: जायते ।

आद्या: शक्ति: तत्त्वातीता सर्वतत्त्वात्मिका प्रपंच रूपा च । एषा नित्या परमानन्द स्वरूपिणी जगत: बीजरूपा च । सा एव प्रकाश शिवस्य ज्ञानौदबोधिनी दर्पण रूपा चेति[२] ।

---

१- शक्ति उपासना अंक डॉ० गोपीनाथ कविराज, गीताप्रेस, गोरखपुर

लिङ्गशब्दस्य व्याकरणपुराणादि दृष्ट्या स्वरूपनिरूपणम्(श्रीमद्देवी-भागवतपुराण दृष्ट्या शिवपुराणदृष्ट्यालिङ्गपुराण दृष्ट्या स्कन्द-पुराण दृष्ट्या न्यायदृष्ट्या पाशुपतयोगागम दृष्ट्या च )

वेदाङ्गव्याकरणदृष्टौ लिङ्गस्वरूपम्-

पाणिनीयलिङ्गानुशासनानुसारेण लिखित लिङ्ग-परिशिष्ट नामक ग्रन्थे आचार्य वामदेवेन लिखितम्-

लिङ्गस्य सामान्यस्वरूपम् स्त्रीपुरुषभेदानुकूलं वर्तते । यस्मात् कारणात् स्त्री स्त्रीति पुरुषः पुरुषेति उच्यते स्वभावतः तदेव प्रजनन क्षमता द्योतकमस्ति । आंग्लभाषायाम् सेक्स शब्दः एतस्मिन्नेवार्थे प्रयुक्तः ।

संस्कृतभाषायामपि गुणाः पूजास्थानं गुणिषु न च लिङ्ग न च वयः इति वाक्येषु लिङ्ग शब्दस्य अयमेवार्थः प्रयुक्तः ।

लिङ्गशब्दस्य शाब्दिक अर्थे विचार कर्तव्यतायाम् अस्यार्थः चिन्ह[१] मात्र वर्तते ।

लिगि चित्रीकरणे इति धातोः 'लिङ्गयत्यसौ तल्लिङ्गम इति निरुक्तौ व्युत्पन्नः लिङ्गशब्दः व्युत्पन्नस्य लिङ्गशब्दस्य चित्रीकरणं भिन्नवस्तुषु कस्यचिदेकस्य संकेतेन चिन्हेन वा द्योतनम् चेति । एवम लिङ्गशब्दः चिह्नस्य संकेतस्य वा पर्यायः ।

१- लिङ्गं चिह्नेनुमानेन च सांख्योक्त प्रकृतावपि ।

शिवमूर्तिविशेषे पि मेहने पि नपुंसकम् ।। -मेदिनी कोश

न्यायादि दर्शनेषु अस्मिन्नेवार्थे प्रयुज्य: एष शब्द:
"पर्वतो वह्निमान् धूमत्वात् महानसवत्" इत्याद्यनुमितिस्थले धूमो-
वह्नेर्लिङ्गो निरूपितम् ।

अन्यदर्शनेष्वपि एषैव स्थिति: यथा "कैर्लिङ्गैस्त्रीन्-
गुणानेतानतीतो भवति प्रभो" इति गीतायाम् ।

ते लिङ्गैश्च स्व शब्दैश्च शास्त्रे स्मिन्नुपदर्शिता इति
वाक्यपदीये व्याकरण दर्शने ।

एवम् चिह्नार्थे संकेतार्थे वा लिङ्गशब्दस्य प्रयोग: व्यापक: ।

शिवस्य स्तम्भाकार विग्रहो पि लिङ्गशब्देनोच्यते येन पुरुष
प्रजननाङ्गस्य जालकारणस्य प्रतीकस्य च सम्मिलित प्रतीति रुपलभ्यते ।
पुराणेष्वपि शिवलिङ्गं उभयरूपेण निरूपितम् । लिङ्गस्येदृशं स्वरूपं
प्रसिद्धं जनेषु पूजितं स्तुतं सं प्रतिष्ठितं वर्तते साधारणशब्देषु पुरुष
प्रजननाङ्गस्य बोधको यं शब्द: । प्रजनन कामतायां उभयोर्धारकयो:
पृथक् चिन्हीकरणं लिङ्गस्य कार्यमन्यो प्रकृति: एकै विशिष्ट जातिमत
प्राणिषु भूणस्य धायकं धारकं च इति पृथक् पृथक् संबद्ध संकेत यं स्थापित-
वती प्रत्यभिज्ञातु एतत्संकेतद्वय यस्मिन् यौने लिङ्ग शब्देनाभिधीयते ।

लौकिक लिङ्गम्-

सजीवा प्राणी प्राय: प्रजनन हेतुमुद्दिश्य लिङ्गयो: विभक्त:
तद स्त्रीपुरुषश्चेति ।

सस्सजीवी स्वानुरूपगुणशालिनो यत् सृष्टिमुत्पादयति तदो-
त्पन्नवस्तुव्यक्तित्वं सजीवस्य सन्ततिरिति च ।

सन्तत्योत्पादनाय स्त्रीपुरुषयोस्सम्बन्धम् अत्यावश्यकमिति प्रकृति नियमः। प्रकृतेर्विभिन्नभिरुच्याशक्त्या वा उभयोरनिवार्यता नियमः बहु अपवादेन रंजितः।

वृक्षपादपेषु सन्तानोत्पादक स्त्रीपुरुषयोर्लिङ्गः एकमेव वृक्षे सन्निहितः। घोंघादि जन्तुविशेषः उभयलिङ्गी संजाता। अमीवास्य जीवविशेषः प्रजननम् बिना खण्डक विखण्डनेन गुणन-रीत्या वा एकः द्वौ चत्वारः इति सम्भवति।

केचित्जीवः अस्थिर लिङ्गी अपि संभवन्ति। ते कदाचित् पुरुषः कदाचित् स्त्रीति भवन्ति।

इत्थं प्रजननाधारे सजीवी प्राणी अष्टधा भवन्ति। स्त्रीपुरुषं नपुंसकं उभयलिङ्गं अस्थिरलिङ्गं अद्भुतलिङ्गं अज्ञात-लिङ्गं अलिङ्गं वा इति।

किन्तु भाष्यकारैः उपरोक्त विभिन्नलिङ्गी जीवभावे गर्भविनाम् कर्तारम् गर्भाधानस्य आधारत्वेन भेदमुख्यं मत्वा द्वि-लिङ्गस्य प्रमुखत्वम्।

हिन्दीभाषायाम् स्त्रीलिङ्ग पुल्लिङ्गेति द्वे तथा संस्कृत भाषायाम् तृतीयम नपुंसक लिङ्गमपि वर्तते। एतन्नपुंसक-लिङ्गं प्रजनन क्षमता भावमेवद्योतते।

एवंप्रजनन क्षमता संबन्धित लिङ्गं लौकिक लिङ्गम् इति कथ्यते तच्च त्रिविधम् पुम्स्त्रीनपुंसकांच ।उक्तं महाभाष्ये-

स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः ।

उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥[1]

शास्त्रीयलिङ्गम्-

लौकिकलिङ्गानुसार शब्दलिङ्गस्य ध्रुवीकरणं असंभवं जटिलं च ।अधुनापि यदा संजीवजन्तुनाम सूक्ष्मत्वलोक संभव: तदा यदि केचन नवा प्रक्रियया तत्संजीवनां वा चक्रं शब्दानाम लिङ्ग-निर्धारणमसंभव: ।

वर्तमान कालावधि अष्टधा लौकिकलिङ्गानि निश्चितम् अग्रे अन्ये पि संभविष्यन्ति ।

यदि एतल्लिङ्गानां अन्तरान्गृहीत्वा लिङ्ग व्यवस्था अभवेत तदा विश्वभाषा मध्ये संक्षोभं जायेत ।तथा च निर्जीव पदार्थानाम् धातुनाम अव्ययादयानामर्थे लौकिक लिङ्गेतर भिन्न ाधारस्य आवश्यकता पुनरपि भविष्यति ।यत: निर्जीव पदार्थार्थै लौकिकलिङ्गस्याधारं अयुक्तम् ।अतएव व्याकरणग्रन्थे शास्त्रीय लिङ्ग-ग्रहणमावश्यकं उक्तं च भाष्यकारेण "न वैयाकरणैं शक्यं लौकिकं लिङ-माश्रयितुम् ।अवश्य कश्चित स्व कृतान्त आस्थेय:"[2]

---

१- महाभाष्य ४।१।३

२- "स्त्रियाम्" पा०अ० ४।१।३ सूत्रभाष्य

शाब्दिकैभ्यो स्वीकृत सिद्धान्तवर्णने प्रसङ्गात प्रथमम लिङ्गसम्बन्धेन शास्त्रीयदृष्ट्या प्रस्तुत ग्रन्थेषां मतानामुल्लेखमावश्यकम् । यथा वाक्यपदीयकारेण उक्तं लिङ्गस्य सदन्नापाणि-

स्तनकेशादि सम्बन्धो विशिष्टा वा स्तनादय:
तदुपव्यंजना जातिगुणावस्था गुणास्तथा ।।
शब्दोपजनितो धर्मिा शब्दसंस्कार इत्यपि ।
लिङ्गानां लिङ्गतत्वज्ञैर्विकल्पा: सप्तदर्शिता: ।[१]

अत्र स्तनकेशा दि शब्दे पूर्वोक्तं स्तनकेशवतो स्त्री स्यात इति पद संकेत: ।

केषांचित शरीरधारिणाम् प्रजननाङ्ग भाग: लिङ्ग: । प्रजननाङ्गस्य शरीरधारिणा सह नित्य सम्बन्ध: । अयम समवाय सम्बन्धमुक्तम् ।

को पि शरीरी प्रजननाङ्गम विना न भवति अतएव तयोर्नित्य सम्बन्ध: । इदम सम्बन्धमेव लिङ्गम् ।

---

१- वा०प० ३।१३।१-२

लिङ्गस्य सामान्यम् स्वरूपम्-

स्वयं प्रजनाङ्गम् इत्ययम् स्वरूपं वापि प्रचलितम् ।

सामान्यतया प्रजनाङ्गमेव लिङ्गमुक्तम् अथ स्थूलमिति । अत्र अङ्ग अङ्गधारीति उभयोः रूपेणाभाव: ।यथा अङ्गी स्त्रीपुरुषाच लिङ्गम् वक्तुमशक्यं तथैव मात्र प्रजननाङ्गमपि लिङ्गम् न मन्तव्यं ।अङ्गिनासह नित्यसम्बन्धयुतम् प्रजननाङ्गम् लिङ्गम् इति कथनम युक्तम् ।

अत्र अङ्गाङ्गिभावे एकस्याभावे अपरस्य सदा भाव: तदैतन्नित्य सम्बन्धम युक्तमिति ।

लिङ्गस्य पूर्वपरभावे इदं भेदं यत् प्रथमे स्वरूपे नित्य-सम्बन्धमेव लिङ्गम् अपर नित्यसम्बन्धयुतम् लिङ्गमिति च सूक्ष्म स्थूलाङ्ग प्रदर्शनमन्तरंच ।

उभौ लिङ्गस्वरूपौमात्र चेतनार्थे प्रयुक्तौ ।तथा च भाषा क्षेत्रे नदी पर्वतादि अचेतनेष्वपि लिङ्गभावना निर्दिष्टा ।अचेतनेषु प्रत्यक्षे अङ्गाभाव: दृश्यते अतएवात्र अङ्गाङ्गि सम्बन्ध: अयुक्त: ।

यदि लिङ्गस्योभय लक्षणमिति गृह्णामि तदचेतनं अलि-ङ्गमित्यपि संभावना संभाव्यते ।अतएवोक्तम् नान्यलक्षणावश्यकता लिङ्गस्येति ।

वैशेषिकमतेन लिङ्गम् जातिरिति कथितम् ।अधुना जाति शब्द: जातिपङ्क्त(जातिपाति) रित्यर्थे प्रयुक्त: किन्तु शास्त्रदृष्टौ

जातिशब्दः विभिन्नद्रव्यावस्थायाम् व्याप्तमेकम् सामान्यानुगतम् धर्ममिति निगदितम् । जातिधर्माः एकद्रव्येषु स्वाधिकाः भवन्ति यथा जले शीतत्वं तरलत्वं च मनुष्येषु मानुषत्वं वृद्धत्वंच एकद्रव्येषु एकाधिकाजातयः एकेन सह भवितुमर्हन्त्यः अतएव सिद्धमिति ।

सिद्धान्ताधारे मनुजे मनुजत्वं स्त्रीत्वं पुस्त्वं वा दृश्यते अतएव पुस्त्वं स्त्रीत्वं वा जातिरिति । आंग्लभाषायाम् 'सेक्स' शब्दः जातिम प्रकटयति ।जातेर्ज्ञानम् प्रजननाङ्गे न संभवः अतएव प्रजननाङ्गैः नाभिव्यक्ता जातिः लिङ्गमिति कथनम् युक्तम् ।

अन्येनम् दृष्टिकोणे अचेतनं अलिङ्गमित्यत्र लिङ्ग जातिमभिव्यक्तार्थं प्रजननाङ्गानामावश्यकता न वर्तते । येषांच अचेतनेष्वभावः ।

अङ्गेभ्यो लिङ्ग जात्याभिव्यन्जकत्वे स्त्रवेशादि अङ्गानाम लिङ्गजात्यानि व्यंजकत्वं स्त्रीवेशधारी नटादिकार्थे प्रयुक्तः 'भ्रूकुंस' शब्देन टपादि स्त्रीलिङ्ग सम्बन्धि विधानम् प्रवृत्तिः सम्भाव्यः ।

भाष्यकारेण लिङ्गजात्याधारेण शास्त्रीयलिङ्गनिर्णये चत्वारः दोषाः समुपस्थिताः -

यथा-

लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रुकुंसे टाप् प्रसज्यते ।
नत्वं खरकुटीपश्य खट्वा कुशरी न सिद्ध्यति ।।

अचेतनग्रहणे वैशेषिका: कथयन्ति यदेकैव वस्तु: गोघटादयर्थे व्यक्ति: पदार्थवस्तु इत्यर्थे च स्त्रीपुंनपुंसक लिङ्गानीति शब्दप्रयुज्य: तदिति व्यवहारानुमानेन ज्ञायते यत प्रत्येकस्मिन् पदार्थे चेतने चेतने वा त्रिलिङ्ग जात्य: भवन्ति तथा तदभिव्यजित विविध प्रयोगेषु भवति । तत्सिद्धम् अचेतनेष्वपि लिङ्ग जाति: भवति । एवम जातिरेव लिङ्ग-मित्यपिरुक्तम् यथा-

---

१- खरकुटीशब्द: नापितस्य गृहार्थे आपणार्थे वा प्रयुक्त: यत्स्थाने कर्तित नखा: विच्छिन्न केशाधा: स्थिता: ।अत्र नखकेशानां बाहुल्यो वर्तते ।एतदोकुत्य रूपतानुसृत्य वर्द्धित नखकेशजनान् "ब्राह्मणान्" खरकुटीक: इत्युच्यते ।

इवे प्रतिकृतौ (पा० ५।३।९६) सूत्रेण खरकुटीव नखकेशाकृत्ये ब्राह्मण: इत्यर्थे खरकुटीक: इति कन प्रत्ययान्तं स्वरूपं जातम् । पुन: "लुम्मनुष्ये" (पा०अ० ५।३।९८) सूत्रेण कन प्रत्ययस्य लोप: तदा खर-कुटी शब्दं जातम् ।

अत्र ब्राह्मणगतपुंस्त्वमपि व्यंजकलिङ्गदृष्ट्वा खरकुटी शब्द: पुल्लिङ्ग: ।तथा च द्वितीयाया: बहुवचने-तस्माच्छसोन: पुंसि (पा०अ० ६।१।१०३)सूत्रेण नत्व भवति किन्तु वस्तुत: ब्राह्मण वाची खरकुटी शब्द: स्त्रीलिङ्ग एव भवति । खरकुटी इयम अभीष्ट रूप: अतएव नत्वस्य अनिष्टापत्ति: दर्शित: ।

शब्दप्रयोगेन लिङ्गजात्यभिव्यक्तिर्भवति तदा प्रयोगाधीन शब्दस्य लिङ्गनिर्धारणं कथं ?

यदि जात्या लिङ्गमिति कथयामि तदा लिङ्गं जाति शब्दप्रयोगानन्तरमभिव्यक्तं इति ।

यद्यहम् प्रत्येक पदार्थे लिङ्ग जातीनाम अस्तित्वं स्वीकरोमि तदा मया एकस्याभिव्यक्तार्थे अपरस्य अनभिव्यक्तार्थे च किंचित् समुचितं कारणमपि मंतव्य: ।

उदाहरणाय- यद्यहम् पुरुषं व्यक्तिरिति कथयामि तथा तत् पुरुषस्यपदार्थे विद्यमाना अन्तर्भूतत्रिलिङ्ग जातिनाम मध्ये पुंस्त्वनपुंसकत्वादि जाती अनभिव्यक्ता तथा च व्यक्तिशब्द: स्त्री-लिङ्गमिति । अत्र व्यक्ति कथनेन -स्त्रीत्व अभिव्यज्यते अथवा स्त्रीत्त्वमुद्दिश्य व्यक्तिशब्दप्रयोग संभव: ।एष अन्योन्याश्रयोति ।

अन्यपि कारणं यथा यदिलिङ्गजातेरभिव्यक्ति: अनभि-व्यक्तिर्वा गृहीत्वा लिङ्ग व्यवस्था करणीय: तदा प्रजननाङ्गानामभि व्यक्तिरनभिव्यक्तिर्वामत्वा चेतनेषु अचेतनेषुवा अङ्ग सम्बन्धमपि मन्तव्य: ।

पाषाणोति शब्दप्रयोगेन तदनभिव्यक्ताङ्गस्य अभिव्यक्ति-रपि स्वीकर्तव्य: ।

अत: उपरोक्त व्यवधानदृष्ट्या भाष्यकारेण गुणावस्थाम् लिङ्गभेदस्य मुख्यहेतुरिति स्वीकृत: । अवस्थाविशिष्ट गुणैरेव शब्दोपजनित अर्थास्मा तथा शब्दसंस्कारमपि लिङ्गहेतुरिति च ।

अस्मिन् संदर्भे गुणार्थः सत्त्वरजस्तमश्चेति । एते त्रिगुणा वि-सांख्यशास्त्रे प्रसिद्धाश्च । वस्तुमात्रे सतत परिवर्तनशीलावस्थायां विद्यमानाः । एतेषां वर्द्धन अपकर्षत्वं स्थिरत्वं च सदा चलति । एत-देव गुणानां उपचयावस्था अपचयावस्था स्थित्यवस्थेति निगदिताः ।

संग्रहकारव्याडिनोक्तं – अपचयः संस्त्यानः उपचयः प्रसवस्थितिश्च । संभवतया संस्थानप्रसवेति शब्दः वैयाकरणेषु प्रचलितः । एवमेव भाष्यकारेण स्वसिद्धान्तनिरूपयनुक्तम्- संस्त्यान प्रसवौ लिङ्गमास्थेयौ स्वकृतकृन्तातः एतद् सिद्धान्तानुसार सर्वे पदार्थाः संस्त्यान् प्रसव गुणयुक्तास्सन्ति । अर्थात् सत्त्वादि गुणानाम् परिवर्तनम् पदार्थे सतत् प्रक्रिया रूपे भवति ।

सत्त्वादि गुणानमुपचय अपचयावस्था पच्यमान जलसदृशैव[१] भवति ।

माष्यकारः कथयति-

सर्वा च पुनर्मूर्तिरेवात्मिकाः संस्त्यान् प्रसवगुणाः अन्यच्च नेह कश्चित्स्वात्मानिमुहूर्तमप्यवतिष्ठते, वर्धते यावदनेन वर्धितव्यम् अपायेन वायुगते अत्र सर्वमूर्तयः इति कथनेन वृद्धावयवेनेष्वपि लिङ्गभावना गृहणम् । तथा च संपूर्णपदार्थेषु त्रिलिङ्गानामुपस्थितिरपि सिद्धम् ।

---

१- क्वथितोदक वच्चैषामनवस्थित वृत्तिता ।
अजस्रं सर्वभावानां भाष्य एवोप वर्णिता ।।
(वा०प० ३।१३।१६)

अत्र शंकाचेत् यदि सर्वपदार्थेषु लिङ्गानामुपस्थितिः तर्हि उभय लिङ्गशब्दानां कथं नियतिः । तदा कथयन्ति 'विविक्षातो व्यवस्थेति' । तत्तुविवक्षा नियमेन व्यवस्थिता: इति नियमेन एत उत लिङ्गे शब्दस्य साधुत्व स्वीकृतः ।अयमेव शब्दसंस्कारश्च । कोपि शब्दस्य कस्मिन्नर्थे प्रवृत्तिः इति विषये सर्वं तत्वः तन्निमित्तो यच्च यदर्थे यो प्रयुक्तः ।

विभिन्न गुणक्रियादिमध्ये कैचिदेकम निमित्तम् ।मत्वा तत्पूर्णार्थे शब्दप्रवृत्तिः ।शब्दसाधुत्वे एतद् पर्याप्तम् ।यथा तथा शब्दः काष्ठकारार्थे प्रयुक्तः सः काष्ठसंस्कार काष्ठकर्तन काष्ठ-संजनादि कार्यं न् करोति प्रस्तुत कर्त्तव्यतेक्षस्थाने तक्षोति उक्तम् ।

अत्र काष्ठकारस्य विभिन्ना क्रियामध्ये तक्षणं निमित्तम् मत्वा तक्षाशब्दस्य काष्ठकारार्थे प्रयोगः ।एवम लिङ्गस्यापि-स्थितिः । पदार्थेषु त्रिलिङ्गभावनायाम् कोपि एकलिङ्ग प्रकाशक शब्दस्य प्रवृत्तिः निमित्तकारकम् तथा तच्छब्दः तस्मिन्नेव लिङ्गे साधुरिति ।एवम् लिङ्गानुशासने साधुत्व व्यवस्था इति ।

१- स्थितेषु सर्वलिङ्गेषु विवक्षा नियमाश्रयः ।
कस्यचिच्छसंस्कारे व्यापार क्वचिदिष्यते ।। -वा०प०३।१३।१६

२- सन्निधाने निमित्तानां किंचिदेव प्रवर्तकः ।
यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ।।
वा०प०३।१३।२०

लिङ्गभेद:-

संस्कृत भाषायाम् लिङ्गस्य त्रिभेदा: सन्ति ते च स्त्री-पुम्नपुंसकेति । संस्त्यान प्रसव सिद्धान्तानुसारेण यदा पदार्थे सत्वादि गुणेषु केचित् एकस्य द्वयोर्वा संस्त्यान अपचय:वा भवति तदा पदार्थे स्त्रीत्वरूप लिङ्गस्योपस्थितिर्भवति ।यदा सर्वे गुणा: सामान्यावस्थायां भवन्ति तदा उभयोरभावे नपुंसक लिङ्गस्योपस्थिति: भवति ।

शब्दानां लिङ्गानि-

पदार्थेषु लिङ्गानामुपस्थिति: वाचक शब्देभ्यो भवति अत: शब्दा: विभिन्नलिङ्गानामभिव्यक्तार्थे विभिन्न रूपेषु विभिन्ना ध्वनिक्रमान् गृहीत्वा उच्चारितानि श्रुतानि वा भवन्ति । तत्र पदार्थेषु लिङ्गशब्दस्य लिङ्गेत्युच्यते । लिङ्गाभिहित-कर्ता शब्दस्य स्वयं शक्तिर्भवति ।

एषा शक्ति: अर्थाभिव्यंजनशक्त्यानुरूपैव भाति । शब्दे स्वातंत्र्यावस्थितस्य अलौकिका शक्ति: विराजते ।श्रुतोच्चारितशब्दा: नियतेतर भिन्नार्थानांध्वनि क्रमानाच प्रतीतिम निवारयन्ति । अतएव सिंहेति कथनेन सिंहीति व्यावृत्ति: तथा मयूरीति कथनेन मयूरस्य च ।

वाक्यपदीये एतच्छब्दानाम् लिङ्ग व्यावर्तनस्वभावान् उपादानिति कथित: ।टीकाकार हेलराज: उपादानस्यार्थे 'उपादानं

शब्दे विशिष्ट शक्तिभिरर्थोपाधिलीनग्रहणं[1] लिङ्गानाम् इत्युक्तम् ।
अस्यापि प्रकारे यंतत्लिङ्ग: शब्दार्थं न भूत्वा अर्थोपाधिमात्रैव ।
अर्थोपाधिरूपेण शब्देषु वर्तमाना स्वबोध्य लिङ्गेतर लिङ्गव्यावर्त-
नेन शब्देषु लिङ्गस्य सप्तधा[2] विकल्पा: भवन्ति।

नियतानियत्लिङ्गभेदेन लिङ्गानां सप्तविकल्पा: भवन्ति

यथा-

(१) नित्यस्त्रीलिङ्ग: यथा-

सरित,सम्पद,मातृ लक्ष्मी,कन्या भवत्यादया: ।

(२) नित्य पुल्लिङ्ग: यथा-

पुरुष: अर्थ:,भाव:,अन:,समुद्र: वृक्षादिका: ।

(३) नित्यनपुंसक लिङ्गयथा-

धनम्,अस्थि,पयस,धनुष,मित्रम्,कलत्रदिका: ।

एतानि सुनिश्चितानि न परिवर्तनशीला: अतएव नियत लिङ्ग: ।

---

१- उक्त कारिका ३।१३।३ पर हेलाराज टीका

२- उपादान विकल्पाख्य लिङ्गानां सप्तवधिता: ।
विकल्प सन्नियोगाभ्यां ये शब्देषु व्यवस्थिता: ।।
(वा०प० ३।१३।२)

अनियत लिङ्ग: परिवर्तनशील: कदाचित् स्त्रीलिङ्गे कदाचित् पुल्लिङ्गे कदाचित् नपुंसके भवन्ति अतएव अनियतेति कथ्यते। एषा चतुर्धा यथा-

१- स्त्रीपुंसलिङ्ग:यथा-

ब्राह्मण:-ब्राह्मणी, बाल-बाला, रज्जु: अशनि: इत्यादि

२- स्त्रीनपुंसकलिङ्ग यथा-

भेषजम्-भेषजा, पुस्तकम्- पुस्तकी अविरित्यादि

३- पुन्नपुंसक लिङ्ग यथा-

शङ्ख:-शङ्खम्, पङ्क- पङ्कम्, कार्पास कार्पासम् इत्यादि ।

४- स्त्रीपुन्नपुंसक यथा-

तट: तटी तटम्, विभीतक: विभीतकी, विभीतकम् इत्यादि ।

एतद्व्यतिरिक्त शब्दानाम् भेदयपि भवति यो सर्वथा अलिङ्गो यथा- आख्यातव्ययादय: ।आख्यात: तिङन्त क्रियापदान् कथ्यन्ति अत्र क्रियापदेषु लिङ्ग भावना न भवति ।एवम अव्ययादि कारकेषु वचनेषु च अप्रभावित: तथैव लिङ्ग भावनयापि अप्रभावित: भवन्ति । अत: अव्ययो पि अलिङ्ग: । युष्मद, अस्मद, कति एते सर्वनामानपि अलिङ्गे:ति मन्तव्य: । परामृष्टपदार्थीतलिङ्गभावनया अप्रभावित: अतएव अलिङ्गेति ।

पदार्थाः त्रिधा सर्वायाम् योत्यन्ति नाम रूपात्मकंवेति-नाम रूपात्मकं जगत् इत्युक्तिः प्रसिद्धा अत्र रूपात्मा लिङ्गकेवल चेतनेषु यथा कथंचित् लौकिक लिङ्ग स्वरूपं प्रकटयति तथा च नामात्मकं शास्त्रीय लिङ्गं मध्यमा वैखर्यादि शब्देषु स्ववाच्य-लिङ्गेतरव्यावर्तक भूत्वा प्रकटयति । नामात्मा लिङ्ग शब्द निपाठं नात्र मतभेद संभवम् ।

शब्दकल्पद्रुम कोषे लिखितम्-

लिङ्गं क्ली (लिङ्गयते अनेन इति । लिङ्ग + घञ् अभिधानात् क्लीब लिङ्गत्वम्) चिन्हम यथा महाभारते -

येन लिङ्गेन यो देशो युक्तः समुपलक्ष्यते ।
तेनैव नाम्ना तं देशं वाच्या माहुर्मनीषिणः[१] ।।

शेफः इत्यमरः ।अनुमानम् ।सांख्योक्त प्रकृतिः यथा सांख्य कारिकायाम् (तत्र जरामरणकृतं दुःखं प्राप्नोति चेतनः पुरुषः लिङ्गस्याविनिवृत्तेस्तस्माद्दुःखं स्वभावेन ।प्रकृति कार्यं विकृतिश्च यथा तत्रैव । हेतुमदनित्यमव्यापि सक्रियमने कमाश्रितं लिङ्गम् । सावयवं परतंत्र व्यक्तं विपरीतमव्यक्तम् । विशेषस्तु तत्रदृष्टव्यः ।

---

१- शब्दकल्पद्रुम चभाग० पृ० २१७

२- महाभारत १।२।१२

३- सांख्यकारिका ५५

शिवमूर्ति विशेष: इति मेदिनी कोषे (गै० २३) पुंस्त्वादि: इति त्रिकाण्डशेष: (यथा मनु: ५।१३६) एका लिङ्गे गुदे तिस्र-स्त्थैककरेदश उभयो: सप्त दातव्या: मृद: शुद्धिमभीप्सता ।।)

सामर्थ्य यथा- यावत्तायेव धातूनां लिङ्गं रुढिगतं भवेत्
अर्थश्चैवाभिधे यस्तु तावद्भिगुणि विग्रह: ।।

इति तिथ्यादि तत्वे एकादशिकाव्याख्यायां रघुनन्दन: ।

लिङ्गमूले वादिलान्तवर्णयुक्त स्वधिष्ठान नामक षड्दल पद्मस्ति ।यथा मूलाधारे त्रिकोणाख्ये इच्छा ज्ञान क्रियात्मके ।मध्ये स्वयम्भू लिङ्गन्तं कोटि सूर्यसमप्रभम् ।तदाह्ये हेमवर्णाभंवसवर्ण चतुर्दलम् । तदूर्ध्वे ग्निसमप्रख्यं षड्दलं हीरक प्रभम् ।वादिलान्तषड् वर्णेन युक्तंस्वाधिष्ठान संज्ञकं स्व शब्देन परं लिङ्गं स्वाधिष्ठानं ततो विदु: ।इति तन्त्रम् । अस्याधिष्ठातृदेवतादियथा- प्रजन: सर्व भूतानामुपस्थो ध्यात्ममुच्यते अधिभूतं तथा शुक्रं दैवतंच प्रजापति: ।। इति महाभारते अश्वमेधिक पर्वे ।

एकादश सहस्राणि लिङ्गस्य वाति विस्तृतं अन्यान्य-विवरणं पुराणेषु द्रष्टव्यम् ।

हेतु: यथा तर्क कौमुद्याम् लिङ्गज्ञानजन्यं लिङ्गिज्ञान-मनुमिति ज्ञायमानं लिङ्गन्तु कारणं नहि इति भाषा परिच्छेद: ।

सूक्ष्म[१] शरीरं यथा पंचदश्याम् । बुद्धिकर्मेन्द्रियप्राण पंचकैर्मनसा धिया शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते।

धर्मशास्त्रस्य इतिहासस्य ग्रन्थे डा० काणे महोदयः वर्णयन्ति-

लिङ्गशब्दस्य तात्पर्यं प्रतीकं चिन्हं वा भवति । अमूर्त सत्तायाः अव्यक्तस्य वा स्थूलप्रतीकमेव लिङ्गमिति ।

एतद्माध्यमेन अव्यक्त सत्तायाः ध्यानमुक्तम् ।

महाभारतशांतिपर्वस्थ पाशुपत परिच्छेदेषु शिवलिङ्गं प्रतिमहती श्रद्धा प्रदर्शिता: ।

किन्तु पूर्ववर्ती साहित्ये न कोप्युल्लेख: ।

पुराणेषुविशेषतया शिव व लिङ्ग पुराणे लिङ्गं रचना पालन संहारस्य प्रतीकं मत्वा श्रद्धाभावेन पूजादि स्वरूपं निरूपित: ।

स्कन्दपुराणे प्येवमुक्तम् । ऋग्वेदे शिश्नदेव शब्दस्य प्रयोगं भवति किन्तु न शिश्नं लिङ्गमिति । लिङ्गम् ज्योतिप्रकाशस्य वा प्रतीकमस्ति ।

---

१- पंचदशी १।२३।

लिङ्गपूजा विषये पुरातत्वविदानाम कथनमिदं यत् लिङ्गपूजा विशेषतया ईशातः पूर्वकाले सम्पूर्ण जगदि व्यापक भावेन प्रचलितयासीत् । तत्काले अवान्तर भेदेन निखिल संसारस्य मूर्ति पूजकाः लिङ्गपूजनं अकुर्वन् । मिश्रयूनान बाबुल असुरदेश (अमेरिका इटली- फ्रांस अमेरिका- अफ्रीकामलेशियादि द्वीपेषु लिङ्गः पूजा अभवन् ।

मक्कामस्जिदे वर्तमाने पि एक पाषाणखण्ड लिङ्गं वर्तते । मुसल्यात्रिणः यं चुम्बयन्ति ।

एषः स्वयं मुहम्मदसाहबस्य हस्तेन स्थापितं वर्तते । हिन्दु देशे भारते आदिकालतः शिवपूजा लिङ्गपूजा च भाति ।

लिङ्गपूजा शिश्नपूजा न भवति यथा जना अवबुध्यन्ते । हिन्दूधर्मे शिश्नोदर परायणजनम हेयम् मन्यन्ते ।

ऋग्वेदे शिश्नदेवः घृणितार्थे प्रयुक्तः ।

वस्तुतस्तु लिङ्ग प्रतीकमात्रं । एषः निश्चलं स्थिरं दृढ-ज्ञानस्कन्धस्य प्रतीकम् ।

भारतवर्षे बहुलिङ्गानां स्थापनाजातः तेषु विशिष्टानि द्वादश ज्योतिर्लिङ्गानि ।

भगवान शिव स्यजनन्योपासका भक्ता वा वीरमहेश्वर: वीरशैव: वा उच्यते ये लिङ्गायता: अपि प्रसिद्धा: । अस्य संप्रदाय स्योत्पत्ति: कर्णाटकस्य समुद्र तटे महाराष्ट्रदेशे च द्वादशशताब्दि मध्ये भवत् ।

श्रीमद्देवीभागवतपुराणे लिङ्गवर्णने प्रसङ्गे लिखितम् यथा-

लिङ्गानि सर्वजीवानां स्वशरीरे निवेश्य च[1] अपिच "यस्मिन्सर्वे लिङ्गदेहा ओतप्रोता व्यवस्थिता"[2] अत्र जीवसङ्केत: प्रतीके लिङ्गशब्द: प्रयुक्त: ।

सप्तमस्कंधे लिखितम् यत्-

सर्वस्वधा चित्संवित परब्रह्मैक नाम्नी तदात्म स्वरूपिणी स्वत: सिद्धा शक्ति: (माया) सगुण निर्गुणस्वरूपे स्वैव भाति[3] ।

एषा न सती न असती अपरात्मकस्वरूपमपिकल्पितं न तु सत्यं ।

केचिद् इमम् तम: केचित्ज्ञानं केचित्माया केचन्प्रधानं प्रकृत्यादि रूपे मन्यन्ते एषा अजा शक्तिरेव प्रकाशभूत्वा चैतन्यं प्रतिपादयति अत: चैतनैत्युक्ता ।

१- श्रीमद्देवीभागवत पु० ३।४।५४
२- ,, ७।३२।२-३२
३- ,, ७।३।५

तथा प्रकाश तिरोभावी अज्ञानान्धकारिणो जडा उक्त T ।

एवं उभयो मध्ये उभयात्मिका अन्या पि भाति ।

दृश्य,अदृश्य,दृश्यादृश्य एतत्त्रयावस्था जागृत्स्वप्न सुषुप्त्येति संज्ञाभिधा ।परस्परविरोध गुणप्रदर्शिनी एतत्त्रयावस्था व्यभिचार भावं स्वीकृता ।

अनुभूतौ(१)दृश्य जगत् ज्ञानमयं सुखरूपं भाषयति।

(२) अदृश्य जगत् दु:खमयं जडं प्रतीयते ।

(३) उभयात्मकं दृश्यादृश्य जगत सुखदु:खदं भवति ।

अत्र येन हेतुना बोधो अबोधो वा भवति तद् एकमेव । दृश्यादि भेदा: तत्संयोग वियोगस्य प्रतीकमेव च ।

एतत्त्रयावस्था त्रिगुणात्मिका अन्वय व्यतिरेकि केवलान्वय केवलव्यतिरेकि भेदेन पंचतन्मात्रादि प्रपंचानाम् निर्माणे कारणंचापि वर्तते । तथैवा सर्वात्मकमात्माया: सूक्ष्मकारणदेहश्चापि ।

एतेन प्रतीकेन लिङ्गेन वा जात बिन्दुरूपेण आविर्भूता पंचीकरण मार्गेण स्थूल भूतोपरिवर्तयति ।

शक्त्या तेनैकमेव समष्टौ बिम्बरूपे ईश्वरसंज्ञाभिहित: । व्यष्टौ जीव संज्ञक: सुखदु:खमय: भाषयति ।

जीवेश्वरौ उभौ स्थूलसूक्ष्मकारण इति एतत्त्रय शरीरस्वत्वात् प्रकटयन्ति ।

१- समष्टिरूपे कारणशरीर स्वत्वाधिकारी ईश्वर:

२- सूक्ष्मदेहाभिमानी 'सूत्रात्मा'

३- स्थूल देहाभिमानी 'विराट' इति संज्ञा भवति ।

अविद्योपाधित प्रतिबिम्ब जीवोपाधिर्यथा-

१- कारणाभिमानी प्राज्ञ:

२- सूक्ष्माभिमानी तैजस:

३- स्थूलाभिमानी विश्व: इति

एतत्त्रयोपाधे: अनुकूलमेव लिङ्गं प्रतीकं वा पि[1] १- स्वयंभू, २- परम ३- बाणेति उपाधि भेदेन अभिव्यक्तम् कालान्तरे समष्टिव्यष्टिगत भावेन लिङ्गानाम प्रतीकानाम् वा शत सहस्त्र कोट्यादि लिंङ्गानं बहव:, नाम कल्पनाकृता: समष्टिगतभावे कारणदेहाभिमानी ईश: एव प्रतीक देवे महेशाख्य: अन्तर्भूताशक्तिरेव शिवा उभौ अभिन्नेव स्वयं भूलिङ्गं एवम सूक्ष्म-देहाभिमानी सूत्रात्मा लक्ष्मी विष्णोर्प्रतीकम् परमलिङ्गम् ।

स्थूल देहाभिमान प्रतीकार्थे ज्ञातारस्तो युग्मेव बाणलिङ्गे-त्युक्तम् ।

---

१- श्रीमद्देवीभागवत पु० ७।३१।३२-३३

शिवपुराणे शिवस्य सकल निष्कल स्वरूप वर्णने उक्तम्-

एकमात्र शिवस्व ब्रह्म भूतत्वात् निष्कलेत्युक्त: । तच्च स्वरूपी भूतत्वात् सकलोऽप्युक्त: ।[1]

शिवस्य निष्कलत्वात् तत्पूजाधारभूत लिङ्गमपि निराकारम् । तात्पर्यमिदम् यत शिवस्य निराकार स्वरूपस्य प्रतीकं लिङ्गमिति ।

लिङ्गं साक्षात्ब्रह्म प्रतीकं वर्तते । इति ।[2]

शिवलिङ्गंबिन्दुनाद स्वरूपम् अतएव तज्जात्कारमित्युक्तं बिन्दु देवी नाद शिवं उभयोर्संयोगम् शिवलिङ्गमिति । अत्र भर्ग शिव: पुरुष रूप भर्गं शिवप्रकृतिरूपा च भवति ।

अव्यक्तान्तरिकाधिष्ठानरूपगर्भम् पुरुमिति तथा - सुव्यक्तान्तरिकाधिष्ठानभूतगर्भम् प्रकृतिरित्युच्यते । पुरुष: आदिगर्भ: स च प्रकृतिरूप गर्भेण युक्त: अतएव गर्भवानित्युक्त: । तदेव प्रकृते निकटस्थे प्रकृतौ यो पुरुषसंयोग: तदेवप्रकृतेप्रथमजन्म । अव्यक्त प्रकृत्या महदादिनाम क्रमप्रकाश: द्वितीयो जन्म: । इति ।

---

१- शिव पु० अ० ५ से ८

२- शिव पु० अ० १६

पातंजलि योगसूत्रे पि लिखितम्-

यदा प्रकृत्या सह चेतनसंयोग: भवति तदा महदोत्पत्तिजायते। इयम प्रकृतेप्रथमकार्यम्। एतस्योपलब्धि: सत्ता मात्रेण भवति। अतएव एतल्लिङ्गमात्रकम् निगदितम् इति[1]।

लिङ्गपुराणे-

लिङ्ग शब्दस्य विस्तृतवर्णनमुपलब्धम् तदनुसार लिङ्गस्य मूलकारणमव्यक्त प्रकृतिमेव लिङ्ग संज्ञया उक्ता।

अलिङ्ग शिवनाम्ना तथा लिङ्गम शिवाशैव सम्बोधनेन वा उक्तम्।

गन्धवर्णरसहीनम् शब्दस्पर्शादिति उक्तं लिङ्गम् प्रधान-प्रकृतोत्युच्यते शिवलक्षणारोपितम् अलिङ्गम् निर्गुणध्रुवमक्षयन्चेति।

जानीहि महभूतानि निखिलं स्थूलसूक्ष्मलिङ्ग विग्रहाणि अलिङ्गस्य अन्वय व्यतिरेक सम्बन्धेन स्वयमेव जातानि।

सप्तअष्ट एकादश भेदेन एते षटविंशति तत्वोपस्थित लिङ्गानि तदलिङ्गस्य मायया विवृतो भवन्।

---

१- पातंजलि योगसूत्र, रणधीरप्रकाशन, हरिद्वार

एतदुभयोसंयोगेन विश्वोत्पत्तिरजायत। एकेन परिरक्षितम् तथैकेन संहृतम् जातम्।

एतदस्य अलिङ्गं लिङ्गम् लिङ्गालिङ्गमित्येतत्त्रयो मूर्तयः सन्ति।एतन्मूर्त्यः ब्रह्म विष्णु महेशाख्याश्च। ईशः अलिङ्गी बीजो च ब्रह्माबीजम तद्वर्ता विष्णुः योनिरित्युक्तम्।

तदेव कारणं शून्यं जात्बीजम् कारणं वा उक्तम् शैवी प्रकृतिरेव विश्वधात्री अजा नाम्ना प्रसिद्धा एषा आत्म अजा लोहित शुक्ल कृष्णा सत्वरजतमोगुणात्मिका।एकैव बहवो प्रकनाम रचना-कर्त्रा भवति।

एषैव परमेश्वराणाधिष्ठितानन्त ब्रह्माण्डानाम् उत्पादयित्री भवति[1]।

स्कन्दपुराणे पि इत्याशय: प्रकाशित: यथा-

लिङ्गरूपो विश्वरूप: प्रादुर्भूत:सदाशिवात्।
शिवा रूपो जगद्योनि: कार्यकार रूपिणी[2]।।

योगे नाडीतत्त्वदृष्टौ-

इडा पिङ्गला सुषुम्नाया: नाड्या:एव सृष्टेर्गति चेष्टायाम् हेतु: वर्तते।

---

१- लिङ्गपुराण अ० २ वरेलीप्रकाशन

२- स्कन्दपु० माहे०खं० १०।२४

एतन्नाडीनाम परस्पर संयोगेन इच्छा ज्ञान, क्रियात्मिका शक्तय: आविर्भवन्ति ।

नाडी मध्ये त्रय: बिन्दव: संति तन्मध्ये पराशक्ति: सुप्त-सर्पिणीव भाति सैव स्वयं भू लिङ्गेति कथिता : यंत्रसंरचनायामेषा त्रिकोणस्य बिन्दुना प्रदर्शिता ।शक्तिकारणेन एषा शब्दसर्गस्य प्रथम चक्रेति[१] योगे इयम मूलाधार चक्रस्वरुपे वर्णिता ।उपनिषदि ब्रह्मचक्रमपि उक्तम् ।

त्रिविमर्शरूपस्य फूत्कारवायो: उद्भवलयपुनरुद्भवादि क्रमेण एषा यंत्रे षट्कोणेन प्रदर्शिता ।तथा परम लिङ्गेति निगदिता । एष सर्गस्य द्वितीयो चक्र: स्वाधिष्ठानेत्युक्त: ।

पुनश्च तृतीयचतुर्थ स्थानगता वायुत क्रमश: मणिपूरक अनाहत नामाभिधा बाणलिङ्गेत्युक्ता इत्यादि ।

अत्र शिवशक्तिसंयोग एव प्रतीकात्मक भावे विभिन्न वरिवादिरुपे च लिङ्ग नाम्ना प्रदर्शितम् ।पुराणमते योगमते च प्राय: साम्यम् वर्ती ।लिङ्गपुराणे एतदाशय प्रकाशनार्थ लिखितम् यथा-

---

१- प्रथमं ब्रह्मचक्रं स्यात् त्रिरावृत्तं भगा कृति ।
—योगराजोपनिषद् मं० ५

सा भगाख्या जगद्धात्री लिङ्गमूर्तेस्त्रिवेदिका ।

लिङ्गस्तु भगवानद्वाभ्यां जगत्सृष्टि द्विजोत्तम ।

लिङ्गमूर्तिःशिवो ज्योतिः तमसश्चोपरि स्थितः ।

लिङ्गवेदि समायोगादर्धनारीश्वरो भवत्[1] ।।

अपि च-

निष्कलं सूक्ष्ममव्यक्तं सकलं च महेश्वरम् ।

सर्गप्रतिष्ठासंहार लीलार्थं लिङ्गरूपिणम् ।।[2]

प्रधानं लिङ्गमाख्यातं लिङ्गीच परमेश्वरम् ।।

स्कान्देप्येवं यथा-

लिङ्गरूपो स भगवान्निगमः सत्कारणादभूत ।

एकाश्रिता पराशक्तिः बुविधात्म लक्षणा ।

लीयन्ते विलीयन्ते महेशेलिङ्गरूपिणौ[3] इत्यादि

न्यायदृष्टौ लिङ्गस्वरूपः-

तर्कभाषाख्य ग्रन्थे लिङ्गस्वरूप निरूपणे लिखितम्-व्याप्तिबलेनार्थगमकं लिङ्गम् । यथा धूमो ग्नेर्लिङ्गम् । तथाहि

---

१- लिङ्गपु० ९२। ६-७ बरेली प्रकाशन

२- लिङ्ग पु० १।१७।८९-९०

३- स्कन्दपुराण मा०ख० १०।२५

यत्र धूमस्तत्राग्निरिति साहचर्ये नियमो व्याप्तिः। तस्यां गृहीतायामेव व्याप्यो धूमोऽग्निं गमयति। अतो व्याप्तिबलेनाऽग्न्यनुमापकत्वाद् धूमोऽग्ने लिङ्गम्[1]।

पाणिनीय व्याकरणे चापि हेतु हेतुमद्भाव इत्यादि सूत्रान्तर्गत उदाहरणे लिङ्गेन लिङ्गी अनुमीयते इति प्रयोगेन लिङ्गशब्दं चिन्हार्थे प्रयुक्तमिति।

महाभारते पि इत्याशयं प्रदर्शितम् यथा-

येन लिङ्गेन यो देशो युक्तं समुपलक्ष्यते।
तेनैव नाम्ना तद्देशं वाच्या माहुर्मनीषिणः[2]॥

तंत्र दृष्टे लिङ्ग वर्णनम्-

अनुभवसूत्रस्य ग्रन्थे लिखितम्-

शिव एव स्वयं लिङ्गमिति लिङ्गस्य वैभवम्।
नान्य चिन्हादिकं लिङ्गं तत्सर्वं कृत्रकं च यत्।
लीयते गम्यते यत्र येन सर्वं चराचरम्।
तदेल्लिङ्गमित्युक्तं लिङ्ग तत्त्व परायणैः[3]॥

---

१- तर्कभाषा पृष्ठ ७२ अनुमानलक्षण

२- महाभारत १।२।१२

३- तंत्रसंग्रहान्तर्गतानुभवसूत्रे तु०अ० २-१४

सर्वदेहिनाम् व्यागत्यर्थयोर्हेतु भूतत्वात् सकल निष्कल: साक्षात्शिव: लिङ्गम् इत्युक्त: ।

एतल्लिङ्गम् त्रिविधम्- प्रथमं भावलिङ्गम् ।
द्वितीयं प्राण लिङ्गम्
तृतीयं इष्ट लिङ्गम्

१- भावलिङ्गं तु निष्कलं भावग्राह्यं परात्परं सन्मात्रं वर्तते ।

२- प्राण लिङ्गं तु सकल निष्कलं मनोग्राह्यं प्राणोऽन्तर्मनसो लिङ्गमिति श्रुति ।

३- इष्टलिङ्गं तु सकलं महत् दृक्कलाग्राह्य वर्तते आथर्वणी श्रुति: कथयति इष्टमर्थं स्वभक्तानामनुयच्छति सर्वदा तदिष्ट लिङ्गमिति ।

भावलिङ्गं सद्रूपं प्राणलिङ्गं चिद्रूपं इष्टलिङ्गं आनन्दरूपं वर्तते ।

वस्तुतो भावलिङ्गस्य स्वमध्ये प्राणलिङ्गस्य तथा तदर्थे इष्टलिङ्गस्य प्रयोगो भवति ।

भावलिङ्गं परतत्वस्वरूपं तथा सूक्ष्म तत्वार्थं प्राणलिङ्गं स्वम् स्थूलार्थं इष्टलिङ्गम् उक्तम् ।

स्थूलतत्वं बाह्य प्रधानं सूक्ष्मतत्वं आभ्यन्तर प्रधानं तथा परम तत्व बाह्याभ्यन्तरोभयप्रधानं वर्तते ।

देहप्राण आत्मारूपेण क्रमशः एतयोः क्रियामंत्रादि प्रयोगे उपयोगः । एतल्लिङ्गानि क्रमशः बिन्दु नाद कला रूपे पि वर्णितानि ।

प्रत्येकं लिङ्गं क्रमशः द्विभागयोर्विभक्तो यथा-

१- भावलिङ्गं = १- महालिङ्गम्
२- प्रसाद लिङ्गम् ।

२- प्राणलिङ्गं - १- चर लिङ्गं
२- शिव लिङ्गं ।

३- इष्ट लिङ्गं - गुरु लिङ्गम्
आचार लिङ्गम् ।

एवम् लिङ्ग भेदः षडविधः ।

षडलिङ्गस्थलसमाहिता शक्तयश्चापि स्वातंत्र्य लीलया स्वशक्तिवैभवाच्च षडविधा प्रोक्ता - ते यथा-

१- शान्त्यतीतोत्तरा - चिशक्तिः
२- शान्त्यातीता पराशक्तिः।
३- शान्तिः आदिशक्तिः
४- विद्या इच्छा शक्तिः
५- प्रतिष्ठा ज्ञानशक्तिः
६- निवृत्ति क्रियाशक्तिः

एवम् लिङ्गस्था चिच्छक्तिः पराशक्तिः आदिशक्तिः इच्छा शक्तिः ज्ञानशक्तिः क्रियाशक्तिश्च एताः षट् शक्तयः भवन्ति । अधुना एषां षण्णाम् पृथक्पृथक् शक्तियुक्तानां लिङ्गस्थलानां स्वरूप लक्षणं वर्णयामि ।

१- महालिङ्गम् चिच्छक्ति स्फुरणरूपं परिपूर्णं आद्यन्तशून्यं अमलं सूक्ष्मं परात्परं अनामयं अप्रमेयं भावग्राह्यं जाड्य-हीनशिवतत्त्वस्वरूपं अनुभूतं ज्ञेयम् ।

२- प्रसादलिङ्गम् -उपाधिहीनं,परया स्वशक्त्या सादाख्य तत्त्वमुदितं ज्योतिर्मयं अखण्डं अतीन्द्रियं परिणामबीजम् ज्ञानोपलब्धममृतमिति ।

३- चरलिङ्गम् बाह्यान्तरभेदेन अमूर्तं अक्षरतः परार्थ्यं स्वात्मादिशक्तिघटितं नित्यं मनसा बोध्यं वर्ते ।

४- शिवलिङ्गम् -स्व इच्छा शक्तिपरिष्टम्भितमूर्ति तत्त्वं अहंकृतिपदं चिद्वपुप्रपटमेकमुखं प्रशान्तम् विभा कला ललितरूप सुशोभनमिति ।

५- गुरु लिङ्गं स्वज्ञान शक्ति विमर्शोत्थित वस्तुतत्त्वं । सर्वोपदेशविधिनत्र कृत प्रतिष्ठम् ।तेजोनिधिं परमपार सुखाम्बुराशिं बुद्धैः पदं विनिहितं गुरु लिङ्गमाहुः ।

६- आचार लिङ्गं यथा- कर्मात्मना सकलत्यभिवादहेतो

राधारभूतमचलं क्रियया स्वशक्त्या ।

विधेन धार्यमविरुद्धनिवृत्ति मार्गं

ह्याचार लिङ्गमिति वेद विदोवदन्ति ।

एवम षड्विधानां महालिङ्गस्थलादीनां लक्षणं परि-कीर्तितम्[१] ।

एव निजशक्त्या शिव एव महालिङ्गस्थल( विश्वोद्भव-लयादिक: अभूत् । तदुपासकरूपत्वादैक्यस्थलं महत् अभवत । तदा महालिङ्गस्थले पराशक्ते स्फुरणात् प्रसाद लिङ्गम् जातम् ।

पुनश्च आदिशक्ते: प्रभावात चर लिङ्गं समुत्पन्नम् पुनश्च इच्छा शक्ति प्रभावेन ज्योतिर्मयं शिवलिङ्गं जातम् ।

पुन: ज्ञान शक्तिप्रभावेन कारणरूपं गुरु लिङ्गं समुत्पन्नम् ।

पुनश्च क्रियाशक्तिप्रभावेन आचार लिङ्गम् जातम्[२] ।

एतल्लिङ्गानाम् प्रवृत्ति: सृष्टिमार्गत: भवति ।

---

१- सं०ग्र०प्र०मा०अनुभवसूत्र पृ०सं० २७-३३

२- तदैव २५-४५

स्कन्दपुराणे माहेश्वरखण्डेऽप्येवम् भाव प्रदर्शितम् यथा-

लिङ्गरूपो विश्वरूप: प्रादुर्भूत: सदाशिवात् ।
शिवारूपा जगद्योनि: कार्यकारण रूपिणी ।।
लिङ्गरूपो समभवान निमग्न तत्कारणादभूत्
स्वाश्रिता परा शक्ति: कृतविश्वात्म लक्षणा ।।

लीयन्ते विलीयन्ते यहे लिङ्ग रूपिणी[1] ।

अन्यच्चापि-

उद्भाति स्थितिमाप्नोति तथा विलयमेति च ।
तल्लिङ्गं लिङ्गमित्याहु: लयनात्तत्वविदमा: ।[2]

तस्माल्लिङ्गे च्यामाबकृतिं विश्वरूपिणीम् ।
पृथक्स्थिताग्रनो ज्ञानलिङ्गं प्रकृतिमेव च ।।
ददर्शविमलं लिङ्गं प्रकृतिस्थं स्वभावत: ।
आत्मानं गणै सार्धं तथैव च जगत्त्रयम्
लीनं लिङ्गे समस्त तदेवनेशान वानपि ।

तदाददर्श तत्रैव लोकसंहारकारकम् ।
ब्रह्माणं चैव रुद्रं च विष्णुं चैव सदाशिवम् ।
ददर्श प्रेत तुल्यानि लिङ्गाशक्त्यात्मकानि च ।
ब्रह्माण्डानि लिङ्गान्येव कोटिश: परमाणुवत् ।

---

१- स्क०पु० मा०ख० १०।२४-२५ दिल्लीप्रकाशन
२- स्कन्द पु० प्रथम केदारखण्ड ७।२४

लीयते निलीयन्ते यतो लिङ्गमपि च ।
प्रकृत्यान्तर्गतं लिङ्गं लिंगस्यान्तर्गता च सा ।
शक्त्या लिङ्गं च संव्याप्तं ब्रह्माण्डमदृश्यत
लिंगेन शक्तिः संछन्ना परस्परमवर्तिनी ।
शिवाभ्यां संश्रितं लोकं जगदेतच्चराचरम् ।।[1]

नैमिषे लिङ्गधारिण्याविर्भावः

ब्रह्मपुच्छेण निर्गताभ्यां[2] जगतः प्रलयोदयौ भवतः । तद्-ब्रह्म शक्त्याधारतया स्थितम् । एषा शक्तिरेव निखिलविश्वानामुद्भव-स्थित्यन्तकारिणी भवति । तस्यामेव जगदवस्थितं तथा एव उत्पत्ति पालनंच ।

शक्त्याश्रितं ब्रह्म एव संसारे भाति । पुराणेषु यस्मिन्निदं यतश्चेदं येनेदं यदिदं स्मृतम्' इत्यादि वाक्येषु तथा च 'ब्रह्मलीनं जगत् सर्वं गुह्यलीनं प्रजाजनम् ।

---

१- स्क०पु०वैष्णवखण्ड १०। ३८-३९
२- वायुपुराण १०४। ३३-३४

निष्कलमद्वितीयं शक्तिगुणादिगोपितम् । इत्यागमवचनेष्वपि निरूपितम्[१] ।

अत अलिङ्गिनोऽस्य लोकालोकप्रकाशनाय लिङ्गमित्युक्तम्[२] । तल्लिङ्गधारिणी शक्तिः लिङ्गधारिणीति । सा शक्तिः नैमिषे आविर्भवति उक्तंचापि-

"नैमिषे महास्थाने देवी सा लिङ्गधारिणी"[३] अपि च "देवी वै नैमिषारण्ये प्रोक्ता सा लिङ्गधारिणी"[४]

मत्स्यपुराणे[५] कूर्मपुराणे[६] चापि इत्येवम् ।

पुराणेषु यद्यपि लिङ्गधारिण्यास्तिमावि विषयः स्पष्टं न निरूपितम् तथापि नैमिषनाम कारणस्य प्रसङ्गे अग्रे तद्वर्णनम् भविष्यति ।

---

१- तंत्रसंग्रह च०भा०पृ०त०तु०प०श्लोक ११२-११३

२- वायुपुराण ४।२६

३- श्रीमद्देवीभा०पु० ७।३०।५५

४- श्रीमद्देवीभा०पु० ७।३८।२०

५- मत्स्य पु० १३।२६-५६

६- कूर्मपुराण पू०वि० ११।१८०

स्पन्दकारिकाख्यागम ग्रन्थे कृमण: शिवस्य निमिषोन्मेषेण[1] शक्तिचक्रस्य विभवप्रभवौ तथा जगत: प्रलयोदयौ चापि प्रदर्शितौ। वायु पुराणे पि क्रमेण उन्मेषनिमेषाभ्यां शक्तिज्ञानक्रियात्मक विभव-प्रभवाभ्यां सृष्टिचक्रस्य कालचक्रस्य वा प्रलयोदयात्मकम् कार्यम् निरूपितम्।

तदं तद् निमिषोन्मेष द्योतक: विन्दु विशेष: इच्छाशक्ति: यया प्रलयोदय प्रधानभूतम् सृष्टिचक्रम् शक्तिचक्रम् वा प्रवहति। लोके शक्तिगुणादि गोपितम् वृ‍त्तं वा भाति। अत स्वोक्तम् श्रुतौ प्रजा-पतिश्चरति गर्भे अन्तरजायमान: बहुधा विजायते " इत्यादि विश्व-प्रकाशकं ब्रह्म एव लिङ्गम् तस्य धारिणी शक्ति: लिङ्गधारिणी तथा च शक्तिरपि निमिषोन्मेषेण आविर्भवति तिरोभवति च। तथा एषा आविर्भाव तिरोभाव प्रकाशकं नैमिषमिति। तेनोक्तं नैमिषे लिङ्गधारिणी।

तन्त्रसारस्य ग्रन्थे पि लिखितम्-

एका स्पन्दशक्ति: परमेश्वरी स्व स्वातंत्र्येण इच्छा ज्ञान क्रिया व्यपदेशं धारयति। एते व्यपदेशा: उन्मेषागत मायाशक्ते: सामर्थ्येनैव भवन्ति[2]।

---

१- यस्योन्मेष निमेषाभ्यां जगत: प्रलयोदयौ।
तं शक्तिचक्रविभवप्रभवं शंकरं स्तुम:। (स्पन्दकारिका सूत्र १)

२- तंत्रसार १-१६०

संकल्पात्मक मात्रगति प्रदर्शनातिरिक्तं न किंचिद्निमित्तो-न्वेषणः। एषा संकल्पात्मक गतिः शैवशास्त्रेषु शक्ति शब्देनोति निरूपिताम्। एषा शक्तिः शिवस्य स्वभावरूपानित्यधर्मिणी।

शिवपुराणे उक्तम्-

यावदिदं जात विन्दुनादमयम् वर्तते। विन्दुः शक्तिः नादः शिवः एवम् शिवाशिवमयमिदं जगज्जायते। नादः विन्दोः तथा विन्दुः जगदाधारः। अतः आधारे एव आधेयस्य समावेशः लयः वा भवति।

सृष्ट्यादौ एतत्सकलो करणस्थितिरेव कारणं भवति।

शिवलिङ्गः विन्दुनादस्वरूपो तदैव जगत्कारणमपि।
विन्दुःदेवी शिवोनादः उभयोर्योगमेव शिवलिङ्गम् इत्युच्यते।

भर्गं पुरुषः प्रकृतिः भर्गा च। अव्यक्तान्तरिक अधिष्ठान-रूपाभर्ग् पुरुषम्। तथा सुव्यक्त आन्तरिक अधिष्ठानभूताभर्ग् प्रकृतिरिति। पुरुषः आदिगर्भः तद् प्रकृति रूपाभर्गेण युक्तः अतएव गर्भवानिति।

प्रकृतौ यो पुरुषसंयोगः तदैव प्रकृते प्रथमं जन्म। यद् अव्यक्त प्रकृत्या महदादि क्रमेण जादाविभावं कार्यम् तद्वितीयम् जन्म। इति। अत्र महादिविलिङ्गमतम् धारिणी लिङ्गधारिणीति च।[1]

---

१- शिवपुराण अ० १६

ब्रह्माण्ड पुराणे लिखितम्-

निर्गुणंब्रह्म स्वभूतात्म अव्यक्ता प्रकृतिभावे ब्रह्मयोनिरिति कथ्यते ।[1]

यो ब्रह्म परम ब्रज्ञेयं अप्रतर्क्यम् उक्तम् तदयम् पुरुष भावे- सदसदात्मकं त्रिगुणप्रभवम् जातम् ।

श्रुत्युक्तितापि 'अजामेकां लोहितशुक्लकृष्णां': इत्यादि । सा ब्रह्मात्मिका शक्ति: आदौप्रलयकाले अव्यक्तभावे निखिल प्रपंच बीजान गृहीत्वा समष्टिभावे स्थिता ।

---

1- गन्धरूपरसैर्हीनं शब्दस्पर्श विवर्जितम्

कारणं निम्महाभूतं परब्रह्म सनातनम् ।

विग्रहं सर्वभूतानाम व्यक्तमवस्थित ।

अनाद्यन्तमजं सूक्ष्मं त्रिगुणप्रभवाप्ययम् ।

अप्रतर्क्यमविज्ञेयं ब्रह्म यदसदसत्परम् ।।

तस्यात्मना सर्वमिदं व्याप्तमासीत्तमोमयम् ।

गुणसाम्ये तदा तस्मिन्नविभागे तमोमयम् ।

सत्वोद्रेको महानग्रे सत्वमात्र प्रकाशक: ।

सत्वान्महात विज्ञेय स्कस्तत्कारण: स्मृत: ।

लिङ्गमात्र समुत्पन्नं क्षेत्रज्ञाधिष्ठितं महत् ।

संकल्पो व्यवसायश्चतस्य वृत्तिद्वयं स्मृतम् ।

महासृष्टिं च कुरुते चोद्यमान: सिसृक्षया ।।

-ब्रह्माण्ड पु० पूर्वप्र०पा० ३।६-१६)

प्रधानक्षेत्रज्ञाधिष्ठिता एषा प्रकृतिः गुणभावद्भासमाना सर्गकाले महद्रूपे संजाता ।

अव्यक्तावृता एष महत् संसारस्य सूक्ष्मकारणमिति । महत्त्वेन एकं लघुप्रकाशकं सत्त्वं ज्योति भावे आविर्भूतम् कार्यभावे तद् महद् स्थूलसृष्टिकारणं सृजम् तथा च ज्ञेयभावे क्षेत्राधिष्ठित लिङ्ग-मात्रम् प्रथमम् स्वीकृतम् । अयमेव विश्वनिर्माणयोजनायाः प्रथमम् चरणम् वर्तते पुनरग्रे महद्योजनानुसार एव विश्वरचनादि स्वयंभू व्यवस्था अदृश्येच्छया एव भवति ।

अत्र योजना संकल्पादि विषयाः निमित्तान्वेषण भूमौ क्षेत्रे वा संभाव्यः अतएव नैमित्त क्षेत्राधिष्ठिता शक्तिः लिङ्ग-धारिणीति पुराणेषु निरूपिता । तदुक्तम् नैमित्ते लिङ्गधारिणीति । परमेश्वरस्य अभिन्ना शक्तिः विश्वोन्मुखी प्रथमेच्छा रूपे सैव उत्तरोत्तर प्रसूवन् ज्ञान क्रिया रूपे आविर्भवति ।

ज्ञानशक्तिः वर्णमन्त्रपदेति तथा च क्रियाशक्तिः कलातत्त्व भुवनेति त्रिसृषु रूपेषु प्रसृत्य बाह्य विश्वम् धारयति ।

प्रथम त्रिसृषुरूपेषु वाचक विश्वस्य तथा पररूपेषु वाच्य विश्वस्य विकासः भवति ।

यदा परमेश्वर संकल्पे विश्ववैचित्र्यं भावे विशुद्ध चिन्मात्रा-वस्थितिः उन्मुखी भवति तदेयमवस्था उन्मेष कौतिका ।

अस्मिन्नवस्थायां इदं भाव: प्रमेयभावो वा अहमिति चिन्मात्र प्रमातरि भवति ।

शैव शब्दावस्थायाम् एषा शक्तिपात: अनुग्रहो वा कथ्यते । यदा परमेश्वर संकल्प: आदानन्त भेद वैचित्र्यं प्रति उन्मुखति प्रसरति वा तदा निमेषावस्था ज्ञेय: । अस्मिन्नवस्थायां चिन्मात्रप्रमातरि अभिन्ना प्रमेयता पूर्वोक्त मायाशक्तिप्रभावेण विभज्य विकासं गच्छति । शैव शब्देषु एषा तिरोधानेति कथित: । अन्तर्मुखवहिर्मुखस्पन्दित्वेनो निगतो ।

उभयरूपे स्वतंत्रवृत्तौ ज्ञातत्वे कर्तृत्वे च न किमपि परिवर्तनम् । प्रत्यवेक्षयौ जायेव भवति न तु संविदो ।

प्रत्यवेक्षत्वात् उन्मेषातिरिक्त नान्यप्रमेय जालम् भाति तथा च निमेषावस्थायां प्रमेयस्य स्वरूपभेदात् जगद्वय: परिलक्ष्यते अतएव उभयरूपे संविदगुणा तथा च शक्त्या निमिषोन्मेषरूपा संकल्प वृत्तिदा एव प्रकाश्य प्रकाशक भावे जातो ।

अत्र प्रदर्शितं यत् नेत्रत्राधि मध्यौ लिङ्गमात्रं जातम् तमधारिणो शक्ति: निमेषेन उदयति अतएव निमेषे भव: नैमिष: तदस्थान विशेषो नैमिषोलिङ्गधारिणो इत्युक्तम्[1] ।

---

१- मा०वि० ३-५

शक्तिचक्रस्य स्वरूपमनिमेषेण जागदयंच-

वाच्य वाचकस्य विश्वस्य सर्वतोमुखो विकासाय परमेश्वरो शक्तेर्धारा कदाचित् मातृकारुपं विधाय अकारात् क्षकारपर्यन्ताष्ट-वर्गाणामधिष्ठात्री भूय माहेश्वर्यादिष्ट शक्ति नाम्ने कदाचित् प्राण-मुद्वयन्त: करणेन्द्रियादि समस्तभूतस्वरूपे प्रसरति ।[1]

जगदि ब्रह्मणादारभ्य तृणपर्यन्त एते प्रमेय पदार्था: प्रत्यक्षा: अनुभवगम्या: वा ते सर्वे परमेश्वरस्य अनन्त शक्तिनाम अंशा: सन्ति ।

इमानि अनन्तशक्ति अंशानि शास्त्रेषु शक्ति चक्रेति निगदित: । एषाशक्तिचक्र: निरन्तर निमिषोन्मेषेण प्रवहति ।

अथर्ववेदे चापि आवि: सन्निहितं गुहाचरं नाम महत्पदम् चैतत्समर्पितं एजत्प्राणन्निमिषच्च० इति मंत्रेण अन्तःस्थप्रकाश स्वरूप महदम् । निमेषणाधिना परमात्मनि प्रतिष्ठितं प्रदर्शितं ।[2]

यजुर्वेदे चापि परमात्मशक्त्या जगत्प्रकाशक चेष्टा प्रदर्शनाय निमिष निमेषणशब्दस्य उल्लेखं कृतम् ।[3]

---

१- मा०वि० ३।१३-१४

२- अथर्ववेद १०।८।६ तथा मुण्डकोपनिषद् ३।२।१

३- यजुर्वेद २३।३ व २५।११

वायुपुराणे प्युक्तम्-

काल: अथनिमेषो संख्या चतुरित्युच्यते अहोरात्रमूर्ति: निमेष: अवयवश्च ।[1]

शिवपुराणे लिखितम् यत निमेष मात्र कार्यपरिणाम: । यद्यपि संख्यारूप कालस्य पूर्णाविधि: प्रलयपर्यन्तमेव भवति तथापि निमेष: प्रथमे वर्तते ।[2]

नैमिष नाम करणाशय:-

पुराणेषु नैमिषनामकरण विषये विभिन्नोल्लेखानि सन्ति तेषु कालप्रकाशक: निमेष शब्द: येन निमेषे भव: नैमिष: इति प्रथमम् ।

परमेश्वरस्याचिन्त्याशक्ति: निमेषेन निखिलब्रह्माण्डान् नाशयति तथा पुन: निमेषान्तरकालेन सृजति च एवं कतिविधा सृष्टि: तथा कतिविध: लयो पि भवति ।[3]

१- वायुपुराण अ० २१

२- शिवपुराण वायवीय सं० अ० ६

३- निमेषमात्रं कालश्च श्रीदेव्या: प्रोच्यते मुने ।
एवं नश्यन्त्यखिलानि ब्रह्माण्डान्यखिलानि च ।
निमेषान्तरकालेन पुन: सृष्टिक्रमेण च ।
एवं कतिविधा सृष्टिर्लय: कतिविधो पि वा ।
श्रीमद्देवीभा०पु० ६।८।७५-७६

एष शक्तिचक्र: एव जगदि अनुवर्तते परिवर्तते च । अयम निमेषमात्र काल: यो जगदि प्रलयोदय हेतुभूतो कथितो तद् क्षण: स्वतन्त्रेच्छाशक्तिभूता श्री देव्या: अनुग्रहतिरोधानमेव पूर्वमुक्तम् ।

भूयोभूय: निमेषादिक्रियया जायोनकंदोत्र देशं स्थानविशेषं वन नैमिषमित्युक्तम् ।

अपर प्रसङ्गे धर्मचक्रस्य[1],ब्रह्मनोमय[2] चक्रस्य वा नैमिशीर्ण-त्वात् नैमिषमित्युक्तम्

---

१- गच्छतो धर्म च क्रस्य नेमि: शीर्णो त्र पश्यत: ।
अर्थात: नैमिषं प्रोक्तं क्षेत्रं परम पावनम् ।। —पद्मपुराण सृ०ख०१।८

अपिच-
गच्छतो धर्मचक्रस्य यत्र नेमिरशीर्यत ।
पुण्य: सदेश: मन्तव्य: इत्युवाच बृहस्पति: ।(वायुपु०१।१८४

२- प्रेत्या त्र चाल्यंश्चक्रं नेमि शीर्णो त्र पश्यत: ।
तेनेदं नैमिषं प्रोक्तं क्षेत्रं परम पावनम् ।श्रीमद्देवीभा०पु० १।२।३२

३- प्रयुक्तस्य चक्रस्य यत्र नेमिरशीर्यत ।
तद्वनं तेन विख्यातं नैमिषं मुनिसत्तम् ।। शिवपु०वा०सं०३।५५-५७

४- दिव्यमेतन्मया चक्रमनुव्रजता चिरम् ।
यत्रास्य शीर्यते नेमि: सदेश: पुरुषर्षभा: ।
नैमिशं तत्स्मृतं नाम्ना पुण्यं सर्वत्र पूजितम् ।।
कूर्म पु० उ०वि० ४१।६-८

अत्र पद्मे वायुपुराणे तु धर्मचक्रस्य नैमिशीर्णत्वात् अर्थतः नैमिष संज्ञा प्रदर्शितः। ब्रह्माण्डे प्येवम् प्रदर्शितम्।

श्रीमद्देवीभागवते शिवकूर्मादि पुराणेषु ब्रह्मनोमय चक्रस्य नैमि शीर्णत्वात् नैमिषमित्युक्तम्।

यद्यपि सामान्य दृष्टौ धर्मचक्र ब्रह्मनोमय चक्रेति कथनेन भेददृष्टिः भासते किन्तु पुराणकारदृष्टौ एतन्न ब्रह्माधिष्ठातृशक्ति-कर्तृत्वेन।

धर्मचक्रेति कथनेन धारणाद्धर्म इत्याहुः इति वचनेन स्वान्त-धारिणी विश्वोन्मुखी ब्रह्मशक्तिः धर्मशब्दस्य संकेते भाति।

वायुपुराणे पद्मपुराणे च "सुनेमं दिव्यरूपं च सत्यगं शुभ विक्रमं अनौपम्यमिदं चक्रं" इत्यादि वाक्येन धर्मचक्रस्य स्वरूपं प्रदर्शितम्।[1]

ब्रह्माण्ड पुराणे चापिलिखितम्-

विकारैः प्रतिसंसृष्टो गुणः साम्येन वर्तते।
प्रधानपुरुषाणां च साधर्म्येण तिष्ठति॥[2]

अत्र धारणा शक्तिरेव धर्मस्वरूपा अधारिका च।

---

१- पद्मपुराण सृ०खं० १। ६-७

२- ब्रह्माण्ड पु० बरेली त्रि०खं० ११। १२

उपनिषत्स्वपि च यथा-

अरा इव रथनाभौ संहता यत्र नाड्य: स एषोऽन्तश्चरते बहुधा जायमान:[1] तथा

अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितं[2] यस्य नराश्वरथनाभौ कला यस्मिन् प्रतिष्ठिता[3] इत्यादि वाक्येषु रथनाभिपदेन चक्रसंकेतमेव प्रदर्शितम् ।

तंत्रसाराख्य ग्रन्थे चाप्युक्तम यत् संविदद्वारेण जीव: नाडी चक्रानु चक्राणि च देहे विलाप्य परमशिवरूपं पश्यन विश्वमयीमपि संवेदते । यथा-

तत्र समस्त एव अयं मूर्ति वैचित्र्याभासात् शक्तिचक्रो देशाध्वा संविदि विश्रान्त: क्रमेण शून्ये बुद्धौ प्राणे नाडीचक्रानुचक्रेषु बहि: शरीरे यावल्लिङ्गस्थण्डिल प्रतिमादौ समस्तो ध्वा परिनिष्ठत: तं समस्तमध्वानं देहे विलाप्य देहं च प्राणे तं धियि तां शून्ये तत्संवेदने निर्भर परिपूर्ण संवित्संपद्यते षाडत्रिंशत्तत्त्वरूपश: स्वुतीर्णां संविदं परम शिवरूपं पश्यन् विश्वमयीमपि संवेदयेत्, अपरथा वैष्णवागमेवं केचित् परत्वेन गृह्णीयात् मायागर्भाधिकारिणं विष्णुब्रह्मादिकं वा तस्मात् अवश्यं प्रक्रिया परेण भवितव्यम्[4] ।

---

१- मुण्डकोपनिषद् २।६

२- प्रश्नोपनिषद् २।६

३- प्रश्नोपनिषद् ६।६

४- तंत्रसार अ० ७

शक्त्यावृत: स्तन्मनोमय: (अन्तर्हृदयाकाशस्थित:)ब्रह्मचक्र: नापि कथितम् । यथा-

कवादित्यस्मात्स्वनत्व जिज्ञासमाना: ब्रह्मवादिन: परस्पर विशदमान: वदन्ति किं कारणं ब्रह्म कुतोत्म जातम् - केन जीवाम: तथा क्वसंप्रतिष्ठा: केनाधिष्ठिता: सुखेतरेषु व्यवस्था वर्तामहेति[1] ?

सर्वे मुनय: समाधानाय स्वस्वमनान् समुपस्थिताश्च काल: स्वभाव: नियतिर्यदृच्छा भूतानि पुरुष:योनि इत्यपि चिन्तनीया:।

आत्मभावभूतत्वाद् न जात्कारण: एषाम् संयोगश्च सुख-दु:खहेतु भूतत्वात् अनीशात्मापि इत्येवं चिन्तयन्त: ते ध्यानानुगता: स्वगुणैर्निगूढाय देवात्मशक्तिमपश्यन् ।

या स्का कालात्मयुक्तानि निखिलकारणानि अधितिष्ठति । सा परमेश्वरस्याचिन्त्यशक्ति: विश्वव्यापारे चक्रमिव अनुवर्तते ।इदमेव ब्रह्ममनोमय चक्रमुक्तम् ।

ब्रह्ममनोमय चक्रस्वरूप दिग्दर्शनं लिखितम्-

इदं ब्रह्ममनोमय चक्रं स्कनेमियुतं त्रिवृतं षोडशान्त:शताधारं विंशति प्रत्यरं षडष्टकै: युतं विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तम् स्कमोहं च भाति[2] ।

---

१- श्वेताश्वतर उपनिषद् १।१-४

२- तदैव

अस्मिन् सर्वजीवे सर्व संस्थे बृहन्ब्रह्मचक्रे हंस: (जीवात्मा) भ्राम्यतीति च अत्र पराप्रकृति: नेमि: ।

यदा ब्रह्मचक्रस्यधारिणी शक्ति वैषम्येन तिष्ठति तदा लोक रचना जायते तथा च यदा एषा गुणा साम्यं गच्छति तदा तमोमयमिदं आविर्भूतं शीर्णन्व दृश्यते ।

अत्र ब्रह्मण: इच्छा एव पराशक्ति: नेमिश्च वर्तते या जगतो स्य परि रक्षिका भाति । यद्देशे क्षेत्रे स्थानविशेषे वा एषा शीर्णति तद्देशम् क्षेत्रम् वा नेमिशीर्णत्वात् नैमिषम् इत्युक्तम् ।

आगम पुराण दृष्ट्या चापि ब्रह्माधिष्ठिता शक्ति: एव लिङ्गनाम्ना तथा च लिङ्गी ब्रह्मण: इच्छा शक्ति: एव निमिषोन्मेष भेदेन भूयोभूय: प्रलयोदय कार्याणि करोति । अत यद्देश विशेषेण निमिषोन्मेष:, आविर्भवति तद्देश विशेष सूचकशब्दम् नैमिषमिति च ।

एषा निमिषोन्मेषा एव शक्ति चक्रस्य ब्रह्म मनोमय चक्रस्य धर्मचक्रस्य वा नेमि: वर्तते अतएव यत्स्थान विशेषे एषा नेमि: शीर्णते तद्देश: नैमिषमिति निरूपितम् ।

## नैमिषस्य महत्वम्

सृष्ट्यादि कारणभूतं नैमिषम्-

सृष्टे रुद्भवत्यादिषु नैमिषस्य महत्वपूर्णयोगदानं वर्तते परमेश्वरस्य अचिन्त्याशक्ति:अस्मात् स्थानादेव निमेषेन निखिल ब्रह्माण्डान् नश्यन्ति पुन:निमेषान्तरकालेन सृजति च । उक्तं च श्रीमद्देवी भागवतपुराणे-

निमेषमात्रं कालं श्री देव्या: प्रोच्यते मुने ।
एवं नश्यन्ति सर्वाणि ब्रह्माण्डान्यखिलानि च ।।
निमेषान्तरकालेन पुन: सृष्टिक्रमेण च ।
एवं कतिविधा सृष्टिलये कतिविधो पि वा[1] ।।

श्रीमद्भागवत पुराणे पि वर्णितम् यथा-

कालं कर्म स्वभावं च मायेशो मायया स्वया
आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे[2] ।।

आदौ शक्त्यावृत:निर्गुण: परमेश्वर: सृजनेच्छया शक्तिगर्भेण संस्थत बदुना निमेष व्याजेनअत्र आविर्भूत: अनरवनैमिष संज्ञाभिध: एष तीर्थ: सृष्टेरादि तीर्थेति प्रसिद्ध: ।

---

१-श्रीमद्देवी भा०पु० ६।८।७५-७६
२- श्रीमद्भागवत पु० २।५।२१

एतद्विषयप्रकाशनार्थमेव ब्रह्मधर्मपुराणे[1] उक्तमस्त्यत्र निरूपण-प्रसङ्गे मुनीनामग्रे अत्र निमिषारण्ये आदिदेव नारायणस्य अन्त-र्हितभावं प्रदर्शितम् ।

एष विष्णुः आदिदेवस्वरूपे जगदुत्पत्तिपालनसंहारकारण-मिति विष्णुपुराणे उपवर्णितम् । तत्र लिखितम् यथा-

प्रधानपुरुषाव्यक्तकालस्तु प्रविभागशः
रूपाणि स्थितिसर्गान्त व्यक्ति सद्भाव हेतवः
व्यक्तं विष्णुस्तथाव्यक्तं पुरुषः काल एव च,
क्रीडतो बालकस्येव चेष्टां तस्य निशामय ।[2]

एषा जगदुपादान कारणः विष्णुः अत्र निमिषदेवस्वरूपे अन्तर्हित अतएव सृष्ट्यादिकारणभूतः उक्तम क्षेत्रेति प्रसिद्धं नैमिषम् ।

वायुपुराणे लिखितम्-

अस्मिन्नैमिषारण्ये स्वपुराः - विश्वं सृजनेच्छया विश्वसृजः[3] ब्रह्मा सहस्रवार्षिकं सत्रं कृतम् । यस्मिन्यज्ञेः तपो गृहपतिः(यजमानः) ब्रह्मा ब्रह्मा इलापत्नी, मृत्यु शामित्रश्चासीत् ।

---

१- ब्रह्मधर्म पु०पू० ख० अ० ३
२- विष्णु पु० २।२७।१८
३- वायु पु० २।५-६

एषा नैमिषारण्यं आदरणीयं पवित्र तमं तीर्थं वर्तते । तपस्तपयज्ञादि सुकर्मानाम पावनभूमिस्वरूपे एष सर्वदा वैष्णव शैव रामानुजादि सगुण निर्गुण उपासकजनेभ्यो दर्शनीयं वन्दनीयंच ।

अस्मात् स्थानात् ऋषय: महापुरुषाश्चजिज्ञासमाना बहुश: तपयज्ञादिना परमात्मयोगमाप्नुवन्त: ।

पुराणादिग्रन्थेषु एतन्महिमा प्रतिपादनाय बहव: वाक्यानि लिखितानि सन्ति ।यथा-

नैमिषारण्यं परमतीर्थमस्ति एषभोगमोक्षप्रदश्चापि ।[1]

एवमग्निपुराणे स्कन्दे पि लिखितम् -

तीर्थानामुत्तमं तीर्थं क्षेत्रानाम् क्षेत्रमुत्तमम्[2] इति

गरुणे यथा-

नैमिषारण्यं पुण्यदायकं क्षेत्रम्[3] ।

नैमिषारण्यं मुक्तिप्रदं क्षेत्रं

नैमिषारण्यं सद: सिद्धिप्रदं क्षेत्रं इति ।

नैमिषारण्य[4] वासीयो नरो देवत्वमाप्नुयात् ।

---

१- अग्निपु० १०९।२४

२- स्कन्द पु०माहे० १०२।४

३- गरुड़ पु०४४।७ बरेली प्रकाशन
तथा अ० ८०।६

४- स्कन्दपु० ३।२१।११

देवानामालयं यस्मादेव मुनिदुर्लभम् ।
तीर्थानां परमं तीर्थं धर्मारण्य प्रवदात् ।
ब्रह्मविष्णुशिवाद्यैर्देवैः संस्थापितं पुरा ।
धर्मारण्यात्परं नास्तिभुक्ति मुक्ति प्रदायकं ।
कामिनां कामदं क्षेत्रं यतीनां मुक्तिदायकं
सिद्धानां सिद्धिदं प्रोक्तं धर्मारण्यमिदं शुभं ।।

एवं नैमिषारण्यं तीर्थेषु क्षेत्रेषु च उत्तमं वर्तते अत्र भगवतोरूपस्वरूपविग्रहं स्थितं कथ्यते उक्तं यथा-

प्रभासं पुष्करं चैव गयां नैमिषमेव च[1]
कुरुक्षेत्रं विजानीहि ब्रह्मरूप षडानन।।

नैमिषारण्यं[2] पुण्यतमं तीर्थं भाति यदत्र हरिः समन्तात् निवसति ।

नैमिषारण्ये[3] तपनात् ब्रह्मलोकस्य प्राप्तिर्भवति । यो नैमिषारण्ये[4] मृत्युमाप्नोति न तदधोगामी भवति ।

---

१- स्कन्द पु० वे०ख० ७।१
२-स्कन्द पु०
३- स्कन्द पु०
४- स्कन्द पु०

नैमिषं[1] तीर्थम् नित्यपवित्रंपुण्यप्रदं च अत्र यो संन्यासेन प्राणानविमुंचति स: सर्वलोकेषु आनन्दमनुभवति ।[2] एषा भूमि:देवानां यज्ञभूमि: वर्तते अत्र विभिन्ना न्येकतीर्थानिदेवताश्च सन्ति । देवर्षि सेविता पवित्रा गोमती नदी वर्तते तथा अत्र सूर्यस्याक्षयपात्रमपि सन्निहितं ।[3] नैमिषारण्य तीर्थे स्नानात् स्वर्ग लोकस्य प्राप्तिर्भवति ।

पृथिव्यां यानि तीर्थानिसन्ति ते सर्वे नैमिषे[4] विद्यमाना: सन्ति । अत्र यो समत्वा नियमित भोजनंकरोति स: स्वकुलस्य सप्त श्रेणीनुद्धारयति । वामन पुराणे पि अत्र त्रिंशत्सहस्त्रतीर्थानां वर्णनम् कृतम् ।[5] ससंयमेन नैमिषारण्यतीर्थे स्नात्वा मासं जलदायीनर: पुरुषमेव यज्ञस्य फलं प्राप्नोति ।

[6] नैमिषे कुशहस्त शिव नित्य निवसति ।
[7] नैमिषे पितृपूजनात मुक्तिप्तिर्भवति ।

---

१- पद्म पु०
२- महाभारत
३- महाभारत
४- महाभारत
५- महाभारत
६- योगिनीतंत्र
७- वि०पु०

नैमिषारण्य[1] वासी यो नरो देवत्व माप्नुयात् ।

नैमिषारण्य[2] सिद्धेवितंपवित्रं क्षेत्रंच यस्य तीर्थस्य प्रशंसनात् वाचोरथपापानि नश्यन्ति । तीर्थे प्रविष्ट मानस्तु नरः सर्वपापात्प्रमुच्यते ।

महीतले असंख्यानि तीर्थानिसन्ति तेषाम् नैमिषाख्यं प्रथमम् वर्तते । उक्तंचापि -

प्रथमं नैमिषं[3] पुण्य चक्रतीर्थं च पुष्करं।
अन्येषां चैव तीर्थानां संख्यानास्ति महीतले ।।

नैमिषं[4] महापुण्यं सर्वपाप प्रणाशनम् वर्तते ।

नैमिषं[5] पुरुषोत्तमविष्णोस्स्वरूपे भाति ।

सिद्धचारणसंकीर्णं यक्षगन्धर्व सेवितः एतत्तुत्तमं नैमिषं[6] भगवतः शंभोरपि स्थाने वर्तते अत्र सगन्धर्वा देवाः समदरीश राक्षसाः पुरा तपस्तप्त्वा प्रवरान् वरान् लेभिरे ।

---

१- लि०पु०

२- पद्म पु० २।१

३- देवीभा०पु० ४।८।४०

४- देवीपु० ७६।५

५- स्कन्द पु० अवन्तीखण्ड तृतीय रेवाखण्ड २०।२९

६-कूर्म पु० ४१।९-१५

इमं देशं समाश्रित्य समाहिताः भट कुलीयाः ऋषयः ब्राह्मणाम् मन्त्रेणाराध्य देवेशं महेश्वरं दृष्टवन्तः ।

अत्र कृतं दानतपस्नानजपादिकं एकैकमपि सप्तजन्मकृत पापं पावयति ।

अत्रादौ ऋषीणाम् सप्तश्रासनम् वायुः प्रभाषितम् - पुराणम् (ब्रह्माण्ड)भाषितम् ।

अत्र प्रमथैः परिवारितः विश्वकृत महादेवः अद्यापि रुद्राण्या सह रमते ।

एवं भूमि यो द्विजातयः नियमेन प्राणान् परित्यजति सः ब्रह्मलोकं गत्वा न निवर्तते ।

अस्मिन्सिद्धसेवितनैमिषारण्ये[१] रोहिणी गर्भेण सौम्य नामकः पुत्रो जातः ।

अत्रैव वशिष्ठारुन्धतीसंयोगेन तेजस्वितः शतसंख्यकाः पुत्राः संजाताः इत्यप्युक्तः ।

अत्रैव वशिष्ठस्य तपप्रभावं दृष्ट्वा विश्वामित्रः वैराग्य-भावं संप्राप्तम् । वशिष्ठस्यज्येष्ठपुत्रशक्तिना कल्मषपाद ऋषिं अत्रैव शापितः । पराशर मुनिः अत्रैव अदृशान्त्यामजायत् । अस्मिन्नैमिष क्षेत्रे ब्रह्मवादिनः यज्ञं कृतम् तस्मिन् वासुदेवः उपस्थितः । तस्मिन्यज्ञे नृपपुरुरवा अवधानमिच्छितः परिणामतः ऋषिभ्यो कुशवज्रेण तस्य शरीरं चूर्णीकृतं ।पुनःउर्वशीसुतं नृपपदे अभिषिक्तः ।

---

१- वायु पु०

एष नैमिषारण्यः मुक्तिदायक नवारण्य मध्ये एको आख्या वर्ति उक्तंच यथा-

सैन्धवं दण्डकारण्यं नैमिषं कुरु जाङ्गलम् ।
उत्पलावर्तारण्यं जम्बुमार्गंच पुष्करम्।
हिमवांस्तत्रारण्ये उक्तं परिकीर्तितः ।[1]

तेषारण्येषु यान् प्राणान् परित्यजेत, ब्रह्मलोकनिर्भूत्वा स याति परम पदम् ।

अष्ट वैकुण्ठेषु एकः वैकुण्ठम् नैमिषारण्यम् यथा-

श्री शैलं व्यङ्कटाद्रिंच विमानं रङ्गसंज्ञकम् ।[2]
तोताद्रिपुष्करं चैव शालिग्रामंच नैमिषं ।।

चतुर्दश गुह्य क्षेत्रेषु नैमिषारण्यः-

काकुब्जा अर्बुदं चैव वामवर्तस्तथा वरः ।
शालिग्रामं शूकरं च मथुरा च मम प्रिया ।
गयां नैमिषं चैव जंबु लोहार्गं लोमर्श ।
पानस्वामी प्रभासं च वदरी मम आश्रमम् ।
इि सप्तैतानि गुह्यानि मूर्तस्थानानि भूतले ।।[3]

---

१- श्री देवीपुराण ७४।२८-३०

२- नैमिषारण्य माहात्म्यं

३- नैमिषारण्य माहात्म्य

पुराणादिग्रन्थेषु चतुर्युगेषु नैमिषस्य महत्वंप्रतिपादितम्-तदादौ कृतयुगे नैमिषस्य महत्वं प्रतिपादयामि च ।

कृतयुगे प्राय: द्वादशवर्षीय सत्राणामुल्लेख: नैमिषे भवति-तथा- महाभारते-

पूर्वं कृतयुगे राजन नैमिषेयास्तपस्विन: ।
वर्तमाने सुविपुले सत्रेद्वादश वार्षिके ।।
ऋषयो बहवं राजस्तत् सत्रमभि पेदिरे ।
उषित्वा च महाभागास्तस्मिन सत्रे यथाविधि ।
निवृत्ते नैमिषेये वै सत्रेद्वादशवार्षिके ।
आजग्मु ऋषयस्तत्र बहवस्तीर्थ कारणात्[१] ।।

वायुपुराणे पि-

सिसृक्षमाणा विश्वं हि यत्र विश्वसृज: पुरा ।
सत्रा हि ईजिरे पुण्यं सहस्त्रं परिवत्सरान् ।।
तपो गृहपतिर्यत्र ब्रह्मा ब्रह्माण्ड भवत्स्वयम् ।
इलाया यत्र पत्नीत्वं शामित्रं बुद्धिमान शुचम् ।।
मृत्युश्चक्रे महातेजा स्तस्मिन्सत्रे महात्मनाम् ।
विबुधा ईजिरे तत्र सहस्त्रंप्रतिवत्सरान्
भ्रमतो धर्मचक्रस्य यत्र नेमिरशीयत ।
कर्मणा तेन विख्यातं नैमिषंमुनि पूजितम्[२] ।।

१- महाभारत शल्यपर्व ३७।५१-४३

२- वायु पु० २।५-८

पुराकाले यदा ब्रह्मणा एव निष्कलभावे विद्यते नान्य दृष्टा दृश्यस्य भेद: तदा एकोऽहं बहुस्याम: इति संकल्पेन ब्रह्मणा निर्मितानिर्माणेण शक्ति चक्रस्य धर्मचक्रस्य वा संचार: प्रारभ्यते येन जगदोदय: सम्भव: । तद् ब्रह्मधिष्ठित चक्रस्य नेमि: नैमिषे एव शीर्णानि अतएव एतस्थलं नैमिषम प्रोक्तमिति ।

ब्रह्माण्डे चाप्येव वर्णितम्[1]-

सामविधानाख्य ब्राह्मण ग्रन्थे पि द्वादश वार्षिकसत्रस्योल्लेख: वर्तते तथा-

संवत्सर अष्टमे भुंजानो ग्राम्यमन्नं प्रतुद्वेति
दर्शनिभावर्थिन्नैमिशियम् द्वादश संवत्सरावाप्नोति[2] ।

ताण्ड्यायन ब्राह्मणे पि यथा-

नैमिषे नैमिषीय एतेन द्वादश संवत्सराख्येन् सत्रेण वै नैमिषीया सर्वामृद्धिमवाप्नुवन्[3]

जैमिनीय १।३६४ तथा १।३६३ एवम २।४२ तथा शांखायने २६।५, २८।४ अपि नैमिषोल्लेख: वर्तते ।

---

१- ब्रह्माण्ड पु० अ० ४

२- सामविधान ४।१०।५

३- ताण्ड्यायन २५।६।६

आपस्तम्ब श्रौतसूत्रे २३।११।१० इत्यत्र पि नैमिषीयम नैमिषीयाणाम इति शब्दस्य प्रयोग: दृश्यते ।

स्कन्दपुराणे ब्रह्म प्रसङ्गे ब्रह्मलोक गति प्राप्त्यर्थं इन्द्रस्य सहस्रवर्षावधि तपं प्रदर्शितम्[1] ।

वृत्रवधार्थं इन्द्रस्य नैमिषारण्यागमनम् संपूर्ण तीर्थानां नैमिषागमनम् च -

विष्णु मन्त्रेणोत्साहित: इन्द्र: नैमिषारण्यागत्य महर्षि दधीचिन वृत्रवधाय तदस्थीनि याचितवान् दधीचिनोक्तं विश्वरक्षणाय एव अस्थीनि दास्यामि किन्तु मम मनसि सम्पूर्ण तीर्थस्नानस्य इच्छा वर्तते अतएव तीर्थयात्रा पश्चादेव दास्यामि ।

देवा: विचारितवन्त यत् मुनि: तीर्थयात्रायां जागत तदा बहुकालं भविष्यति अतएव ते तत्रैव विश्वरक्षणाय सर्वान् तीर्थान आकारयामास । सर्वाणि तीर्थाणि तत्रागत्य दधीचिम् अभिषिंचतु: तदा दधीचि: नैमिषारण्यन्तर्गता मिश्रित स्थाने गोभ्यो: त्वचां लेलह्यमान: अस्थीन ददौ । तेन वज्रं निर्मितं[2] येन वृत्रम निहतम् । अस्मिन्विषये स्कन्दपुराणे लिखितम् -

---

१- तेन पूर्वं तपस्तप्तं नैमिषे दानवोत्तम् ।
यावद्वर्ष सहस्रान्तंध्यायमनेन शंकरम् ।
योन्यो पि नैमिषारण्ये तद्रूपं कुरुते तप: ।
ब्रह्मलोके गतिस्तस्य जायनात्रसंशय: ।
तच्छ्रुत्वा सत्वरं गत्वा नैमिषं तीर्थं मुत्तमम् ।
तपश्चक्रे ततस्तीव्रं ध्यायमानो महेश्वरम् ।। (स्कन्दपु०नागरखण्ड ३०८)

२- तदेव

अथ शक्रस्तदाथ नैमिषाभि मुखो ययौ ।

भयेन महता युक्तो वेपमानो निशात्यमे ।

तत्र ध्यानस्थितं वृत्रं दृष्ट्वा त्रिदशाद्य

वज्रेण ताडयामास तं ध्यान परायणम्

सो पि वज्रप्रहारेण भस्मसात्समपद्यत् ।

वृत्रेदानं शार्दूल वह्निम प्राप्य पतंगवत् ।

महाभारते पद्मपुराणे पि-

'पृथिव्यां यानि तीर्थानि नैमिषे तानि भारत'[1]

इत्युक्तितया वृत्रप्रसङ्गस्यैव सङ्केतम् कृतम् ।

इतिहास ग्रन्थेषु पुना अप्राप्य वर्ते तस्मिन् लिखितम् 'उड्डीयानस्य पीठस्य प्रादुर्भावः कृते युगे' अस्योल्लेखः पं० भवानीशंकर निर्देशने निर्मिते नागरमहोदयोः निर्मिते नैमिषारण्य माहात्म्ये[2] कृतं तत्र उड्डीयान पीठ नैमिषारण्यमेवोक्तम् ।

स्वायम्भू मनोः नैमिषे तपश्चर्या[3] तपप्रभावेन विश्वास-भगवतो दर्शनम् वरप्रदानंच ।

स्वयंभुवा ब्रह्मणा सृष्ट्यर्थं स्वशरीरं विभज्य स्वयंभू शतरूपा स्वरूपमप्रदर्शितः ।

---

१- पद्मपुराण आदिखण्डे १।३२।२४

२-नैमिषारण्य माहात्म्य (नागरकृत)

३- पद्मपु० उ०खण्ड ६।२६६।१-१२

एतन्मनुना सृष्टि विकासाय परमात्मशक्ति प्राप्त्यर्थं च नैमिषभूमौ सहस्राधिक यथाविधि तपश्चर्याम् तथा विश्वावासस्वरूपम् परमतत्वं अपश्यत् ।

तेन तपप्रभावेण प्रसन्नः परमात्मा तद्दम्पत्योः मनोरथम् ज्ञात्वा त्रेतायां त्वद्दम्पत्योः पुत्रेति भूत्वा अवतरिष्यामि इति वरम् प्रदत्तवान् एव दम्पत्यैव अग्रे नृप दशरथकौशल्यारूपे संजातं तथा परमात्मस्वरूपी श्रीराम अंशांश सहितः तद्गृहे अवतरितः ।

अस्य प्रसङ्गस्योल्लेखः प्रसिद्ध काव्ये श्रीरामचरितमानस इति ग्रन्थे श्री महामुनि तुलसीदासेन "बालकाण्डे" कृतम् ।

<u>सतयुगे प्रजापति दक्षस्य प्रथम गोष्ठी संभारः नैमिषे-</u>

दक्षः प्रजापतिपदलाभानन्तरनैमिषे आगतवान् अत्र ऋषयः सदैवाः तमभिवादयन्ति किन्तु भगवान शंकरः शिष्टाचार प्रदर्शनं न करोति । अतएव दक्षः शंकरम् प्रति द्वेष भावं, गृहणाति । तद् परिणामस्वरूप एव कनखल यज्ञे शंकरम् न आमन्त्रितं तथा यज्ञभागमपि शिवं न दत्तम् तस्मिन्यज्ञे सतीदाहं जातम् ।

अस्मिन्प्रसंगे ऋषयः स्मारयन्ति यथा-
यातस्त्वैव यज्ञस्य यत्वयोक्तं सदाशिवम्
नैमिषे निमिषक्षेत्रे तदा किं न स्मृतं त्वया[१] ।।

---

१- श्रीमद्भागवत पुराण

त्रेतादौ कृतयुगे नैमिषे धर्मराजेःत्वम् नैमिषे काशी विश्वेश प्रतिष्ठाश्च-

स्कन्दपुराणे लिखितम् एकदा त्रेतादौ (कृतयुगे)धर्मराजा त्रिंशतसहस्त्र वर्षावधि पर्यन्तं अस्मिन् अरण्ये दुष्करं तपं तेपे । तं तपस्तस्तुम दृष्ट्वा इन्द्रादिदेवा: ब्रह्माणम नीत्वा अभयपद प्रदाता शंकरम् ध्यायन कैलाशे गतवन्त: ।तत्र भगवतोशंकरस्य स्तुतिम कुर्वन् ऊचु: -

श्रीधर्मराजा धर्मराज: दुष्करं तपं करोति ते किम् वांछति वयं न जानामि ।हे भगवन् स: त्वद् भक्त: वर्तते ।वयम् सर्वे तत्तपसा सन्त्रस्त: भवाम: । अतस्त्व भगवन् प्रार्थयाम: यत् भवान तत्र गत्वा शायताम् एवम् तपस्दाग्नि: क्रियताम् ।

शंकरेणोक्तम्- मा भैष्ट देवा: गम्यन्ताम् ।देवा: तद्वचनं श्रुत्वा स्वस्वस्थानम् गतवन्त: ।पुन: शतवर्षावधि पूर्णे सति भगवान शंकर तदग्रे प्रकटितवान तथा वराय प्रेरित: तदा धर्मराजा उक्तन् यदि भवान् सन्तुष्ट: तदा अद्यावधि अभेद पापहा पवित्र मूर्तिस्वरूपे मम नाम्ना लोके प्रसिद्धो भव । भगवता शंकरेणोक्तम् अद्यावधि मयेदं स्थानम् काशीव प्रतिष्ठित: तदान्यं वरमपि याच्यताम् । धर्मराजा-नोक्तम् अस्मिन्नारण्ये तीर्थे भवत: धर्मेश्वरनाम्ना प्रसिद्धि: एवम् धर्मारण्यस्य ख्यातिश्चापि त्रैलोक्ये भवितव्य: ।

शंकरेणोक्तम्- एष धर्मारण्य: प्रत्येकस्मिन्युगे प्रसिद्ध भविष्यति तथा त्वद्प्रतिष्ठितं विश्वेश लिंगमपि ख्यातो भविष्यति ।अन्यं वरं

याच्यताम् इत्युक्ते इति यमराजेनोक्तं, एवं अष्टकोशस्य परिधौ यत्र धर्मसंज्ञाभिधम तीर्थम् वर्तते तद्भूमि: प्राणिनाम मुक्तिदायी भवितव्य: । अस्मिन् क्षेत्रे प्राण परित्यागी पशुपक्षी कीटपतंगादिका सर्वे प्राणिवर्गा: मुक्तिभागी भवितव्य: ।

श्री शंकरेणोक्तं एवमेव भविष्यतीति ।देवैश्चापि शंख नादेनानुमोदितं तत्कृत्यं । पुनश्च धर्मराजानुरोधेन शंकर: एकांशेन तत्रैव स्थित: संजात: ।देवैश्चापि स्वस्वांशेन विभिन्न लिङ्गानाम् स्थापना अकुर्वन् ।

स्वयंभू क्रम लिङ्गस्य[1] स्थिति भूतनाथ स्वरूपे अवबुध्यते ।

एतस्य पूजनात् सर्वविधि बाधा नश्यन्ति ।इति ।

## दैत्यराज प्रह्लादस्य नैमिषयात्रा नर नारायण समागम:-

कदाचित् भृगुपुत्र: च्यवन व्याहृतेश्वर तीर्थे नर्मदा स्नातुम् आगत् तत: रेवा महानदीं दृष्ट्वा तस्यामवातरत उतरं तं तं भयंकर नाग: प्रजग्राह । भगवान् विष्णो स्मरणात् विषज्वाला मुनिं न बाधित: - तत: स नाग: तंपाताले नीत्वा मुंचितवान् । तत्र विचरन् मुनेर्साक्षात्कार: प्रह्लादेन सह अभवत् । प्रह्लाद: अपृच्छत्

---

1- स्कन्दपुराण ब्रह्माण्ड धर्मारण्यभाग २-४

पृथिव्यां पुण्यानि कानि तीर्थानि सन्ति तदा मुनि कथयति प्रथमं नैमिषं पुण्यं चक्रतीर्थं च पुष्करं, अन्येषां चैव तीर्थानां संख्या नास्ति महीतले - राजा तद्वचनं श्रुत्वा नैमिषं गन्तुमुद्यता तथा हर्षितात्मा प्रह्लादः दैत्यान आहूय तैनैव सह पातालात् निसृत्य मुदान्वितः नैमिषारण्यमागत्य स्नानादि कृत्यं अकरोत् तत्र महापुण्या सरस्वती तीरे न्यग्रोधच्छायायां धर्मसुतौ मुनिश्रेष्ठौ नरनारायणौ तपस्तपतः आसीत्। कृष्णाजिनधारी समुन्नत जटाधारी तपोरतौ सुखदाण शार्ङ्गचाप एव बद्धतूणीरं दृष्ट्वा दैत्याधिपः क्रोधरक्तेक्षणः तौ प्रोवाच किं भवद्भ्यां[1] धर्मविनाशनदंभःसमारब्धः तपश्चरणं चापधारणं च कथं युक्तं?

इति तद्वचनं श्रुत्वा नरः उवाच दैत्येन्द्र।

आवां युद्धे तपसि कार्येऽपि समर्थौ व्यर्थेन चिन्ता त्वं पुनः किं करिष्यसि सर्वथाकामं गच्छ कस्मादत्र विकत्थसे बुध तेजो दुराराध्यं त्वं विमोहितः न जानाति। इति वचनं श्रुत्वा प्रह्लादोऽपि उवाच हे मन्दबुद्धौ गर्वमोहितौ तपसौ मयि तिष्ठति तीर्थे अधर्माचरणम् अयुक्तम् अतः तपोधन युद्धे तव का शक्तिः इत्यत्र प्रदर्शय।

---

१- श्रीमद्देवी भागवत पु० ४।८।२६ से ४।९।५५ तक

वादविवादानन्तर नर प्रह्लादयोर्युद्धं दिव्यसहस्रावर्षाणि अवधिम् जातम् तदा पीतवासश्चतुर्भुजः (विष्णुः) तत्रागतवान तं दृष्ट्वा प्रह्लादः प्रणम्य प्रत्युवाच हे देवदेव एतौ तपस्विनौ अहं कथं न जितवान् ।

विष्णु उवाच एतौ सिद्धौ मदंशौ अतएव अजितौ तदत्र का विस्मयः अधुना त्वं पातालं गच्छ । इत्याज्ञाप्तः दैत्यराजः असुरैः सह निर्गतः तथा नरनारायणौ पुनः तपोयुक्तौ बभूवतुः ।

वामनपुराणे पि अस्योल्लेखः विद्यते यथा-

पूजयित्वा सुवर्णाक्षं नैमिषं प्रययौ ततः

तत्र तीर्थ सहस्राणि त्रिंशत् पाप हराणि च ।।[1]

सत्युगे ब्रह्मविष्णुमहेशादीनाम् नैमिषयानाम् ऋषीणां वास व्यवस्था च

एकदा वृत्रप्रमुखादेवाः इन्द्रादयः तीर्थोत्सुकाः भगवत् शंकरस्य पार्श्वे गतवान्, भगवान शंकरो पि विष्णुम् नीत्वा धर्मारण्यस्य महिमा वर्णयन नैमिषारण्ये आगतवान् तत्रधर्मराजेन सर्वेषाम् यथोचितम् स्वागतम् कृतम्[2] ।

---

१- वामन पुराण अ० ८६

२- स्कन्द पुराण ब्रह्म खण्ड धर्मारण्य वर्णन अ०६

पूजया संतुष्ट:श्रीविष्णु: वराय उक्तम् तदा यमेनोक्तं तीर्थ-श्रेष्ठा ब्राह्मणै: वेदपाठै: तथान्य यज्ञादि तपश्चर्या भवति अतएव भवद्भि: तेषाम् स्थापना भवितव्य:।

भगवान विष्णु: सहस्त्ररूपधृत्वा अष्टादश सहस्त्र कर्णान् चतुर्विंशति कुलीन ब्राह्मणानाम् कुलेभ्यो नीत्वा स्थापितवान भगवन्तौ ब्रह्मा शिवौ तान प्रतिष्ठित: तथा ब्रह्मा तेषाम् आश्रमाणाम व्यवस्थां अकरोत्। इति।

त्रेतायुगे नैमिषस्य वर्णनम् सत्यमंदिरस्य स्थापना च –

त्रैतादौ कृतयुग समाप्ते सति स्वो लोह जिह्वाख्य राक्षस: संजात: तेन त्रिलोकेषु उपद्रव: कृत:। धर्मारण्यगत्वा पि स: ब्राह्मणान् त्रासित: आश्रमान् च भस्मसात्करोत्। इन्द्रे संसूचित: विष्णुम् यद् भवद्भि: प्रतिष्ठितापुरोम् कोल जिह्वाख्यराक्षस: नाशयति तच्छ्रुत्वा भगवान विष्णु: वैकुण्ठादेव सुदर्शनचक्रेण पृथिव्यस्थ तद राक्षसं जघानतथा देवस्तुत: भगवान् पलायितान् ब्राह्मणान् आहूय पुन: वासितवान्। तदा प्रसन्नाब्राह्मणा: ऊचु: हे भगवान् भवाद्भि: सत्यलोकादागत्य अस्य स्थानस्य प्रतिष्ठा कृत: अतएव अद्यावधि एष सत्यमंदिरेति नाम्ना ख्याते भविष्यति[१]।

---

१- स्कन्द पु० ब्रह्मखण्ड ३१ अध्याय

कृतयुगे नैमिषारण्यम धर्मारण्यम् तथा त्रेतायां सत्यमंदिरेति बोधव्यमिति ।

<u>त्रेतायुगे धर्मारण्याख्ये नैमिषे श्रीरामस्यागमनम् रामेश्वरप्रतिष्ठा च-</u>

पुरा त्रेतायुगे लङ्काविजयानन्तरं परान्तमगवान् श्रीराम: अयोध्यां सम्यक्निरुपद्रव रूपेण निवसन: वशिष्ठमुनिं प्रति तीर्थ माहात्म्यं अपृच्छतवान् ? तदा वशिष्ठ: - बहव: तीर्थवर्णनम् कृत्वा धर्मारण्यव्याजेन नैमिषस्य प्रमुखत्वं उक्तम् तदा प्रोत्फुल्लहृदय: राम: धर्मारण्य गमनाय मतिं चक्रे ।अयोध्यात: वशिष्ठंचाग्र: कृत्वा पश्चिमां दिशं प्रतस्थे दशमे हनि अनुजमेव धर्मारण्ये आगतवान् ।शिविकारूढ: राम: ससेनया क्षेत्र प्रविष्ट: तदा यानस्य गति: । मन्दा संजाता तदा विस्मयाविष्ट: श्रीराम: किमेतदाश्चर्यमिति वशिष्ठेन गुरुणा अपृच्छत् तदा वशिष्ठेनोक्तं हे राम धर्मक्षेत्रमुपागतम् अस्मिन् पुरातने तीर्थे पादचारेण[1] गन्तव्यम् । तत: पादचारी राम: सैन्येन सह सुवर्णानदी (सरस्वती) तटे क्षेत्र-मध्यात:सर्वेषुतीर्थेषु देवतायनेषु च भ्रमन् श्रद्धया विधिवत् दान श्राद्धादिक चकार ।एवम वायव्यकोणे रामेश कामेश इति संज्ञे संज्ञिते शिवलिङ्गे स्थापितवान् ।अद्यपि नैमिषमध्यक्षेत्रत: वायव्य दिशायाम् गोमती तटे उभौ शिवलिङ्गौ वर्तेते ।

---

[1]- स्कान्द पु० तृतीय ब्रह्मखण्ड अ०३१-३२

स्नानादि कृत्य निवृत्त:राम: तत्रैव रात्रौ अनिवसत् । तत: अर्धनिशायाम् नारीरोदनम् अशृणोत् । नारीण संसूचित: एका नारी करुणै: स्वरै: रोदति कारणजिज्ञासमाने सति सा कथयति मम दु:खापहम् रामच प्रेष्यतीति ।

तच्छ्रुत्वा राम: त्वरित गतिना तत्र गत्वा कृतांजलिपुर: अपृच्छतवान् तदा सा कथयति अहमतु धर्मारण्यस्य अधिदेवी भवामि। लोहासुर भयाद सर्वे विप्रा: दशदिशासु गता: यत्र वेदयज्ञादि कार्याणि अहरह: अभवन तद्भूमि: निर्जनत्वं गतम् ।

हे असुरशि राम असुरंनिहत्य पुन: विप्रान् अस्मिन्भूमौ प्रतिष्ठापिताम् ।

राम: तदधिदेव्या: कथनानुसार तत्काले असुरं हित्वा विप्रान् आनयित्वा स्थापित: ।तीर्थदेवतायनानां जीर्णोद्धारंचापि कृतम् ।

२- भगवान रामस्य द्वितीय यात्रा वर्तमान कालिक जनपद सीतापुरस्य स्थापना ।

धर्मारण्यस्य नैमिषारण्यस्व प्रभावंभावित: राम: द्वितीय यात्रायां भार्या सीता तथा मातृभि: सह आगत: ।तथा वशिष्ठमुने-राज्ञया शन्वार्णिके अश्मारे मे । यज्ञान्ते सुविनीतया सीतया

रामो विज्ञप्तः हे कुल वत्साध्वरस्य दक्षिणायाम् मन्नाम्ना पुरं स्थापय इति सीता-वचनं[1] श्रुत्वा महीभुजा राघवेण सीतायाः सन्तोषाय एकं सुनिर्मितं स्थानं नगरम् ब्राह्मणाय्नां ददौ ।

एतत्स्थानं सीतापुरमिति ख्यातं वर्तते । सत्यमन्दिरपर्यन्ता पंचाशत् ग्रामा सीतापुर समन्विता आत्मने वंशवृद्ध्यर्थम् सीताया वचनाच्च रघूत्तमः द्विजेभ्यो अददन् ।इति ।

नैमिषारण्ये राघवस्य अश्वमेध यज्ञकारणम् जानक्याः धराप्रवेशे-

वाल्मीकि रामायणे उत्तरकाण्डे लिखितम् यत् रावण वधोपरान्त मर्यादापुरुषोत्तमः रामः मर्यादा रक्षणाय ब्रह्महत्या दोषनिवारणाय च नैमिष भूमौ अश्वमेध यज्ञस्य[2] समारंभः अकरोत् । तस्मिन्यज्ञे वाल्मीकाश्रमे वर्द्धितौ लवकुशौ आगतौ ताभ्याम् वाल्मीकि रामायणस्य पाठम् श्रुत्वा विस्मितः रामः सीताग्रहणे पुनः शुद्धताया[3] परीक्षणम् इच्छितः तदा भगवतीसीता अकथयत यदहं शुद्धा पतिव्रता[4] भवामि तदा मे जननी धरित्री निजे क्रोडे मम स्थानं देहि । सर्वतो गे पश्यन्नेव भगवती सीताभूमिगौ समाहिता । यत्र सीता समाहिता तत्स्थाने अद्यापि नैमिषारण्ये जानकी कुंडेति स्थान प्रसिद्ध वर्तते ।

---

१- स्कन्द पु० तु०ब्रह्मखण्ड ३५-४० श्लोक ८-४७

२- वाल्मीकि रामायण उत्तरकाण्ड अ०९१ श्लोक १५

३- वा०रा० ९७ अ० श्लोक १०

४- वा०रा० ९७।१५

नैमिषे परशुरामस्य तपश्चर्या-

बाल्यावस्थायां परशुराम: शुभे चक्रतीर्थस्य समीपे विष्णु-मारावयितुम् तपस्तप्त: इति अध्यात्म रामायणे लिखितम् यथा-

बाल्ये हं तपसा विष्णुमाराधयितुम् व्रज
चक्रतीर्थशुभं गत्वा तपसा विष्णुमव्ययम्
अतोषयन् महात्मानं नरनारायण मनन्यधी[१] ।

द्वापरयुगे नैमिषस्य महत्वम्- वेदव्यासेन पुराण रचना

द्वापरे अत्र व्यासमुनिना वेदान् विभज्य पुराणसंहितानाम् रचना कृता । एषा रचना भूमि: नैमिषारण्ये गोमती तटे व्यासगद्दी नाम्ना प्रसिद्धा वर्तते । विष्णुपुराणे लिखितम् यथा-

द्वापरे द्वापरे विष्णुं व्यासरूपीमहामुने:
वेदमेकं सबहुधा कुरुते जगतो हित: ।।[२]

श्री सूतेन पुराण प्रसार:-

श्री व्यासस्य प्रमुख शिष्य: सूत मुनि: व्यासकृत पुराणान् शौनकादि मुनीन् प्रति बारम्बारं धर्मसत्रे सत्र व्याजेन बहुश: वर्णित: । यत्स्थाने स्थित: श्रीसूत: पुराणप्रवचनं अकरोत् तत्स्थानं अद्यापि नैमिषारण्ये सूतगद्दी नाम्ना प्रसिद्धम् वर्तते ।

---

१- अध्यात्म रामा०बा०का० ७।२१-२२
२- विष्णु पु० ३।३।५ वकूर्म पु० १।५०।६-१०

ब्रह्मपुराणे १।११।१५ स्कन्दे २।१।८-९ गरुडे १।१।
पद्मपु० १।१।६-११ अग्नि पु० १।४।कल्कि पु० २६।२ इत्यादिस्थाने
नैमिषे सूतागमनं निरूपितम् ।

पाण्डवानाम नैमिषागमनम्-

पाण्डवा: अज्ञातवाससमये इतस्तत: गुप्तस्वरूपे भ्रम नैमिषार-
ण्ये अपि आगतवन्त: महाभारते अस्योल्लेखम् वर्तते यथा-

ते तथा सहिता वीरा वसन्तस्तत्र तत्रह
क्रमेण पृथिवी पाल नैमिषारण्य मागता:
ततस्तीर्थेषु पुण्येषु गोमत्या पाण्डवा नृप ।[१]
कृताभिषेका: प्रददुर्गाश्च वित्तं च भारत ।।

अद्यापि गोमती तटे पाण्डवकिला प्रसिद्धवर्ती ।

बलराम यात्रा-

बलराम: कुरूणां सह पाण्डवै: युद्धोपमं श्रुत्वा तीर्थाभिषेक
व्याजेन पर्यटन नैमिषारण्यमागतवान् । यत्र ऋषय: सत्रमासते दीर्घ-
सत्रिण: मुनय: तत्रागतमभिप्रेत्य यथान्यायं उत्थाय प्रणम्य अर्चयेन च
अभिनन्दिता: । किन्तु व्यास्थानासने रोमहर्षण: सूत: अकृतप्रह्वणांजलि:
बलरामेन दृष्ट: तदा बलराम: चुकोप ।वाण्या तं मत्स्थिन करस्थेन
कुशाग्रेण तम् अहनत् ।हाहेति वादिन: खिन्नं मानसा: सर्वे मुनय:

१- महाभारत वनपर्व ९५।१

संकर्षणप्रति ऊचुः - सत्रसमाप्तिपर्यन्तं अस्माभिरस्य ब्रह्मासनं दत्तम् त्वया अजानता एव ब्रह्मवधः आचरितः अतएव प्रायश्चित्तं कर्तव्यम् त्वया। श्री बलरामेण मुनि व्यवस्था स्वीकृत्य लोकानुग्रह काम्यया सूतपुत्रम् सूतस्थाने स्थापितः तथा इल्वलाख्य दानवसुतम् विख्वलं मूसलेन हत्वा पर्वकाले सत्रदूषणा विघ्नं नाशितवान्।[1]

गर्ग मुनेरागमनम्-

गर्गसंहिताप्रणेता गर्गमुनिरपि योगभास्कर श्री शौनकस्य दर्शनार्थं नैमिषारण्ये आगतवानिति गर्गसंहितायाम् वर्णितम् यथा-

कदाचिन्नैमिषारण्ये श्री गर्गो ज्ञानिनांवरः।
आययौ शौनकंद्रष्टुं तेजस्वी योगभास्करः।[2]

सान्दीपन मुनेरपि संध्या वन्दनकार्यं अत्र वर्णितं यथा-

तत्रैव गोमती तीरे चक्रतीर्थे वै धृतव्रताः।
सांदीपन्नोऽपि तत्रैव प्रातः संध्या समाचरेत्॥[3]

---

1- श्रीमद्भागवत पु० १०।७८।२०-४०

2- गर्गसंहिता गोलोक खण्ड १।४

3- स्कन्द पु० अवन्ती १।६२।१०-३२

कलियुगे नैमिषस्य महत्वम्-

कलि कालोत्पन्नं भयनिवारकं तीर्थं नैमिषमिति वर्तते । एतद्विषये श्रीमद्देवीभागवतपुराणे लिखितम् एकदा नैमिषारण्यवासिनः कलिदोषत्रस्ताः ऋषयः ब्रह्माणं समीपं गत्वा कलिनिवारणोपायं अपृच्छत्-वन्तः । तदा ब्रह्मा ब्रह्मनोमयं चक्रं निर्दिष्टं उक्तं च यत् तस्यानुसरणम् कृत्वा गच्छन्तु भवन्तः यत्रास्य नेमिः शीर्यते स देशः पावनं भविष्यति तत्र कलेः प्रवेशो ऽपि कदाचित् न संभविष्यति ।

ऋषय तन्मनोमय चक्रस्यानुसरणं कृत्वा अत्र गताः यत्रैव तच्चक्रस्य नेमिः शीर्णा संजाताः तेनेदं परम पावनम् क्षेत्रं नैमिषं प्रोक्तं ।[1]

ब्रह्मवैवर्तपुराणेऽप्येवमुपवर्णितम् यथा-

इदमेवोत्तमं क्षेत्रं निमिषं क्षेत्रमाहितम् ।[2]
अस्पृष्टं कलिना नूनं परमक्षेत्रदायकम् ।।

महाभारते ऽपि लिखितम् यथा-

भयात्कलि विशीर्णेण अवर्तस्यामि भयाद्विभिः
सर्वे देवर्षिणिं त्यक्त्वा नैमिषारण्यमाश्रिताः ।

---

१- श्रीमद्देवीभागवत पु० १।२।२७-३२

२- ब्रह्मवैवर्त पु० १।३।८ एवं ११।२८

महाभारतयुद्धोपरान्तप्राय:मानवानां मनसि कलि: (वैर-भावना) अविरासीत् ।तेसर्वे स्वार्थमधिकृत्य प्रेमसंम्बधान् विस्मृत्य कलिग्रस्त: संजात: ।यथाच अस्त्र शस्त्र प्रयोगैत्यव विषाक्त वायुना स्वम् जीर्ण शीर्ण गलित शवैत्पन्न दूषित वायुना पृथ्वीपिदूषिता जाता । तत्कालिक जीवित प्राणिन: अपि रोगग्रस्ता संजाता: तदा ऋषि मुनिसंज्ञामिधा: मानवा: जीवनचिन्तापरा: ब्रह्मण: शरणम् ययु: । तेन निर्दिष्ट भूमि: नैमिषारण्यम् प्राप्य यज्ञादिकृत्यैन वायुप्रदूषणनापहारितवान तथा पुराण प्रवचनादि बहु आयोजनैन कलिमावना दूषणमपि अपाकृता: ।यथा ऋग्वेद: अष्टाशीति सहस्त्रसंख्यका: आसन् । मानवमन सन्ताप निवारणाय मुनिभ्यो बहु व्रतकथादिनाम् परम्परागत चलनमपि आत्मशुद्धयर्थ आविष्कृत: ।तानि पुराणगतानि सन्ति । प्राय: पद्म मत्स्य महाभारतादि पुराणेषु व्रतकथानां वर्णनमुपलभ्यते ।

प्राय: सम्पूर्णव्रतकथानां आरम्भ: शुकशौनक सम्वादेन पुराण प्रारम्भवत नैमिषारण्यत: स्व भवति ।

एवं नैमिषारण्य: वैदकालिक[1] गोमती नद्या: कूलेस्थित: वर्तते ।यत चक्रतीर्थसंज्ञा विश्रुत: प्रसिद्ध सर: विद्यते कलियुगे गोमतीगंगायां चक्रतीर्थे च स्नानस्य महत्फलम् वर्तते स्कन्दपुराणे लिखितम् यथा-

दिने नैकेन गोमत्यां चक्रतीर्थे कलौ युगे ।[2]
त्रैलोक्य संर्वतीर्थै: स्नाता भवतिमानव: ।

---

१- ऋग्वेद १।८।८

२- स्कान्द पु० प्रभासखं० ४ द्वारिका माहात्म्य

गर्गसंहितायामपि लिखितम्-

तन्नैव सिन्धु सम्भूता गोमती या महानदी
यस्यां दर्शनमात्रेण ब्रह्महत्या प्रमुच्यते ।[1]

महाभारते लिखितम्-

नैमिषे चक्रतीर्थे[2] तु स्नात्वा भरतर्षभ
सर्वव्याधि विनिर्मुक्ता ब्रह्मलोके महीयते ।

योगिनी तंत्रे पि लिखितम्-

कलियुगे सर्वतीर्थानि कलिमात्र भयानि
किन्तु चक्रतीर्थं महातीर्थम् अस्य स्नानात् अनेकानिपातकानि नश्यन्ति तथा ग्रहपीडाश्च शमं यान्ति ।

अन्य च- चक्रतीर्थ महत्पुण्यं सर्वपापप्रणाशनम्
पतनं मध्य भागे तु पृथिव्याः सर्वतीर्थकः

नैमिषे सरस्वत्योद्भवः:-

अस्मिन् नैमिषारण्ये मुनिभिः ध्यानयोगेन कांचनाक्षी[3] सरस्वती माविभूतः । इति वामनपुराणे लिखितम् ।

---

१- गर्गसंहिता ...टीका खं० १०।७
२- महाभारत शान्तिपर्व ३४३
३- वामनपु० सरोमाहा० ३७।२२-२०

स्कन्दपुराणे प्रसङ्गोऽस: प्राप्यते यथा-

पुराऽभ्यस्तुतिनिविष्टया मार्कण्डेयमुनयो: सह नैमिषारण्ये[1]
सर्वे बादरायणिर्षी व्यासतापिता कुल नदीया कुमारा स्तुता ।

नैमिषे लिङ्गधारिणी ललितायाः स्थानम्-

आधारशक्ति: या परब्रह्मण: सहधर्मिणी परा शक्तिरित्युच्यते सा शक्तिप्रकारा क्रिया नैमिषत: उन्मेषनिमेषाभ्यां जगत: प्रलयोदयादिक्रिया व्यापार: करोति । एषा सनातनी शक्तिरेव आदि कल्पे देवीभागवतानुसार 'लिङ्गानि सर्वजीवानां स्वशरीरे निवेश्य च'[2] तथा गीता वचनानुसार 'जीवभूतां महाबाहो ययेदं धार्यते जगत्'[3] सा लिङ्गधारिणी शक्ति प्रपंच विस्तारे त्रिपुरा, षोडशी, ललितेति प्रभृति संज्ञा संज्ञिता जाता ।

एवंच सतीति प्रसिद्धा लोके । ननु सत्यङ्ग निर्दिष्ट अष्टोत्तरशतदिव्य देवीपीठमध्ये एष नैमिषारण्य: एको प्रसिद्ध देवी-पीठ: वर्तते ।

अथ च देवीभागवत, मत्स्य पुराणे लिखितम् -

'वाराणस्यां विशालाक्षी नैमिषे लिङ्गधारिणी'[4]

---

१- स्कन्द पु० ३।१।२५।६-८

२- देवी भा०पु० ३।४।५४

३- श्रीमद्भगवद्गीता ७।५

४- श्री देवी भा०पु० ७।३०।५५-५७ मत्स्य पु० १३।२६-२७

स्तोत्रवल्लरी निर्माता पं० रघुनाथशर्मणा पि नैमिषे लिङ्ग-धारिणी ललितायाः स्मरणम् स्वस्तोत्रे कृतः यथा-

अपि लिङ्गविधारिणिके ललिते सितनोलखरिद्वरसंगमे ।
अपि नैमिषकाननगे नवनी ननुनां प्रभुतां गिरिराज सुते[1] ।।

पुराण भूमि नैमिषारण्य एव वर्तते अतएव महत्व प्रतिपादनाय अस्य नैमिषारण्यस्य पुराणेषु प्रारम्भिक क्रमः नैमिषारण्यतः निर्दिष्टः यथा- नैमिषे निमिषक्षेत्रे ऋषय शौनकादयः[2] इति

श्रीमद्भागवतपुराणे-

सूतमेकाग्रमासीनं नैमिषारण्य वासिनः[3]
मुनयो दीर्घ सत्रान्ते पप्रच्छुर्दीर्घसंहिताम् ।
इति मत्स्य पुराणे तु ।

"लोमहर्ष पुत्र उग्रश्रवा सौतिः पौराणिको नैमिषारण्य[4] शौनकस्य कुलपते द्वादश वार्षिके सत्रे । सुखमासीनम्यगच्छद्ब्रह्मर्षीन् संशितव्रतान् । इति महाभारते ।

---

१- श्री स्तोत्रवल्लरी पं० रघुनाथशर्मा विरचित
२- श्रीमद्भागवत पु० १।१।४
३- मत्स्य पु० १।५
४- महाभारत पु० आदिपर्व १।१

कलिकाल विभीता:स्मो नैमिषारण्यवासिन:[1]।
कथया च पुराणं हि पावनं स्मृतम्।

ब्रह्म ,पद्म,अग्नि,गरुड,स्कन्द ब्रह्माण्ड,वाय्वादि पुराण ग्रन्थेष्वपि सूतं शौनक संवादेनैव पुराण कथारंभ: दृश्यते अतएव स्पष्ट तया पुराण भूमि नैमिषारण्यएव वर्तते[2]।

एवं नैमिषारण्य: भारतवर्षस्य तीर्थानाम मध्ये एको प्रमुख तीर्थस्थलं वर्तते।

नैमिषारण्यस्य तीर्थविषयकं महत्वप्रदर्शनाय पुराणेषु बहुवर्णनमुपलभ्यते यथा-

प्रभासं मानसं पुण्यं पुष्करादिमहत्सर:।
पुण्यं च नैमिषं तीर्थं बाहुदां करतोयिनी[3]।।

---

१- श्रीमद्देवीभागवतपु० १।२

२- ब्रह्मपु० १।१।१६, पद्मपु० २।१।२-८,अग्निपु० १।२
गरुड पु० १।३।५ स्कन्द पु० १।३-५,ब्रह्माण्ड १।२।८
वायु १।१।१६६-१६७

३- महाभा०अनु० २६।३२ महाभा०अनु० २६।६

पुष्करं च प्रभासं च नैमिषं सागरादिनम्
दैविका सिन्धुमार्गं च स्वर्णबिन्दुं विगाह्य च ।
चिरोध्याने विमानस्थ: सो प्यप्सरै भिष्टुत: ।

एतन्नैमिषाख्यं सर्वतीर्थ निर्णीतम् वर्तते[१] ।

नैमिषं विष्णुस्वरूप वर्तते[२] ।

एतत्सुपुण्यम् नैमिषम् भगवत: शम्भोरस्थानम् वर्तते[३] ।

---000---

---

१- मत्स्य पु० २२।१५
२- स्कान्द पु० रेवाखण्ड २०।२६
३- कूर्म पु० ४१ अ०

## पंचम कणिका

### लिङ्गधारिण्याः परास्यशक्त्या भेद वर्णनम्-

तन्मयते परा शक्तिः शान्त्यातीता शक्तेः पर्याय वाचक भवति ।

यो ब्रह्मरूप शिवः निष्कलः निराकारः कथ्यते तस्य सद्भावे अस्याः पराशक्तेर्योगिभावश्यकं वर्तते अन्यथा न तस्य मार्गं प्रतीयते क्वापि । अतश्चोपनिषदि वाक्ये 'परास्य शक्तिर्विविधैव श्रूयते' इत्युक्तम् ।

अस्याः पराशक्तेरंशेन शिवस्य सादाख्यमुद्भूतम् ।

शुद्धत्वात् पराशक्त्युद्भवात्त्व शिव इत्युक्तम् सूक्ष्मरूपेण ज्योतिरूपमिति तद्रूपं स्मृतम् । आदिशक्तिदशायां स्वयमुदितस्य समुद्भवं अतएव आदिशक्ति शान्तिरेव तस्याः पर्याय वाचकः ।

आदि शक्तेः अमूर्त्तत्वात् तद्रूपं कलाहीनं लिङ्गवद्भवेत् ।

कोटिसूर्यसम प्रभम् ज्योतिस्तम्भाकृति स्थितम्
तस्याद्यनन्तता मूर्तिः अमूर्त्तत्वादगोचरम गतम् ।
एतद्वै दिव्य लिङ्गं तु संसारे मूलमुच्यते ।
लिङ्गात् सर्वम् समुत्पन्नं तस्मिन् लयमपि प्रकीर्तितम् ।

अतएव अत्र लिङ्गनाम्ना सृष्टिसंहारमेव उक्तम् ।

एतत्तु परास्या लिङ्ग धारिणी शक्तेरभेदादमूर्तस्य वर्तते पराशक्तिपर्यायि वाचक: चिदा इच्छाशक्तिर्वै परायाः दशांशेन मूर्ति-सदाशिवरूपा: इच्छाशक्तेर्गुणत्वाच्च तस्मान्मूर्तिरुदाहृतम् मूर्ती भूतत्वात् कलायुक्तं रूपं प्रकीर्तितं । एतज्ज्वलदग्निसदृशममुद्दिश्य लिङ्गाकृति-जनितम् । तथापार्थिवे भागे तु स्वरस्य समन्वितं सर्वावयव संयुतम् बाल-वदनं त्रिनेत्रं वराभय चतुर्भुजम् कृपाण परशुहस्तं च स्वाम एकाननोपेतम् दिव्य लिङ्गाकृतिजनित यत् लिङ्गमूर्तिरुदाहृता । इति मूर्तिसदा-ख्यं पुनश्च कर्तृसदाख्ये परायाः पर्यायिक:प्रतिष्ठा ज्ञानेनैव ज्ञान-शक्ति दशांशेन कर्तृसदाख्ये परिणादितम् । ज्ञानस्य कर्तृस्वभावत्वात् कर्तारमिति कीर्तितम् ।

शुद्ध रूपत्वात् हि ज्ञानं स्फटिकाभासम् कथ्यते एतद् महादीप्ति-समन्वितम् महास्थूलं दिव्यलिङ्गं तन्मध्ये स्थितम् ईश्वरमूर्तिः सर्वकारणम् वर्तते । एवं तथोत्तरं कर्तृसदाख्य लिङ्गकम् वर्तते । बिन्दुरूपा पराशक्तिः पीठमिति उदाहृता तथा नादरूपः शिवः लिङ्गमिति उदाहृतः । नादः बिन्दु मध्यगतः वर्तते तथा च नादे सर्वमूर्तयः सन्ति । अतएवोक्तम् 'लिङ्गं तु जायते सर्वं जगत्स्थावरजङ्गमम्' अत्र लिङ्गे धारिण्या परास्या अभेदं निरूपितम् ।

---

१- वातुलाख्य तंत्र पृ० प० ३४-७२

स्कन्द पुराणेऽप्येवमुक्तम् यथा-

लिङ्गरूपो विश्वरूपः प्रादुर्भूतः सदाशिवात् ।
शिवा रूपी जगद्योनिः कार्यकारणरूपिणी ।
लिङ्ग रूपो च भगवान्निष्कलः सत्कारणवपुः ।
एका स्त्रियाः परा शक्तिः कृत्स्न विश्वस्य धारणा[1] ।।

कूर्मपुराणेऽपि इत्याशयः प्रकाशितः यथा-

दैवात्तदुत्थितम् सर्विण्या स्वाश्यां योनौ परःपुमान्[2]
आधत्तवीर्यं तस्मात्तु महदण्डं हिरण्मयम् ।।

श्रीमद्देवीभागवतेऽपि पराशक्तेः लिङ्गधारिण्या अभेद प्रदर्शने 'स च ब्रह्मस्वरूपा च नित्या सा च सनातनी यथात्मा च तथा शक्तिर्यथाग्नौ दाहिका स्थितिः' इत्यादि वर्णनम् कृतम्[3] ।

---

१- स्कन्द पुराणे मा०खं० १०।२४-२५
२- कूर्मपुराण ३।२६।१६
३- श्रीमद्देवी भागवत पु०

कूर्मपुराणे लिखितम्-

एष अव्यक्तः गुणसाम्याद् भूयोभूयः विकृतिमृच्छति महदादि गुणानामुत्पत्तिः परस्पर संयोगेन भवति । एवम् पंचविंशति गुणानेन अधिष्ठानभेदेन कथ्यते । यदा गुणाः गुणेषु लीयन्ते तदैका प्रकृति भूत्वा एतेऽपि बीजरूपे संभवति ।

गोपीनाथ कविराजमहोदयेन शक्ति उपासना अंके[1] त्रिगुणधारिण्या पराशक्तेरिदं निरूपितम् तेन लिखितम् - स्थूल सूक्ष्म कारणात्मकमिदं जगत् शक्तेर्विकार मात्रं वर्तते । शक्तेः त्रिगुणाम् (आत्मा, देवता भूत निर्गणाम् । अवस्थितानाम् अनुसरणं कृत्वा परिणामे जगदपि कारणादि त्रिभेदेषु संभवति ।

यदा शक्तिः बहिर्मुखी भूत्वा धर्मभावेन स्थूलत्वं गच्छति । तदा भौतिकजगतः आविर्भावो भवति ।

अतएव आत्मा देवता भूतश्च एकस्या अवस्थायाः त्रिविधावस्था सन्ति ।

एवं स्थूलकारणलिङ्गात्मकं त्रैविध्य जगदपि एकस्या मूल अवस्थायाः परिणामं विहाय नान्यद् भवति इति ।

वस्तुतः सत्त्यात्मकप्रकाशातिरिक्तं नान्यद् भाति । सूक्ष्म कारणं जगद् लिङ्गात्मकं सूक्ष्मं तथा इन्द्रिय गोचरं स्थूलं जगत्तानि शक्तेर्विभिन्न विकास धाराणि सन्ति । इत्यादि ।

---

१- शक्ति उपासना अंक पृष्ठ १००

कुलार्णव तंत्रे पि अत्यास्यप्रकटित यथा-

पराप्रासादमन्त्रेण सूक्ष्मेणाक्षराक्षरम् ।
अभिन्नंतत्त्वतोदेवि तात्पुर्वे यथानिल: ।।
बीजे ह्यङ्कुरस्तैलमन्नातुष्पं रसे पुनः ।
चन्द्रे ज्योत्स्नानल: काष्ठे पुष्पे गंधं जले द्रुत: ।
शब्दे वाणी शिवे शक्ति: शरीरे अर्चि: कठे रुचि: ।
शर्करायाञ्च माधुर्यं चन्दने च शीतलम् ।।
दर्पणे प्रतिबिम्बञ्च शरीरे चलन यथा
परप्रसाद मन्त्रे पि प्रपंचो यं तथा स्थित: ।
वट बीजे यथा वृक्ष सूक्ष्मरूपेण तिष्ठति ।
परा प्रसाद मन्त्रे स्मिन् कुलार्णवे पि तथा[1] ।।

अत्र शक्तिमतोरपि लिङ्गधारिण्या परया: ऐक्यं प्रदर्शितम् ।

योगिनी हृदयाख्य ग्रन्थे पञ्च सङ्केत: निरूपणप्रसङ्गे दीपिका टीकायाम् त्रिविध विमर्शे लिखितम् यथा प्रकाश विमर्श सामरस्य रूपिणी परा अस्यास्ति त्रिध: सङ्केत: " वेदेष्वपि अजामेकाम् लोहित शुक्ल कृष्णम्" इति परा विमर्शे श्रुतिप्रसिद्धा । सेतु बन्ध टीकायाम् परमाशा विमर्शे लिखितम्[2] -

---

१- कुलार्णवतंत्र उल्लास ३।५२-५५
२- योगिनी हृदयश्लोक ६-७ टीका

परमाज्ञा वेदान्तानि विधिनिषेधात्मक लिङादि वाक्या ।

एष शब्द भावनेति मीमांसकाः मन्यन्ते । सा हि त्रिपुरसुन्दर्या रूपैवेति सर्वत्र मीमांसावाद कौतूहले स्थापितः । उक्तंच कूर्मपुराणे 'सर्वेश्वरा पराशक्तिर्वेद संज्ञापुरातनी । ऋग्यजुःसामरूपेण सर्गादौ संप्रवर्तते । पुनश्च-

यदा सा परमा शक्तिः स्वेच्छया विश्वरूपिणी ।
स्फुरतामात्मनः पश्येत्तदा चक्रस्य सम्भवः ॥

दीपिकाटीकायाम् लिखितम् - ननु कथमक्रियात् परम शिवतत्त्वात् चक्र संभवति अत आह: -

यदा यस्मिन्काले प्राणिनामदृष्टवशात् स्वान्तः संवृत विश्व सिसृक्षया सैव पराशक्तिः विमर्शरूपिणी स्वेच्छया विश्व-रूपिणी विश्वं सृजति । शिवः तटस्थ उदासीन इत्यर्थः अत्र श्रुतिः 'न तस्य कार्यं करणंच विद्यते परास्य शक्ति विविधैव श्रूयते' ।

सेतु बन्ध टीकायामेतद् विषये लिखितम्- तत्र प्रलयेनामानन्त शक्ति कस्य ब्रह्मणः स्वरूप मात्रेण कांचित्कालमवस्थानं सुषुप्तिकाले जीवस्येव पूर्वसृष्टिदशायां ये नानाज्ञानानुध्यानन्त मुक्तिमप्राप्ता जीवका-शक्ती तददृष्टानि च पंचमहाभूतानि सूक्ष्मरूपाणि च कणश बीजे पटा इव सूक्ष्मरूपेण प्रलय कालीन ब्रह्मणि तिष्ठन्ति ।

सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ।
पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः ॥

इत्यादि श्रुति प्रसिद्धम् ।

ललितस्य:-

अग्निपुराणे ललितस्य प्रकाशनाय लिखितम् -

ललितं अंकुमायतिः शिरः पाणिरूपर कटिर भ्रुरिति-कृपात् अङ्गकान्निभृतादीनि प्रत्यङ्गान्यभिधानने । अङ्गं प्रत्यङ्गयोः कर्म प्रयत्न जनितं विना न प्रयोगः कृचिन्मुख्यं निरवधानं च तत् क्वचित् । आकम्पितं कम्पितं धुतंविधुतमेव च ।

परिवाहितमाधूतमवधूतमथा ञ्चितम् । निकुंचितं परावृत-मुत्क्षिप्तम् चाप्यधोगतम् ललितश्चेति विज्ञेयं त्रयोदशविधं शिरः ॥

अन्यत्रापि यथा-

शृंगार विलासौ माधुर्यस्थैर्यगाम्भीर्यमेव च

ललितश्च तथौदार्यं तेजो ऽष्टाविति पौरुषाः[2] ॥

कोशे ललितम् वटो (कामबीज विशेषः) अत एव ईप्सायाम् धातुना कर्तृ प्रत्ययेन शृंगार भावज-क्रिया विशेषस्य निदर्शनम् कृतम् । हलायुधे उक्तम् यथा-

सुकुमारविधानेन भ्रूनेत्रक्रिया करपादाङ्गविन्यासो ललितम्[3] ।

१- अग्निपुराण अ० ३४१

२- अग्नि पु० ३३९।३४

३- हलायुध कोश

सुकुमारविन्यासे मसृणं ललितम् भवेत् । सुमसृणं विलासा-वर्तैरापतन्ती वा लिम्पन्ती ललितललिता लोचनस्यांजनेन ।

विन्यस्यन्ती चरणकमले लीलया स्वैरयाते निःशङ्कं च प्रथम वयसा नर्तिता पङ्कजाक्षी । भूमैतादि क्रियाशील सुकुमार विधानैः कलपादाङ्गविन्यास तारुण्या ललितं विदुः ।

अनायासपूर्विधिष्टं स्याल्ललितं गति चेष्टितम् । विन्यास वर्तिताङ्गानाम भ्रूविलास मनोहरा सुकुमारा भवेद् यत्र ललितंतु-दीरितम् ।

तुलिलङ्गो पंचेषा ललयते ईप्स्यते इति लल+ कर्मणि क्त । इति राग विशेषे प्रयुक्तः ।

यथा–

प्रफुल्ल चम्पकमाल्यधारी युवति
युवति गौरी रस लोचना विनिःसृत
चरणमुद्रा प्रभावे विलास विशेषे ललितः ।
(पद्मंजरी)

छल विलासे इत्यस्य अपरैक मतेन अस्य अर्थं वा इति भरतः । (माघे ६-७६, किराते १०-५२

रघुवंशे[1] पि त्रिपुन्दरः तस्य विवाह कौतुकं ललितं बिभ्रत एव पार्थिवः । इति वर्णितम् ।

पद्मपुराणे दिव्यनाम प्रसंगाय-

लोकानतीत्य ललते ललिता तेन चोच्यते इत्युक्तम्[2] ।

ललिता सहस्त्रनाम भाष्ये-

शृंगार भावजन्य क्रियाविशेषा ललना ललिता । तेन शृंगार रसप्रधानेयं मूर्तिरिति ध्वनितम्[3] ।

भावनोपनिषदि लिखितम्-

सदानन्दा पूर्णा स्वात्मैव परदेवता ललिता[4]

विधरणेव नन्मैपि स्वात्मैव ललिता लौहित्यमेतत् विमर्शः इति लिखितम् ।

बह्वृचोपनिषदपि लिखितम् यथा-

सैवमात्मा ततो अन्यद सत्यमनात्मा । अत एषा ब्रह्म संवित्तिर्भावाभावकला विनिर्मुक्ता चिद्विद्या द्वितीयब्रह्मसंवित्ति सच्चिदानन्दलहरी महा त्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव

---

१-रघुवंश ८-१
२- पद्म पु०उ०ख० २४।२२२
३- ललितासहस्त्रनाम-भाष्य
४- भावनोपनिषद् २८ कल्याण शक्ति ३ अंक पृ०३४

विनश्यति । यदस्ति सन्मात्रम् । यद्विभाति चिन्मात्रम् । यत्प्रिय-मानन्दं तदेतत् सर्वाकारा महात्रिपुर सुन्दरी । त्वं चाहं च सर्वं विश्वं सर्वदेवता इतरत्सर्वं महात्रिपुर सुन्दरी । सत्यमेकं ललिताख्यं वस्तु तदद्वितीयमखण्डार्थं परं ब्रह्म ।

एषा देव्येकाग्र आसीत् सैव जगदण्डमसृजत् । कामकलेति विज्ञायते । शृंगारकलेति विज्ञायते । तस्या एव ब्रह्माविष्णुरुद्रान् अजीजनत् । सर्वेमरुद्गणान् गन्धर्वाप्सरसः किन्नरावादित्रवादिनः समन्तादजीजनत् । भोग्यमजीजनत् । सर्वंशाक्तमजीजनत् । अण्डजंस्वेदजं उद्भिज्जं जरायुजं यत्किंचित् प्राणिस्थावर जङ्गमं मनुष्यमजीजनत् ।

सैषापराशक्तिः । सैषा शाम्भवी विद्या कादिविद्येति वा हादि विद्येति वा सादि विद्येति वा रहस्यमोंवाचि प्रतिष्ठा सैषपुरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकालवस्त्वन्तरसङ्गान्महा-त्रिपुरसुन्दरी वै प्रत्यक्चितिः। पद्मपुराणे पातालखण्डे रासक्रीडायां नारदं प्रति श्रीकृष्णेनोक्तं-

या दुर्गा सैव ललिता सैव राधिका ।[1]
एतासामन्तरं नास्ति सत्यं सत्यं हि नारद ॥

---

१- पद्मपुराण पातालखण्ड

ललितायाःआविर्भावविषये मत्स्य पुराणे लिखितम्-

पुरादग्धेषु लोकेषु भूर्भुवःस्वर्महादिषु ।

सौभाग्यं सर्वभूतानामेकस्थानमभूत् तदा ।

वैकुण्ठं सर्वमादाय विष्णोर्वक्षःस्थले स्थितम्

ततः कालेन महतापुनः सर्गविधौ नृप ।

अहंकारावृते लोकेप्रधान पुरुषान्विते ।

स्पर्धायां च प्रवृत्तायां कमलासन कृष्णयोः ।

पिङ्गकारा (लिङ्गाकारा) समुद्भूता वह्निज्वालाति भीषणा

तयाभितप्तस्य हरेर्वक्षसस्तद् विनिःसृतम् ।

वक्षःस्थलं समाश्रित्य विष्णोः सौभाग्यमास्थितम् ।

रसं रूपं न तः यावत् प्राप्नोति वसुधातले

उत्क्षिप्तमन्तरिक्षे तद् ब्रह्मपुत्रेण धीमता ।

दक्षेण पीतमात्रं तद् रूप लावण्य कारकम् ।

बलं तेजो महज्जातं दक्षस्य परमेष्ठिनः ।

शेषंयदपतद्भूमावष्टधा त व्यजायत ।

ततस्त्वौषधयो जाताः सप्त सौभाग्यदायिकाः ।

इक्षवस्तरुराजश्च निष्पावाराजधान्यकम् ।

विकारवच्च गोक्षीरं कुसुम्भं कुङ्कुमं तथा ।

लवणं चाष्टमं तद्वत्सौभाग्याष्टक मुच्यते ।

पीतं यद् ब्रह्मपुत्रेण योगज्ञान विदा पुनः ।

दुहिता सा भवत् तस्य या सतीत्यभिधीयते ।

लोकानतीत्य ललित्याल्ललिता तेन चोच्यते ।

त्रैलोक्यसुन्दरीमेनामुपयेमे पिनाकधृक् ।

त्रिविक्रमसमा नद्यो भुक्ति मुक्ति फलप्रदा ।
नाथाराध्य पुमान् भक्त्या नारी वा किं न विन्दति ।[1]

पद्मपुराणे अग्निपुराणे भविष्योत्तरपुराणेष्वपि उपरोक्त कथाया: वर्णनम् उपलभ्यते ।

<u>ब्रह्माण्डपुराणे ललिता आविर्भावविषये विभिन्न हेतव: प्रदर्शिता:</u>

तत्र प्रथमं आत्मैव ललितेति निरूपण प्रसङ्गे लिखितम्-सदसत्कर्मरूपिणी अविद्याधारा अनादि: वर्तते । ध्यानाङ्गानि विना विग्रहधारिणी कुलपद्म निवासिनी शक्ति: ध्यानगम्या नेन्द्रियगोचरा वर्तते ।[2]

चिरानुष्ठानगौरवात् आत्मैक्यात् एषा (ललिता) व्यक्तिमायाति । इति ।

उपर्युक्तललिता शक्ति: आदौ ब्रह्मणो ध्यानयोगत: प्रादुर्भूता । देवतानामिष्ट सिद्धिदा एषा प्रकृति संज्ञा संज्ञिता भाति ।

---

१- मत्स्यपुराण ६०।१-१२ गीता प्रेस
२- ब्रह्माण्ड पु० ललितोपाख्यान हयग्रीव अगस्त्य सं०पु० १५८ श्लोक ४-५ वेंकटे० प्रकाशन ।

द्वितीयम् अवाङ्मनसगोचरम् सर्वसंमोहन जनकम् ललित-मोहिनीस्वरूपं अमृतमंथने उद्भूतम् । यद्दर्शनात् सर्वेशः ईशो ऽपि विमोहितः[1] ।

भंडासुरं हंतुम् त्रैलोक्यरक्षितुम्[2] तृतीयमन्यं रूपं महायागानलात् उद्भूतम् । ब्रह्माण्डपुराणे लिखितम् -

भगवतोपार्वत्येच्छया शिवकोपाग्निभस्मसात् गतं कामदेवभस्मं नीत्वा चित्रकर्मा गणेश्वरः चित्राकारं चकार । मन्मथ इव स शुशुभे: तत्कायात्ज्योतिर्गतः । चित्रकर्मप्रेरितः सः शतरुद्रियमजपत् शत रुद्रम् ननाम् । ततः प्रसन्न वृषध्वजः वरदातुम उपस्थितः । तथा तत्कामनानुसारं प्रतिद्वंद्वि बलार्धं तु मद्देहं प्राप्स्यति, तदस्त्रशस्त्राणि वृथाकुर्वन्ति नो मम[3] ।

तथेत्युक्त्वा किमपि विचार्य प्रभुः षष्टिवर्षसहस्राणि राज्यमपि ददौ । एतद्दृष्ट्वा तु धाता भंडिति भंडिति उक्तम् । तेन एषः भण्ड नाम्ना लोकप्रसिद्धः संजातः । एतेन भण्डासुरेण देवान् जित्वा त्रैलोक्ये स्व शासनं स्थापितम् ।

ततः विष्णुना देवहिताय विश्वविमोहिनी माया निर्मितः । तया भण्डासुरः विमोहितः । पुनश्च नारद प्रेरणया पराशक्त्याराधनाय महायाग विधानेन स्व शरीरमांसैः होतुमिच्छन्तः एको अनुपमः चक्राकारः तेजपुंजः प्रादुर्भूत । तन्मध्ये उदयार्क समप्रभाम् देवीं अपश्यन् । एता

---

१- ब्रह्माण्ड पु० ललितोपाख्यान अध्याय आन्त्य सं० श्लोक ६

२- ,, ,, ,, ७-९

३- ,, , ,, (८९)

देवी ब्रह्मविष्णु शिवात्मिका आज्जीवनकरी आनन्दरससागरा, शरीन्दुशिरसोभा इव भाति। जपाकुसुमसंकाशा रक्ताम्बरा सर्वाभरण संयुता शृंगारैकरसाल्या चेक्षु पाशांकुशेक्षुकोदण्डपंचबाणालंकृता कृपातरंगितापांग नयनालोककौतुकीव विभ्राजसीत्। इयमेव त्रिपुरसुन्दरी ललिताख्या पराशक्ति वर्तते।

देवा: तान् स्तुत्वा तया सहायेन लब्धकामा: संजाता:।

एवम् ललिताम्बा रतिप्रार्थनासिता परिणामत: मदनांकुर: मन्मथ: पुनर्देहधारी अभवत्[1]।

आगमदृष्ट्या ललिता रहस्यम्-

आगमदृष्ट्या श्री विद्या ललिता राजराजेश्वरी महात्रिपुर सुन्दरी बाला पंचदशी षोडशीति संज्ञाभि: विख्याता भवति। एतेन वदि उक्तम् "आत्मैव त्रिपुरात्मा ललिता लौहित्यं तद्विमर्श:

आत्मशक्ति: श्री विद्या ललिता कामेश्वरी महात्रिपुरसुन्दरी भाति। सा कामेश्वराङ्के स्थिता वर्तते। शुद्ध उपाधिरहितम् आत्मैव महाकामेश्वर:। सोपाधि पूर्ण शुद्धात्मैव पर देवता त्रिपुरसुन्दरी ललिता। आस्थौ यद् यत् उपासकस्यात्मा अन्तर्यामी वा तद् सदानन्दोपाधिपूर्णैव ललिता।

---

१- ब्रह्माण्ड ललितोपाख्यान पृ० २८० से ४५६ वेंको प्रकाशन

सच्चिदानन्दस्वरूप धर्मत्रयनिर्मुक्तां धर्मिमात्रां तदेव स्वात्मा श्रीविद्याललिताख्य: आधारभूत कामेश्वर: परदेवता स्वात्मना अभिन्नो सत्यपि अन्त:करणोपाधिकात्मा उपासक तथा च सदानन्दोपाधिपूर्ण आत्मा उपास्य: एवम् सर्वथा निरुपाधिकमात्मा महाकामेश्वर: । इति ।

श्री कामेश्वर- कामेश्वर्यो: यद् एकतार्थं ध्यानं कृहस्याभिदं- लौहित्यमेतस्य सर्वस्य विमर्श:[1] महाकामेश्वर: ललिता च एतत्सर्वविमर्श स्वात्मनि अनुसंधानकार्यमेव ललिताख्य: एकत्वभावना भवति ।

अत्र निरुपाधिक कथनेन कैवल्यस्य तथा सदानन्द पूर्णेति कथनेन धर्मविशिष्टत्वस्य प्रतीतिर्भवति । केवलविशिष्टौ आधाराधेयावेव वस्तुत् सिद्धौ ।परस्पर तादात्म्य सम्बन्धेन युक्तौ न तु भेदघटित संयोगादि सम्बन्धा: ।

प्रकृतौ कामेश्वराङ्कस्थ निलया कामेश्वरीति स्थूलविग्रहे भेद सम्बन्ध एव प्रतीयते किन्तु रहस्य दृष्टौ शिवशक्ति: सामरस्यात्मक सम्बन्ध: । हरदादव पट एव शोभते । एवम् एकतार्थस्यभावना वासना एव वर्तते । यद् कामेश्वर्याश्चतुर्भुजासु पाशाङ्कुशेक्षुधनु पुष्प बाणानाम् ध्यानं विहितं तद् षट्त्रिंशत्तत्त्वेषु प्रीतिनामधारा तत्रैव पाश: । बन्धकत्व धर्मेण सह साम्यत्वात् तदेव राग: श्रीमाता पाशरूपे धारयति ।

---

१- भावनोपनिषद् सूत्र २८

रागः पाशः[1] द्वेषोऽङ्कुशः[2] मनो धनुः[3] संकल्पविकल्पात्मक क्रियारूपकः[4]। शब्दस्पर्शादि पंचतन्मात्राणि पंचपुष्पबाणाः। इति भावनोपनिषदि लिखितम्। उक्तञ्च शक्ती शास्त्रे -

इच्छा शक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम्
क्रियाशक्तिमये बाण धनुषी दधदुज्ज्वलम्।

इत्याद्युक्तम्।

—:::—

---

१- भावसूत्र २३
२- भावसूत्र २४
३- भाव सूत्र २२
४- भाव सूत्र २६
शक्तिअंक कल्याण पृष्ठ ११४-११५

## अष्टम कण्डिका

**कुण्डली शक्ति परिचय:-**

भास्करराय प्रणीत ललिता सहस्रनामस्य ग्रन्थे लिखितम्- कुण्डलं अस्यास्ति इति कुण्डलिनी आकृत्या भुजङ्गी वा । तत्स्वरूपं च तंत्रराजे- मूलाधारस्थ वह्न्यात्म तेजो मध्ये व्यवस्थिता । जीवशक्तिः कुण्डलाख्या प्राणाकारात्र तैजसी ।

प्रसुप्ता भुजगाकारा त्रिरावृत्ता महाद्युतिः ।
माया शीर्षां नदन्तीं तामुच्चरन्त्यनिशं सती ।

कुण्डलाकार मध्यदेशे सा यदा कण्ठस्य तु विधाय मूर्धनि-स्थैर्न ध्वनिं तदा मुनिरित्यादि ।

**नाम निर्वचन देवी पुराणे-**

यतः कुण्डलाकारा कारा कुण्डलिन्युच्यते ततः सा इति । यतः वाग्भवबीजस्य कुण्डलिनीति संज्ञा । तद्रूपा सिरा तन्तु कमलनालं तदेव तन्तुतनीयसी अतिशयेन कृशा श्रुतिः । नीवारशूकवत्तन्वी पीता भास्वत्यणूपमेति श्रुतेः ।

**वामकेश्वर तन्त्रे-**

भुजङ्गाकाररूपेण मूलाधारं समाश्रिता शक्तिः कुण्डलिनी नाम बिसतन्तु निभा शुभा ।

---

१- ललिता सहस्रनाम श्री भास्करराय प्रणीत पृ० १७३-१७४

मूलकन्दं फणाग्रेण दृष्ट्वा कमलकन्दवत् ।
मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रं समन्विता ॥
पद्मासनगता स्वस्था गुदमाकुंच्य साधकः ।
वायुमूर्ध्वगतं कुर्वन्कुम्भकाविष्ट मानसः ।
वायुघाताद् वसाग्निः स्वाधिष्ठानगतो ज्वलन्
ज्वलनाघात पवनाघातैरुन्निद्रितो हिराट् ॥

ब्रह्मग्रन्थिं भिनत्त्यतः । रुद्रग्रन्थिं विभिद्य कमलानि भिनत्ति षट् । सहस्र कमले शक्तिः शिवेन सह मोदते । सा चावस्था परा ज्ञेया सैव निर्वृति कारणमिति ।

<u>बह्वृचोपनिषद्यपि श्रुतिः–</u>

उत्तिष्ठ मा स्वप्न अग्निमिच्छध्वं भारताः । राज्ञः सोमस्य तृप्तासः सूर्येण सयुजोषसः इति ।

इयम् बोपनिषत् सर्वापि भारती परैव उत्कृष्टा दर्शनात् । आरुणोपनिषदुक्तेति स्वामिना सहस्रनाम पाठास्य ।

दुश्चिन्नास्तकानामुपास्यत्वात् तस्या शुक्तिरियं भारती सरस्वतीति वैदिके वचनं । तत्सम्बन्धिनो भारताः हे भो विपश्चितकाः उत्तिष्ठ उपास्ति कुरु ब्रह्मणि स्वप्नवशः मा भूत् ।

अन्यथाविनयथो वा कुण्डलिनी कर्णिकाविर्भावात् योजनीया ।

अग्निं स्वाधिष्ठानगताग्निमेवोभयां कुण्डलिनीमिवुद्धां । ब्रह्माण्डेनाहत्योत्थापयध्वं । सूर्येण सुषुम्ना विशुद्धनाडन चक्रमध्य-वर्ति सूर्यमण्डलेन तेनाग्निना । उभाभ्यां दग्धस्य द्रुतस्येति यावत् । सोमस्य उभया राजराजेश्वर्यावेष्टितस्य राज्ञो राजराजेश्वरस्य सदृशाराय चन्द्रमण्डलान्तर्गतस्य वा बर्हिर्मुखेन तृप्तासो [वा?] तृप्यत् ।

अग्नि कुण्डलिनीमुत्थाप्य सूर्यकुण्डलिन्या संयोज्य नाम्नां चन्द्रमण्डलशिवशक्तिसामरस्येन द्रावयित्वा तदुत्थामृतधाराभिः सिञ्चति तदस्य नाडीमार्गेण सूर्यं तृप्तं भवतीत्यर्थः ।

तृप्तास इत्यत्र 'बाला' इत्यनुभावः तदा 'कुमारी' मन्यते यथोचित पतिव्रता । आविष्टं यत्नेन क्रियते अग्निजनुरेषति । कुः पृथ्वी तत्त्वं क्रियते होयते यस्मिन् स्तत्कुलकुण्डं कुमारं तत्सम्बन्धिनी कुमारी कुल कुण्डलिनी ।

मन्यते मन्दस्वनेन नदति । अतएव रोदनावस्था साहित्या-कुलकुण्डा दुत्थापनस्योत्थापितस्वादोत्थाप्यकुमारीत्युच्यते । यौवित तरुणी तारुण्य दशया सूर्योपादानादुपरिभागे साहित्यात् । पतिव्रता पतिरुद्रस्वदृढं कामेश्वरं कृत्वति कुण्डलते । स्वोदृतं [illegible]-त्यादि प्रयोगात् । एवं कौमार तारुण्य सम्भोगैरविष्टं कुलं पीयूष-वर्षमन्यदपि यत्किंचित् साक्रियते करोति तदर्थमग्निः स्वाधिष्ठान्-गतानुवेधति साक्षाति अग्निज्वालैनैव चन्द्रमण्डलद्रवादिति भावः ।

सनत्कुमार जी-

कुण्डलिनी बन्धादिस्थानमागता सती सुधावृष्टिं कुर्वत्य-स्मान् सुस्नातान् करोतीत्यर्थः ।

शुक संहितायाम्-

पावकस्य बहिर्भागे तारोज्योति सामरसाविधो: सोममाना सुधाधारा विश्वाविष्ठलयेदा ।सुधा धारा कुण्डलिनी सुस्नानस्मां करोतु इति ।अत्र सुधा यथा तथाकरोति वरणपदस्यार्थः एवं वशिष्ठादिसन्नीष्युपबृंहणानि दृष्टव्यानि ।

अन्यत्र-

शक्तिपिण्ड कुण्डल्यादिशब्दवाच्यो मूलाधारस्थः - शक्तिःकुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां ज्ञात्वेत्थ न पुनर्विशन्ति जननीगर्भेऽर्भकत्वं नरा[1]

गीताप्रेसेण प्रकाशिते शक्ति अंके लिखितम् यथा-

सुप्ता नागोपमा ह्येषा स्फुरन्ती प्रभया स्वया
अहिवत् सन्धिसंस्थाना वाग्देवी बीजसंज्ञका ।
ज्ञेया शक्तिरियं विष्णोर्निर्भया स्वर्णभास्वरा
सत्त्वं रजस्तमश्चेति गुणत्रय प्रसूतिका ।।[2]

---

१- ललिता सहस्रनाम भास्करराय प्रणीत भाष्य पृ० २११

२- शक्तिअंक गीताप्रेस पृष्ठाङ्क ४५५-४५६

एषा कुण्डलिनी शक्तिः व्यापका परमात्मनः शक्ति बन्धाय:
हठयोगप्रदीपिकायामुक्तम्-

कन्दोर्ध्वं कुण्डलीशक्तिः सुप्ता मोक्षाय योगिनाम् ।
बन्धनाय च मूढानां यस्तां वेत्ति स योगवित् ॥

शारदा तिलकाख्य ग्रन्थे लिखितम्-

चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मतिः ।
तत्प्राप्य कुण्डलीरूपं प्राणिनां देहमध्यगम् ।[1]
वर्णात्मनाविर्भवति गद्यपद्यादिभेदतः ॥

शिवपुराणे लिखितम्-

शिवाभिन्नापराशक्तिः सम्पूर्णशक्तीनाम् समष्टिरूपा वर्तते । सैव शक्तिस्तारस्थाना निखिल कार्याणाम् मूल प्रकृतिश्च ।[2] एषैव कुण्डलिन्युच्यते । विशुद्धा व्यापरा भगवतीति ।

देवीभागवते लिखितम् यथा-

तदूर्ध्वं कुरु शिखाकाशे कुण्डली रक्तविग्रहा:[3]

---

१- शारदा तिलक प्रथमपटल श्लोक १३-१४
२- शिवपु० वायवीयसंहिता अ० २६ गीताप्रेस
३- देवीभागवत पु० ७।३५।३३

योगवाशिष्ठे योगदशानिरूपणप्रसङ्गे मूलाधारात् आत्म-बोध: निशिष्टतया वर्णित: । स कुण्डलिनी जागरणम् आत्मप्रबोधस्य कारणं निर्दिष्टं । उक्तं च- महाविनि: कुण्डलिन्या: जनोदय: स जाग्रदि ज्वष्टिवित्य कारणम् स्वप्न स अनुभूते चिन्मय् भासते । चिन्मात्रैव सम्पूर्णम् वर्तते । चिति:सर्वा अन्तेवा अदाख्या सूर्य अति-दीप्ति सम्पन्ना ।

उदिति सम्पादि: अखण्डाखण्डैकमिव स्वयंप्रकाशा सर्वरूपा कुण्डलिनीति[1] ।

<u>कुण्डलिन्या: स्वरूप विवेचने योगवाशिष्ठे उक्तम्-</u>

शरीरे प्रसुप्ता: विस्मातिशासा प्रवानाशनत्प्रसारिता मूलाधारादारभ्य ब्रह्मरन्ध्र[2]पर्यन्तम् षट्चक्रेषु प्रविष्टामूलाधारे सार्धत्रिवलय वेष्टनान्मासुप्ता कुण्डलिनी शक्तिसंपन्ना मुमुक्षेति।

गन्धर्वतन्त्रानुसार मूलाधारस्य कुण्डलिन्या: सुप्तावस्थागते सति मन्त्रयन्त्रपूजादिका: को पि क्रियासिद्धिर्न भवति ।

---

१- योग० नि०पू०सं०७० पृ०सं०४८–४९

२- योगवा० सु० ८० पृ० ५६

३- मूलपद्मे कुण्डलिनी यावन्निद्रायिता प्रभो
तावन्न किंचित् सिद्ध्येत मन्त्रयन्त्रार्चनादिकम् ।।
गन्ध० ५।२६।२७

घेरण्डसंहितायामपि लिखितम्-

यावत्कुण्डलिनी शक्तिः शरीरे सुप्तावस्थायाः[1] पशुतुल्यैव वर्तते अनन्तयोगाभ्यास करणे पि तत्वसाक्षात्कारः न भवति ।

पुण्यकर्मयोगेन यदि[2] कुण्डलिनी जागरणं जायते तदा मंत्र यन्त्रार्चनादयः सिद्ध्यन्तीति ।

कुण्डलिनी तत्वस्य विवेचने लिखितम्-

कुण्डलिनीपराशक्तिः शब्दब्रह्म महात्रिपुरसुन्दरी कामकलेति । सा मातृका रूपिणी वर्णात्मका सर्वदेवशक्ति विश्वमयी च । अतएव सच्चिदानन्दब्रह्मस्वरूपात्मना ज्ञानी कुण्डलिनी विश्वसृष्टिकारिणी विश्व रूपा च । अतएव चैतन्यस्वरूपा देवता । एषा विश्वातीता ज्ञानस्वरूपा भाति[3] । एषा कुण्डलिनी तान्त्रिक साधकानाम् इष्टदेवता[4] ।

---

१- यावत् सा निद्रिता देहे तावज्जीवः पशुर्यथा ।
   ज्ञानं न जायते तावत् कोटियोगं समभ्यसेत् ।(घे०सं०३।५५)

२- जागर्ति यदि सा देवी बहुभिः पुण्य संचयैः ।
   तदा प्रसादमायान्ति मन्त्रयन्त्रार्चनादयः ।।(ग०त०४।६७-६८)

३- ध्यायेत्कुण्डलिनीं देवीं स्वयम्भू लिङ्गवेष्टिनीम् ।
   श्यामां सूक्ष्मां सृष्टिरूपां सृष्टिस्थितिलयात्मिकाम् ।।
   विश्वातीतां ज्ञानरूपां चिन्तयेदूर्ध्ववाहिनीम् (षा०नि०११श्लोकटीका १४।२)

४- निवेष्टदेवतारूपा देहसंस्था च कुण्डली ( शा०तं० १४।२)

परदेवता कुण्डलिनी सर्वत्रगामिनी विश्वरूपिणी नित्यानन्दा शिवस्वरूपा त्रिगुणा प्रकृतिश्च अत्र ज्ञातव्यम् यदेषा प्रकृतिः सांख्यकी प्रकृतिरिव न जडा परन्तु शैवदर्शनानुसारं शिवशक्ति रूपे स्वच्छा चेतन प्रकृतिरिति मंतव्यः ।

शैवतन्त्रकारशङ्करैरप्युक्तं यथा-

यदुन्मीलनशक्त्यैव विश्वमुन्मीलति क्षणात् ।
स्वात्मायतनविश्रान्तां तां वन्दे प्रतिभां शिवाम् ॥
(ह०प०आ०   )

अथ कुण्डलिनी देशकालानवच्छिन्ना संपूर्ण शिरःपरिव्याप्ता शब्दार्थेन स्त्रीपुन्नपुंसकादिलिङ्गव्यापिनी च । परापरविभागे पराप्रकृतिरेषा योमितान् तत्वपदे नातीतत्वरूपिणी तथा सपान्यजन मूलाधारे स्फुरन्ती विद्युदिव सार्धत्रिकारकुण्डलीव शिवमावेष्ट्य प्रतिष्ठति सा कुण्डलिनी । शारदातिलकानुसारं कुण्डलिनी चैतन्यरूपिणी सर्वत्रगामिनी विश्वरूपा नित्यानन्दा, शिवरूपा शिवसन्निध्यवस्थिता[1] च । शक्तिः उभय स्वरूपिणी उक्ता- चित् अचिच्च । चिच्छक्तिः उभया सक्रिया निष्क्रिया च । शक्तेर्निष्क्रियावस्थायां प्रकाशरूप शिवो पि न प्रकाशते । क्रियावस्थायाम् तु आत्म प्रकाशं करोति । अचित् शक्तिः परिग्रहोपादान शक्त्यर्थं इति नाम्ना प्रसिद्धा भवति । वैष्णवमते शुद्धतत्वः तांत्रिकबिन्दु महामाया वा इति मंतव्यः ।

---

१- तत्वेदान्तरूपा सा सर्वा विश्वरूपिणी ।
शिवसन्निधिमासाद्य नित्यानन्दगुणोदया ।
------ सूर्यकोटिप्रतीकाशचन्द्रकोटिसुशीतला ।शा०ति० १।५१-५२

२- मूले त्वात्मशक्तिः कुण्डली परदेवता
शयिता भुजगाकारा सार्धत्रिवलयान्विता । हे०सं० ३।४४
प्रसुप्तभुजगाकारा त्रिरावर्ता महाद्युतिः (ना०पा० २०।६५

अशुद्धाध्वनिसृष्टि: ब्रह्माण्डेन सह मायिकविश्वं प्रकाशयति । शुद्धचित् शक्ति: कुण्डलिनीत्युच्यते ।

तंत्रशास्त्रानुसार जीवशरीरे मूलाधारे परदेवता आत्मशक्ति: कुण्डलिनी सर्पकुण्डलाकारे शयति । सार्धत्रिवलया कुण्डली अस्या: ।

एषा पद्मतन्तु[1] निभा दीपना सर्वेषां जननी च ।

स्वयम्भूलिङ्गं कुण्डलिनी च- शाक्तानन्दतरङ्गिण्यामुक्तम्-

त्रिकोणमध्यस्थ अधोमुखम् स्वयम्भू लिङ्गम् कामबीज- परिस्थितम् । पद्मतन्तु निभा सूक्ष्मा जगन्मोहिनी कुल कुण्डली स्व- मुखेन मूलाधारस्य[2] स्वयंभू लिङ्गस्य मुखम् मृदुभावेन आच्छाद्य अवस्थिता भवति ।

स्वयम्भूलिङ्गम्[3] अधोमुखम् कुण्डलिनी ध्यानेनस्थान । नोक्ते परदेवता कुण्डली अधो वक्त्रा ऊर्ध्ववक्त्रा चाप्युक्ता विद्युल्लेव एषा मूल (स्वयम्भूलिङ्ग)मुखमाच्छाद्य सदा शेते ।

---

१- पृथ्वन्द मुक्ताकारा पद्मतन्तुनिभा शुभा ।
सर्वेषां जननी प्रोक्ता सूर्यकोटि समप्रभा ।।ष०नि०श्लो०५०शंकरटीका

२- स्वयंभू लिङ्गं तन्मध्ये सुरक्ष्मुपश्चिमाननम् ।
ध्यायेच्चपरमेशानि शिवश्यामल सुन्दरम् ।। शा०त०७०४
अयं स्वयंभू कामबीजे परिस्थित: ।

३- श०नि०श्लो०१० ।

४- अधोवक्त्रस्थिता देवी ऊर्ध्वं पुच्छादिशोभना ।
विद्युल्लताकारा कुण्डली परदेवता ।
परिस्फुरति सर्वत्र सुप्ताहि मुक्ताकृति:
ब्रह्मद्वारं मुखं नित्यं मुखेनावृत्य तिष्ठति ।।कु०श्लोक १०

शिवसंहितायामुक्तम्-

गुदमेढ्रान्तरालस्था योनिः (त्रिकोणं) तत्र कन्देतिप्रसिद्धं वर्तते तस्मिन्कन्दे सदावस्थिता कुण्डलिनी निवसति। सा सुषुम्णां त्रिवेष्टिकावस्थिता। ब्रह्मनाडीम् आवेष्ट्य मुखेनपुच्छंनिवेश्य शयति च[1]।

तत्र कुण्डलिन्येव विश्वस्य[2] प्राणधारा जीवस्य जीवशक्तिरस्य जीव शक्तिः प्राणाकारे अभिभवति।

प्राणाकारे भिव्यक्ता पराशक्तिः कुण्डलिनी प्राण[3]कुण्डली-त्युक्ता। सा शक्तिः सर्पकुण्डलीव शयति सा कुण्डलिनीमता। मूलाधारस्य कन्दैव कुण्डः। कुण्डेस्थितायाः शक्तिः सा कुण्डली (कुण्ड + ला + उ + ई)। कुण्डं वेष्टयित्वा या या स्थिता देवी सा कुण्डलीति मता। एवम् जीवशरीरे मूलाधारे वस्थिता[4] पराशक्तिः कुण्डली कुण्डलिनी वा स्वमेवचिच्छक्ति मायाशक्तिरप्युक्ता।

कुण्डलीमेव कुलकुण्डलीतिख्याता। श्री लक्ष्मीधरेण कुलशब्दस्य व्याख्यायाम् लिखितम्- कु =[5] पृथ्वीतत्त्वः यस्याम् लयति सा कुलेत्युक्ता। कुलेन मूलाधारचक्रः यतः तत्र पृथ्वीतत्त्व अवस्थितः।

---

१- शिवसंहिता ५।७६-८०

२- सं०रा०ना० ३०।६३

३- सर्पकुण्डली भाषयतीकै कुण्डलिनी मता सि०सं०४०।२०

४- सुषुम्णायाम्मूले यत्कुण्डं कमलकन्दाकारमाधारकन्दम्।
सौ०ल०१० लक्ष्मीधर टीका

५- कु० पृथिवी तत्त्वं लीयते यत्र तत्कुलमाधारचक्रम्।
तदाश्रया सुषुम्णामार्गः कुलमित्युच्यते।
(सौ०ल०श्लोक१०)लक्ष्मीधर टीका

इडापाया सुषुम्ना मार्गावपि कुलमुक्तम् । इत्थं कुलशब्दस्यार्थः शक्तोतिनिरूपितम्[1] । कुविविशिष्टाकृतिकारा वा या सैव कुण्डलीति ।

तत्र सैषा कुल कुण्डली शक्ति कुण्डली चाप्युक्ता ।
तस्माद्यथैव ब्रह्माण्डे महाकुण्डलीत्वं पिण्डे कुल कुण्डलीत्युक्ता ।
एषा ब्रह्मानन्द प्रकाशिनी सर्वभूता चैतन्यस्वरूपिणीवोक्ता ।[2]

ललिताकुण्डलिन्या ऐक्य प्रदर्शनम्-

अरुणोपनिषदि प्रसिद्धनामकाः ऋषयः व्याख्यायन्ति यत् ब्रह्मस्वरूपा भगवती ललिता त्रिपुरसुन्दर्यैव अमृतापूता पुरी वर्तते । एषैव कुण्डलिनी शक्तिस्वरूपे मोक्षे विराजमाना नित्यानन्दा भगवती च ।

मूलाधारचक्रे एषा कुण्डलिनी सुप्तोत्थिता भवति इयम् तस्य कौमारावस्था वर्तते ।

१- अकुलं शिवमाख्यातं कुलं शक्तिः प्रकीर्तिता ।(कुला०त०२७)
२- सार्धत्रिवलयविन्दुस्था भुजङ्गी कुलकुण्डली ।
निर्गुणा सगुणा देवी ब्रह्मपाशनाशनी ।
चैतन्यरूपिणी देवी सर्वभूत प्रकाशिनी ।
आनन्दरूपिणी देवी ब्रह्मानंद प्रकाशिनी ।। कुंजिका तन्त्र प्र०प०

आगुरुस्वरूपिणी कुण्डलिनी विष्णुग्रन्थिम्(मणिपूरक चक्रं) विभिद्य सहस्रारे शिवेन सह सांमंकरोति ।

अत्र सर्वकुमार्यं भावेन स्वाभाविक श्रृङ्गारगुणानाम् गति वैष्टाधिकृतिः "भूतेन्द्रिया अविवकरचरणारवृन्दं विन्यस्ते ललितम्" इति त्रैलोक्य मोहनस्वरूपे सुधोत्पादयिनी अलौकिकी विश्वविमोहिनी आनन्दोत्सववर्धिनी त्रिपुर सुन्दरी आनन्दानुभवो जनः ललितेति स्वीकुर्वन्ति"[1] ।

भवति निरवधि सर्वकारणभूता कुण्डलिनी शक्तिरेव-

कामेश्वराङ्कनिलया सदानन्दपूर्णा आत्मस्वरूपिणी त्रिपुरसुन्दरी ललितेत्युक्तम् ।एतस्याः आराधनेन सर्वसिद्धयः भवन्ति । इत्याशयः सप्तत्रिंशत सूत्रेषु प्रकाशितम् ।

ललितायाः लिङ्गधारिण्याः ऐक्य प्रदर्शनम्-

भास्कराराय प्रणीत ललितासहस्रनाम भाष्ये रायमहोदयेन परास्यालिङ्गधारिण्याः परदेवता ललिताकुण्डलिन्योरस्य ऐक्यं प्रतिपादितं तद्यथा -

---

१- बह्वृचोपनिषद्

२- भावोपनिषद् सूत्र १-३७

ननु शब्दार्थयोस्तादात्म्यस्यैव शक्तिपदार्थत्वात् निर्गुणस्यापि ब्रह्मणः शब्दब्रह्माभिन्नत्वेन किमिति तत्र सत्यादिशब्दानां लक्षणेत्याशङ्क्य वैश्वानरादिपदानां विराट्पुरुषेणेव सह तादात्म्येन शुद्धब्रह्मतादात्म्यं नास्त्येवेति लक्षितत्वया वाच्यं विनज्यते । अत्रेदं बोध्यम् । प्रलये सृज्यमान प्राणिकर्मणाम् परिपाकदशायां तादृश कर्माभिन्नमायावच्छिन्नं ब्रह्म घनीभूतमित्युच्यते । कालवशात्कर्मणां परिपाके सति विनश्यदवस्थः परिपाक प्रारम्भावो विचिकीर्षेत्युच्यते । ततः परिपाकदशायां माया-वृत्तिरूपत्वापन्ने तादृशं परिपक्वकर्माकार परिणतमायाविशिष्टब्रह्म-अव्यक्तपदवाच्यं । अतएव तस्योत्पत्तिरपि स्मर्यते-

'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' ।

स एव जगदङ्कुरकन्दरूपत्वात्कारणबिन्दुपदेन व्यवह्रियते ।

तदुक्तं प्रपञ्चसारे-

विचिकीर्षुर्घनीभूता सा चिदभ्येति बिन्दुतामिति । अस्माच्च कारणबिन्दोः सकाशात्क्रमेण कार्यबिन्दुस्ततो नादस्ततो बीजमिति त्रयमुत्पन्नं तदिदं परसूक्ष्मस्थूलपदैरप्युच्यते । चिदंशश्चिदचिन्मिश्रो चिदंशश्चेति तेषां रूपाणि तदुक्तं रहस्यागमे- 'कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा । स्थूलसूक्ष्म परत्वेन तस्य त्रैविध्यमिष्यते । स बिन्दुनाद बीजत्व भेदेन च निगद्यते' इति ।

एते च कारणबिन्द्वादयश्चत्वारोऽधिदैवतमव्यक्तेश्वर हिरण्यगर्भ विराट् स्वरूपाः शान्ता वामा ज्येष्ठा रौद्री रूपा अम्बिकेच्छाज्ञानक्रिया रूपाश्च । अधिभूतं तु कामरूप पूर्णगिरि जालन्धरोड्याण पीठरूपा इति तु नित्याहृदयस्पष्टम् ।

अध्यात्मं तु कारणबिन्दुः शक्तिपिण्डकुण्डल्यादिशब्दवाच्यः मूलाधारस्थ शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमा ज्ञात्वेत्थं न पुनरिह विशन्ति जननीगर्भेऽर्भकत्वं नराः इत्यादिरीत्या ज्ञानार्थं व्यवस्थितः सैव यत् विभागावस्थः कारणबिन्दुः । अयमेव यदा कार्यबिन्द्वादित्रय जननोन्मुखो भिन्नो तद्दशायामव्यक्तः शब्दब्रह्माभिधेयो रवः समुत्पद्यते ।

तदप्युक्तम्— बिन्दोरस्माद्भिद्यमानाद्रवोऽव्यक्तात्मको भवत् । स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते इति । सोऽयं रवः कारणबिन्दुनादात्मापन्नत्वात्सर्वगतोऽपि व्यञ्जकयत्नसंस्कृतपवनवशात् प्राणिनां मूलाधार स्थानाभिव्यज्येत तदिदं कारणबिन्द्वात्मकमभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं तदेव च परावाक् इत्युच्यते ।

अथ तदेव नाभिपर्यन्तमागच्छता तेन पवनेनाभिव्यक्तं विमर्शरूपेण मनसायुक्तं सामान्यस्पन्दस्वप्रकाशरूप कार्यबिन्दुमयं सत् पश्यन्तीवागुच्यते । अथ तदेव शब्दब्रह्म तेनैव वायुना हृदयपर्यन्तमभिव्यज्यमानं निश्चयात्मिकया बुद्ध्या स्पन्दप्रकाशरूप नादमयं सन्मध्यमावागुच्यते । अथ तदेव तेनैव वायुना कण्ठादिस्थानेष्वभिव्यक्तमानमकारादिवर्णरूपपरं श्रोत्रग्रहणयोग्यस्पष्टतरं प्रकाशरूप बीजात्मकं वैखरी वागुच्यते । तदुक्तमाचार्यैः मूलाधारात्प्रथममुदितो । यश्च भावः पराख्यः पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः व्यक्ते वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्नाबद्धस्तस्माद्भवति पवन प्रेरिता वर्णसंज्ञा इति ।

नित्या तन्त्रे— मूलाधारे समुत्पन्नः पराख्यो नाद सम्भवः स एवोर्ध्वतया नीतः स्वाधिष्ठाने विजृम्भितः । पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैः शनैः ।

अनाहते श्रुतिगत्वमेतौ मध्यमापि तथा तदैर्व्यज्यन्त: सन्निधुतौ कण्ठ-देशत: वैखर्यपि इत्यादि । तथा च श्रुति:- तस्याधदरवेनाचं तन्मुष्या उपजीवन्तीति । अनार्षं अपूर्णं त्रिगुणविरहितमित्यर्थ: इति वेदभाष्ये । श्रुत्यन्तरे पि 'चत्वारि वाक्परिमिता पदानि' इत्यादिवदन्ति । त्रिपुरा सिद्धान्ते तु प्रकारान्तरं निरूपितरूपता श्रीपरानन्दनाथस्य प्रवृत्तत्वा-त्परेतिया । परानन्दाभिधे तन्त्रे प्रसिद्धत्वाज्जसा परा प्रसादरूपिणी चैति परा सप्तरूपाखी परैति । प्रतिकूलं स्वात्माभिमुखं चयतीति प्रतीची सा च सावित्री च प्रत्यक्चितौ अव्यक्त संज्ञं ब्रह्मस्वरूप यस्यास्तथा ।

परा उत्कृष्टा चासौ देवता च परदेवता ललितेति प्रसिद्धा । (ललितासहस्रनाम भास्करारायभाष्य परावयाख्या टीका) अत्र परारूपा शक्तिरेव लिङ्गानि सर्वेषामात्मनां स्वशरीरे निवेश्य लिङ्गधारिणी भवति सा परदेवताभावे स्वात्मैव ललितेति बोध्य: ।

अरूपं निर्गुणं ब्रह्म सृष्टिकामनया[1] एको ऽहं बहुस्याम: इति संकल्प्य शक्तिस्वरूपा मूर्तिम् प्रकाशितं ।

एषा शक्ति: ब्रह्म प्रकाशस्य[2] प्रकाशिका विमर्शस्वरूपा चर्चिता । मुण्डकादुपनिषत्सु 'तमेवभान्तमनु भाति सर्वम्, तस्य भासा सर्वमिदं विभाति' इत्यादि कथनेन तस्या एव समर्थन कृतम् एषैव सन्मूर्ति: परारूपा उक्तं यथा 'परास्य शक्ति विविधैव श्रूयते' । इत्यादि

---

१- तैत्ति० ६ अनु०

२- कठ० २।२।१५, मुण्ड०२।२।१० श्वेता०उ० ६।१४

एषा परापरा मूर्तिः शिवादि नामभिरप्युक्तम् । यथा-
वै अपारे[1] कमलात्मनन्ते शिवा शिवे शिविते यत्र मूर्ते एषा परापरा-
संयुक्ता शिवा शिवा स्वरूपिणी मूर्तिरेव शक्तिमूला सगर्भिणा त्रिगुण[2]-
रूपा: बहुरूपाणि प्रकाशयति । उक्तं चापि 'एको वर्णो बहुधा शक्ति:
योगात् वर्णाननेकान् निहितार्थो दधाति' श्रुतौ चैषा अजामेकां
लोहितशुक्लकृष्णा इत्यादि शब्देन व्यवहृता । एषा त्रिगुणा मूर्तिरेव
ब्रह्मस्वरूपा अस्या गर्भे जीवांशसहित: अविनाशी ब्रह्म काष्ठान्तर्गता
वह्निरिव निवसति ।

काष्ठेनिहिताग्नि: अदर्शिनो (अलिङ्गो) भवति तथापि
तस्य स्वरूपस्य लिङ्गस्य वा न विनाश: जायते । एवमेव ब्रह्मापि
प्रकृतिगर्भे अलिङ्गो निवसति किन्तु तन्त्रिगुणस्वरूपेण तत्सम्बन्धलिङ्गस्य
नाशं न भवति वरन् सर्वव्यापी भूत्वा प्रकटति ।

सृष्ट्यादि ब्रह्मैव ज्योतिरूपे लिङ्गनामाभिहितम् । तज्ज्योति:
लिङ्गस्य मातृका तत्प्रकृति यैव ज्योतिरूपा: भासते भाति । सा
शक्तिरेव लिङ्गधारिणी उक्ता । एषैव, भुवनेशी, कामेशी, त्रिपुरा
कामेशी ललितेति नामभि: व्यवहृता: भावनोपनिषदि कामेश्वराङ्कस्थ
निलया सदानंदपूर्णा स्वात्मैव परदेवता ललितेति कथनेन लिङ्ग-
धारिणी ललितायैवमेव प्रदर्शितम्[3] ।

---

१- श्वेता० उ० ४। १

२- श्वेता उ० ४। ५

३- भावनोपनिषद् सूत्र २८

बह्वृचोपनिषदपि-

सैषात्मा ततोऽन्यदसत्यमनात्मा । अत एषा ब्रह्म संवित्तिः । भावाभावकलाविनिर्मुक्ता चिद्विद्या द्वितीय ब्रह्मसंवित्तिः । सच्चिदानन्द लहरी महात्रिपुर सुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति । यदस्ति सन्मात्रम् । यद्विभाति चिन्मात्रम् । यत्प्रियमानन्दं तदेतत् सर्वाकारा महात्रिपुर सुन्दरी ।

त्वं चाहं च सर्वं विश्वं सर्वदेवता । इतरत्सर्वं महात्रिपुर - सुन्दरी । सत्यमेकं ललिताख्यं वस्तुतद्द्वितीयमखण्डार्थं परं ब्रह्म इति । कथनेन अखण्ड परब्रह्मस्वरूपिणी सम्पूर्ण विश्वधारिणी ललितैव लिङ्गधारिणीति इत्याशयः प्रस्फुटितः ।

श्री करपात्री महोदयेन श्रीविद्यावरिवस्यानामकस्य ग्रन्थे "नियमित पवनस्पन्दो मूलाधारे चतुर्दलपद्मे त्रिकोणाख्यां पीठस्थां ज्योतिर्लिङ्गमावेष्ट्यावस्थितां सार्धत्रिवलयां ॐ हूं बीजे निहितां ऐं ह्रीं श्रीं इति मंत्रं जपन् कुण्डलिनी ध्यायेत् ।

इति कथनेन कुण्डलिनी शक्तिरूपा श्री ललिता राजराजेश्वरी: लिङ्गधारिणी स्वरूपेण प्रकाशनम् प्रतीयते । इति ।

—::::—

---

१- बह्वृचोपनिषद्

२- श्रीविद्या वरिवस्या, ह० करपात्री स्वामिनः, संकलितारम् कविराज ।

## सप्तम कण्डिका

**शक्त्युपासनायाः महत्त्वम् -**

भारतीय सनातन धर्मे ऐते उपासक सम्प्रदायाः सन्ति । ऐते विभिन्नैः नामधेयैः भिन्नोपासना पद्धतिभिः मातृ शक्तिसमन्वित परमात्मानमेव उपासयंति ।

यथाग्नौ दाहिका शक्तिः । सूर्ये प्रभा, चन्द्रे चन्द्रिका जले शीतलता, एक एव भाति न कोऽपि भेद तथैव शक्तिमति शक्तौ च न कोऽपि भेद वर्तते ।

यथाऽग्नि शक्तिः अग्निस्वरूपाश्रयम् विना न तिष्ठति तथा अग्निस्वरूपमपि अग्निशक्तेरभावे न सिद्ध्यति तथैव शक्तिशक्तिमानयोरपि अभिन्नं विद्यते ।

परमात्मैव नित्य पुरुषरूपः तथा नित्य नारी स्वरूप अपि । एतौ लोकदृष्टौ भिन्न मूर्तौऽपि अभिन्नौ ।

एकस्याभावे नापरस्य अस्तित्वं अतएव नौभय प्रतिपादकौ एतौ ।

---

१- ब्र० वै०पु० पृ०ख० २।७-११
श्रीमद्देवीभागवत पु० ९।२।७-११
श्रीमद्देवी भागवत पु० ७।३२।५

परमात्मा परब्रह्म[1] वा पराशक्तेरभावे न सिद्ध्यति तथा पराशक्तिरपि परब्रह्मत्वं विना न तिष्ठति अतश्च न तयोर्भेदः ।

एवम् नित्यभिन्न भूते सत्यपि एतयोर्मध्ये शक्तेरेव प्रधानता वर्तते ।

सच्चिदानन्दघनः शक्तितो भूत्वापि सच्चिदानन्द शक्तेरभावे शून्य इव भाति । सत् तत्त्वं सद्शक्त्या तस्य चित्त्वं चित्शक्त्या आनन्दतत्वं आह्लादिनी शक्त्या स्वरूपतः सिद्ध्यति । यदाशक्त्यभावे शक्तिमतः सत्वं न सिद्ध्यति तत्कथं विष्णु शिवादीनाम् स्वरूपसत्ता सिद्धिर्भविष्यति तथा च कथं तस्योपासना सम्भावनीया ।

अत्र उपासनायां शक्तिविग्रहोपस्थितिः अस्ति नवा नेति विचारणीयः अपितु मूलोपस्थितिः तस्या इति मत्वा शक्त्युपासना कर्तव्याः ।

उपास्याभावे उपासना न हि इत्येतत् विभिन्नतापक्षेषु शक्त्युपासना समुद्दिष्टम् ।

---

१- श्रीमद्देवीभागवत पृ० ३८६

ललिता प्रभृतेः प्रधानत्वम्-

विभिन्न शक्तिस्वरूपेषु ललिता अखण्डपरब्रह्मस्वरूपिणी समीरेत्युक्ता यथा - 'सैषात्मा[1] ततो न्यदसत्यमनात्मा। अत एषा ब्रह्म संवित्तिः। भावाभावकला विनिर्मुक्ता चिद्विद्या द्वितीय ब्रह्म संवित्तिः। सच्चिदानन्द लहरी महात्रिपुर सुन्दरी बहिरन्तरनुप्रविश्य स्वयमेव विभाति।

सत्यमेकं ललिताख्यं वस्तु तद् द्वितीयं अखण्डार्थ परं ब्रह्म इति।

पद्मपुराणेऽपि[2] ललितम् ललितायाः प्राधान्या शक्तिः दुर्गा राधिकादि शक्तयः ललितान्तर्गता सन्ति।

मत्स्य पुराणेऽप्युक्तं-

लोकानतीत्य ललिता नैव सर्वेभ्यो[3] इति।

---

१- बह्वृचोपनिषद्

२- पद्मपु० पातालखण्ड

३- मत्स्य पु० ६०।१०

आम्नायस्य वैदिकत्वं विवेचनम्-

प्रायः प्रत्येकमन्त्रस्य यः वैदिकमहत्त्वास्यार्थो तुल्येव भाति । चतुर्णाम् महावाक्यानाम् सिद्धान्ताः एकैव प्रकारेण घटयन्ति । परन्तु पृथक्त्वस्य रोचकः सन्ति । यथा प्रत्येकस्मिन्नाम्नाये एकं महावाक्यं विद्यते । ऋग्वेदः पश्चिमाम्नायात्मकम् । तन्महावाक्यं प्रज्ञानं ब्रह्म इत्येवं पश्चिमाम्नायस्य मंत्रार्थेषु निरूपितम् ।

उत्तराम्नायात्मकं यजुर्वेदस्य महावाक्यं 'अहं ब्रह्मास्मि' वर्तते पूर्वाम्नायात्मकः सामवेदः तस्य महावाक्यं तत्त्वमसि वर्तते ।

अथर्ववेदः दक्षिणाम्नायात्मकं तस्य महावाक्यं अयमात्मा ब्रह्मेति । ऊर्ध्वाम्नाये 'अहम् इदम् त्वं' इत्यस्य भावाभावात् तद्वाक्यं चतुष्पदी तुरीया गायत्र्येव मन्त्रः । वेदमाता गायत्री इत्यस्मात् चतुर्महावाक्यानि वेदात्मकानि भान्ति ।

अतएव यदाम्नायस्य महावाक्येन गायत्री ब्रह्मपदे समष्टयर्थीता तद्व्याख्यात्मकं मन्त्रम् । त्र्यक्षरी मन्त्री समष्टयर्थीनाः वेदसाराः वेदमन्त्रस्येति[1] ।

---

१- आम्नाय वोरदायना पृ० ४६७

पुराणागम ग्रन्थेषु ललितोपासनाया: विभिन्ना स्वरूपाणि सन्ति । धर्मशास्त्रेष्वपि यथा 'काल तत्व विवेचने' स्मृति कौस्तुभ-पुरुषार्थ चिन्तामणौ व्रतराजे धर्मशास्त्रस्वेतिहासे पि ललितोपासनाया: वर्णनमुपलभ्यते ।

आम्नायेषु[1] ललितोपासन विधिरपि वर्णित: यत्र पूर्वाम्नाये पूर्णेशी-भुवनेशी-ललिता- अपराजिता लक्ष्मी सरस्वती वाणी परिजात पद्माङ्किता अन्नपूर्णा श्चा एता: पूर्वाम्नायस्य देव्य: स्वरूपाणि सन्ति ।

पूर्वाम्नाये त्र्यक्षरी ललिताया: वर्णनमुपलभ्यते एषा भुवनेश्वरी स्वरूपान्तरा विद्या भवति अतएव भुवनेश्वरी मन्त्रे एव भुवनेशी पूजन विधिनैव ललितोपासना भवति । त्र्यक्षरी मन्त्रात्मिका ललिता यस्मिन्स्वरूपे अवस्थिता भवति तद्ध्यान प्रकारं निम्नं-

यथा- सिन्दूरारुणविग्रहां त्रिनयनां माणिक्य मौलिस्फुरत्:
तारानायक शेखरां स्मितमुखीमापीन-वक्षोरुहाम्
पाणिभ्यां मणिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं ।[2]
सौम्यां रत्नघटस्थ सव्य चरणां ध्यायेत्परामम्बिकां ।।

---

१- पूर्णेशी भुवनेशी ललिताचापराजिता ।
लक्ष्मी सरस्वती वाणी परिजात पद्माङ्किता।
अन्नपूर्णा श्चापरश्च पूर्वाम्नाय समाश्रिता ।
(ज्ञानार्णव तंत्र)साधना और आम्नाय- शक्तिस्वाध्यायपीठ प्रयाग पृ० ६

२- साधना और आम्नाय पृ० ७

द्वितीया ललिता त्रिकूटात्मिका श्रीविद्या पंचदशी महात्रिपुरसुन्दरी भवति। इयमूर्ध्वाम्नायात्मिका वशी। पूर्वाम्नायात्मिका ललिता भुवनेश्वर्याः भैरवः सदाशिवः वशी। तस्योपासन विधिः शाक्त प्रमोदे वर्णितः।

काली कृष्णयोरैक्यम् इति वचनात् दक्षिण कालीरूपे दक्षिणा भागे कृष्णमूर्तौ ललितोपासना भवति। उत्तराम्नाये गुह्यकाली रूपे ललितोपासना भवति ऊर्ध्वाम्नाये रक्तकाली (महात्रिपुरसुन्दरी)रूपे ललितोपासना भवति। शास्त्रेषु लिखितम् -

काली तु द्विविधा प्रोक्ता [1]रक्तास्वरूपा —— ।

ऊर्ध्वाम्नाये लिखितम् लोकसंमोहनाय आद्या[2] ललिता कदाचित् कृष्ण विग्रहा पुंरूपा स्वयं बिभूति इति। स्वम् दक्षिणकाल्याः विपरीतरतातुरावस्थायाम् कामकलात्मकम् शिवशक्त्यात्मकं रूपत्वात् श्री कृष्णस्य वंशीधरावस्थायाः ध्यान मन्त्रादिकाः दक्षिणाम्नायात्मिकाः भवन्ति।

---

१- साधना और आम्नाय पृ० ६२

२- कदाचिदाद्या ललितापुंरूपा कृष्णविग्रहा।
लोकसम्मोहनार्थाय स्वरूपं बिभ्रति परम्
वेणुनादं समारभ्य अर्थसंमोहन परम्।
— शक्तिसंगम तंत्र

लिखितम् यदपि त्रैलोक्य जातानां स्त्रीणां कामोन्मादैक हेतव: वंशीधर: कृष्ण:विष्णु: प्रकृति: इत्युच्यते । विष्णुप्रकृति रूपत्वात् नतु[1] शिवशक्त्यैव गीयते इति निश्चितम् ।

[illegible] लिखितम्-

कामेशी ललिता[2] बाला महात्रिपुरसुन्दरी त्रिपुरा भैरवीत्येता ऊर्ध्वाम्नाय समाश्रिता देव्य: सन्ति ।

परातन्त्रे पि लिखितम्-

त्रैलोक्यैश्वर्य सूचकम् ऊर्ध्व सिंहासनम् वक्ष्ये सर्वाम्नायं प्रपूजिता नित्या सर्व चक्रेश्वरी सर्व सिंहासनमयी ईशानास्येन वोधिता याथा पर- ब्रह्मरूपे नारायणीश्वरी देवी च ।

एवमेता ऊर्ध्वाम्नायात्मिका विद्या: श्री विद्येत्युच्यन्त्येव । श्री विद्या ललिता राजराजेश्वरी महात्रिपुरसुन्दरी बाला पंचदशी षोडशीत्यादि संज्ञाभि संज्ञितम् ।

ऐषां तत्त्वमूले सत्यपि उपरिलिखित विभिन्न नामावस्था भेद परिचायका: सन्ति ।

१- स्त्रीणां त्रैलोक्य जातानां कामोन्मादैक हेतवे
वंशीधर: कृष्णदेव प्रकृति विष्णुरुच्यते
उभयमेतेना देवि शिव शक्तिरहि गीयते ।। (महाकालसंहिता)

२- साधना और आम्नाय (शाक्त साधनापीठ प्रयाग) पृष्ठ ४० ।

प्रसिद्धा दशमहाविद्यासु षोडशी विद्या श्री विद्याख्या: स्व परिज्ञात स्वरूप भाति ।

दश महाविद्यासु काली, तारा षोडशी एव सर्व प्रधानास्सन्ति इति: त्रिभिरेव नवविद्या: एका पूर्वेति सम्मिलितादश महाविद्या: भवन्ति । सर्वमूल भूता एका श्रीविद्यैवास्ति यथा सर्वा विद्या जायन्ते । इयम् ब्रह्मणो ब्रह्मविद्या कथिता । श्री विद्यारूपे ललितोपासना प्राय: सम्पूर्ण भारतवर्षे प्रचलिता श्रीविद्योपासनाया: प्रसिद्धे ग्रन्थे श्रीविद्या नित्यार्चने आदौ ग्रन्थकारेण श्रीविद्यारूपे ललिताया: ध्यानम् कृतम् - यथा-

ललितां[1] तुङ्गकुचां तां कान्तां कान्ताङ्गनां संस्थितां शान्तां
कामेश्वर शिवकान्तां कस्तूरी तिलकाङ्गना वन्दे ।

तथा च प्राय: प्रत्येक विधिविधानेष्वाचारादिधर्मेषु ललिता त्रिपुर सुन्दरी ललिता परमेश्वरी प्रीत्यर्थेति संकल्पादय: प्रदत्ता: तथा च श्री विद्या रूपे ललितोपासना पद्धतिश्चापि वर्णिता वरि-वस्यारहस्याख्य ग्रन्थे पि तस्योपासना विषय: प्रकटित: ।

आगमकल्पविलासग्रन्थोक्त चतुर्षष्टि तन्त्रेषु ललितातन्त्रस्यापि उल्लेख: वर्तते । अस्मिन् ग्रन्थे पि ललितोपासनाविधेर्निरूपणं कृतम् । रौद्रिकागमेषु एकम् ललितागममपि विद्यते यस्मिन् ललिता विषयस्य निरूपणमुपलभ्यते । वर्तमानकाले पि श्रीविद्योपासना विषयका: बहव: ग्रन्था: उपलब्धा: सन्ति येषु ललितोपासनाया: विषयवस्तूनि प्रकाशितानि ।

---

१- श्रीविद्या नित्यार्चन ले० कुलभास्कर पं० यंगान्दुकृष्णदत्तगौडादि शास्त्री पृ० १ । प्र० कल्याणमंदिर अलोपीबाग प्रयाग ।

ऊर्ध्वाम्नायात्मिका कामेशीति कथ्येन कामेश्वर्यादि पंचदश नित्या कलानाम अनिरुद्ध्य योगिनीनां तथा च महात्रिपुरसुन्दर्याः आश्रय: प्रकटित: ।

त्रिभिन्नभेदस्या ध्यानं यथा-

नित्याकलाकामेश्वर्या: ध्यानं-

'उद्यत् हेम रुचिरां रविचन्द्र वह्नि नेत्रां,
धनु: सुमशरांकुश काम पाशान् ।
रक्तै सुवैश्च वसनां शिवशक्तिरूपां
कामेश्वरीं हृदि भजामि धृतेन्दु खण्डाम् ।।

अनिरुद्धयोगिन्या: ध्यानं-

गौरे वपोर् धवलांशुकां शुक्लाम्बर विभूषिताम्
पुष्प मालेषु कोदण्ड पुस्तकादि धरां पराम् ।
कामेश्वरीं चन्द्रचूडां ध्यायेनेत्र त्रयोज्ज्वलाम् ।।

पूर्विका नित्या कला प्रकाशविमर्शात्मस्य कारिणी तथा स्फुरणा एव भाति। तस्याः महाभूतानि अभवन् । तेषां तन्मात्रा पंच- तन्मात्राभ्यः एकैक गुणवर्धमाना क्रमेण पंचदश अभवन् या स्फुरणस्य पांचदशी महात्रिपुरसुन्दरी नित्याकला च पंचदशकला, कामेश्वरी नित्या- कलामारभ्य विचित्रा नित्याकला अभवन् ।

सैव त्रिपुरा च[1] ।

इविधि श्रीविद्या-रत्नमाला ग्रन्थे पंचदशकलायां पंचदश नित्यानाम् तत्सम्बन्धित भैरवानाम नामोल्लेखो ऽपि वर्णितो यथा-

| | |
|---|---|
| १- कामेश्वरी ललिता- | शिवकामेश्वर: |
| २- एकला ललिता | एकवीर कामेश्वर: |
| ३- ईश्वरी ललिता | ईश्वरकामेश्वर: |
| ४- ललित ललिता | ललित कामेश्वर: |
| ५- कुलेशा ललिता | हृदय कामेश्वर: |
| ६- ललिनी ललिता | ललिक कामेश्वर: |
| ७- सरस्वती ललिता | सर्वज्ञ कामेश्वर: |
| ८- कमला ललिता | कालमर्दन कामेश्वर: |
| ९- हरिवल्लभा ललिता | हरनाथ कामेश्वर |
| १०- लक्ष्मी ललिता | ललज्जिह्वा कामेश्वर: । |

---

१- एक स्वप्रकाशरूप: पर: को ऽपि महेश्वर:
यस्य शक्ति विमर्शाख्या सा नित्या गीयते बुधै: ।
विमर्शाख्या च सा देवी यास्य चिन्मयं समागता ।
आकारानिखिलस्वार्थै: ललिता वनि: भेदत: ।
एकैक गुणा पृथा तु तिथि संख्यात्वमागता: ।
विमर्श रूपिणी विद्या षोडशीया प्रकीर्तिता ।
गता सा षोडशीभेदैस्त्रिपुरा परमेश्वरी ।
सुन्दर्यादि महापूर्व निवित्राम्नं समन्वता: ॥
स्वागमादेव बौधव्य मिति सर्वेन भावत: ।
प्रतिपत्प्रभृती देव्या: पौर्णमास्यान्तिकं प्रिये ।
एकैकं पूजयेत्तु स धीभाग्यमवाप्नुयात् ॥ (तन्त्रराज तंत्र)

११–हिरण्या ललिता हृदयेश्वर कामेश्वरः
१२– सकलजननीललिता सकलेश्वर कामेश्वरः
१३– कामकोटि ललिता करुणाकर कामेश्वरः
१४– लीलावती ललिता लावण्यः नायक कामेश्वरः
१५– हरीश्वरी ललिता हिरण्यबाहु कामेश्वरः[1] ।

एवम् शक्तिरूपा ललिता[2] भोगमोक्ष उभयप्रदा उक्ता ।

नित्या कलासु प्रथमा कामेश्वरी शुक्लप्रतिपदा अमावस्या तिथिश्च वर्तते । शुक्लद्वितीया कृष्ण चतुर्दशी च भगमालिनी नित्याकलेति उक्ता । भगमालिनीविधा भगमालिनीनित्याकला अतिरहस्या योगिनी च । तत्र प्रथमम् भगमालिनी नित्या कलायाः ध्यानं वक्ष्यामि भगमालिनी नित्या कलाध्यानम् –

कदम्ब वन मध्यस्थाम्नवरत्नमयं वपुस्थिताम् ।
नानाभरण सम्पन्नां त्रैलोक्याकर्षिणी परम् ।
पाशांकुशौ पुस्तकं च नीलोत्पल धारिणीम् ।
वरदं चाभयं चैव दधतीं विश्वमातरम् ॥

१– श्रीविधि श्रीविद्या सङ्गमाला प्रकाशकल्याणमंदिर, प्रयाग पृ० ७६
२– या भोगदायिनी देवी जीवन्मुक्तिप्रदा न सा ।
मोक्षदा तु न भोगाय ललिता तूभयप्रदा ।
सर्वतोविद्या सङ्गमाला पृ० ६

शुक्लतृतीया कृष्णत्रयोदश्यारच नित्यक्लिन्ना नित्याकला वर्ती निम्नकारेध्यानम् –

रक्तां रक्ताङ्शुक वसनां चन्द्रचूडां त्रिलोचनाम् ।
विद्युद् वक्त्रां महापूर्णां लोचनां रत्न भूषिताम् ।
पाशाङ्कुशौ कपालं च महाभीति हरं तथा ।
दधतीं संस्मरेन्नित्यां पद्मासन विराजितां ।।

शुक्ल चतुर्थी कृष्णद्वादशी तिथ्योश्च भेरुण्डा नित्याकला वर्ती ।तद्ध्यान प्रकार: निम्न: ।

चन्द्रकोटि प्रतीकाशां स्वकान्तोमयुतद्युव: ।
नीलकण्ठां त्रिनेत्रां च नानाभरणभूषिताम् ।
इन्द्रनीलस्फुरत्कान्ति शिखिवाहन शोभिताम् ।
पाशाङ्कुशौ कपालं च क्षुरिका वरदाभयौ ।।

शुक्लपंचमी कृष्णएकादशी तिथ्यो: वह्नि वासिनी नित्याकला भवति ।निम्नं तद्ध्यानं :-

ध्यायेत्तां च सुवर्णाभां नानालङ्कार भूषिताम्
पाशांकुशौ खड्गं च शक्तिं च वरदा भयौ ।
दधतीं रत्नमुकुटां त्रैलोक्य तिमिरापहाम् ।।

---

१- साधना और आम्नाय पृ० ३१

CC.O Sampurnanand University Collection. Digitized by eGangotri

शुक्लषष्ठी कृष्णादशमीतिथ्योः महाविद्येश्वरी(महावज्रेश्वरी
नित्या कला तस्याः ध्यानं यथा-

जपा कुसुम संकाशां रक्तांशुक विराजिताम् ।
माणिक्य भूषणां नित्यं नानाभूषा विभूषिताम्
पाशांकुशौ कपालस्य सुधापात्र विभूषिताम् ।

शुक्लसप्तमी कृष्णानवमी तिथ्योर्नित्याकला शिवदूतीति-
तस्याः ध्यानम् यथा-

दूर्वानिभां त्रिनेत्रां च महासिंह समासनाम् ।
शंखारि बाणचापांश्च सृष्टिपाशौ वराभयौ ।
दधतीं तिथ्योर्नित्या शिवदूतीं महाकलाम् ।

शुक्ल अष्टमी कृष्णाष्टमी त्वरितेति नित्याकला वर्ती-
ध्यानं यथा-

श्यामाङ्गीं रक्तवस्त्राढ्यां चरणाम्बुज शोभिताम् ।
कुण्डलादि सुमंजीरां कण्ठरत्नविभूषिताम् ।।
स्वर्णां शुकां स्वर्णभूषां वैश्यादि द्वन्द्व मेखलाम् ।
तनुमध्यां पीनतुङ्ग कुच कुम्भां वराभये ।।
दधतीं शिखिपिच्छानां वलयाङ्गदशोभिताम् ।
गुंजाकङ्कणां सुनाहोन्द्र केयूरांकभूषणाम् ।
विप्र नागस्फुरत्कर्ण भूषां मकरकुण्डलाम् ।
नील कुंचित धम्मिल्ल वन पुष्प कलापिनीम् ।
कैरातीं शिखि पत्राढ्य निकेतन विराजिताम् ।
स्फुरत्सिंहासन संस्थां स्मरेद भय विनाशिनीम् ।।

शुक्ल नवमी कृष्णसप्तमी नित्योनित्याकला कुलसुन्दरी नित्यं तद्ध्यानं -

अतिमधुरचापहस्ताम परिमितामोदबाणसौभाग्याम् ।
अरुणामतिशय करुणामभिनव कुल सुन्दरी वन्दे[1] ।।

शुक्ल दशमी कृष्णषष्ठी तयोर्नित्या कला नित्येति ध्यानं यथा-

तप्त काञ्चन संकाशां सर्वालङ्कार भूषिताम् ।
वराभय करां नित्यां विमलां पुण्याब्जवल्लभाम् ।।

शुक्ला एकादशी कृष्णपंचम्योः नित्याकला नीलपताकिनी तस्याः ध्यानं यथा-

रक्तां रक्तां शुक पुच्छां नानारत्न विभूषिताम् ।
इन्द्रनीलस्फुरन्नील पताकां कण्ठे स्थिताम् ।।
कामधेनुं संकन्न सृणी च वरदाभये ।
दधतीं परमेशानीं त्रैलोक्याकर्षणोद्यताम्

शुक्लद्वादशी कृष्णचतुर्थ्योः नित्याकला विजया तस्या- ध्यानं-

दंष्ट्राकराल वदनां नरमाला विभूषिताम् ।
अस्थिमांसविशेषाढ्यां वह्निकूट समप्रभाम् ।

---

१- साधनावीर आम्नाय

व्याघ्रभारां महा प्रौढ व्यासन विराजिताम् ।
रणे स्मरणमात्रेण भक्तेभ्यो विजयप्रदाम् ।
शूलं सर्पं च ढक्कादि तूणिर घण्टाशनिद्वयम् ।
परशुवह्निमयीर्तिं च दधानां विजयां स्मरेत् ।।

शुक्ल त्रयोदशी कृष्णतृतीयायाः नित्या कलां सर्वमङ्गलां तस्या ध्यानं-

शुभ्र पद्मासने रम्यां चन्द्रकुन्द समद्युतिम् ।
शुभ्रवस्त्रां शशिमुखीं नानारत्नविभूषिताम् ।
अनन्तमुक्ताभरणां स्रवन्तिममृतद्रवम् ।
वरदाभय शोभाढ्यां स्मरेत् सौभाग्यवर्धिनीम् ।

शुक्ल चतुर्दशी कृष्णद्वितीयायाः नित्या कला ज्वाला-मालिनी ध्यानं तथा:-

उद्यत्कुंकुमका कान्ति स्वर्णाभरण भूषिताम् ।
महासिंहासन प्रौढां ज्वालामालां करालिनीम् ।
अरिशंखौ खड्ग खेटे त्रिशूलं डमरुं तथा ।
पानपात्रं च वरदं दधतीं संस्मरेद् यजेत् ।।

शुक्लपूर्णिमाकृष्णप्रतिपदायाः च नित्याकला विचित्रेति तस्याः ध्यानं यथा-

शुभ्राङ्गी शान्तदा नित्यं विचित्र वसना सदा ।
विचित्र तिलका नित्यं विचित्र कुसुमोज्ज्वला ।
वरदा भय शोभाढ्यां नानारत्न धराकचित् ।

यथा सूर्यः स्वैन भाति तथा श्रीविद्या महात्रिपुरसुन्दरी वा एका एव विभाति आगम ग्रन्थे लिखितम्-

प्रकाशश्च विमर्शश्च स्पन्दः सदा चिति क्रिया ।
स्फुरत्तेति समाख्याता सा वै त्रिपुर सुन्दरी ।।

यथासूर्य जन्य शीतोष्णादुःखनिवारणाय अग्निवस्त्रादीनाम प्रयोगः क्रियते तथैव चन्द्रजन्यमनश्चांचल्यादि वृत्तिपहाय एकाकार वृत्यर्थं कामेश्वर्यादि नित्यकलानाम् पृथक् पृथक् नाम मन्त्रादिकाः वर्णिताः ।

तिथ्यानुसार नित्याकलायाः ध्यान मन्त्रोपासनया एकाग्रता सम्भविष्यतीति ।

एषा ऊर्ध्वाम्नायात्मिका ललिता त्रिकूटा महात्रिपुर-सुन्दरीतिविख्याता स्यमेवं पंचदशी पि उक्ता अस्याध्यानं यथा-

सूर्येन्द्वाग्नि मयैकपीठ निलयां बालार्क बिम्बारुणाः
त्र्यक्षां चन्द्रकलावतंस मुकुटां पीनस्तनीं सुन्दरीम्
पाशं सांकुशमिक्षुचाप बाणाविपुलां पुष्येषु हस्तां
नाना भूषण भूषितामति सुकुमाराङ्गी भजे वैन्दवे ।

तथा च-

बालार्क मण्डला भासां चतुर्बाहीं त्रिलोचनां ।
पाशांकुश धनुर्बाणान धारयन्तीं शिवां भजे ।।

---

१- साधना और आम्नाय

न कामेश्वराङ्कनिलया त्रिपुर सुन्दरी अपितु पंचप्रेतोपरि विराजमाना भाति । वस्तु पर्यङ्कोपविष्टा त्रिपुर सुन्दरी सत्वेन भाति । अस्यामवस्थायाम सा तुरीया रजोगुणात्मिका माननीया । आद्या विद्या दक्षिणा काली गुणातीता द्वितीया तारा सत्व गुणात्मिका तृतीया रक्त काली रजोगुणात्मिका भवति ।

यदा महापर्यङ्कोपरि त्रिपुरसुन्दरी यदा कामेश्वराङ्क निलया गुणातीता प्राकृतात्मिका भविष्यति ।

त्रिकूटात्मिका पंचदशी महात्रिपुरसुन्दरी पृथक् पृथक् देवैस्तै उपासिता त्रिविधा किन्तु ध्यानमेकमेव ।

एतासु तिसृः विद्याः प्रधाना एकाकामोपासिता या कादि विद्येति प्रसिद्धा । प्रायः सम्प्रदाये ह्यत्र विशेष प्रचलिता द्वितीया लोपामुद्रोपासिता हादि विद्येति निगदिता विशेषतया हयग्रीवक्रमा गुरुपरम्परायामेषा प्रचलिता । तृतीया नन्दुपासिता पंचदशी भवति या सादि विद्या प्रकीर्तिता । एषा अल्पसंख्यक गुरुपरम्परायां प्रचलिता ।

प्रकाण्ड पुराणान्तर्गत याः ललिता सहस्रनाम ललिता त्रिंशत्यादि स्तोत्राणि सन्ति ते अर्चायां भगवदात्मिका ललितायाः सन्ति ।

---

१- साधना और आम्नाय पृ० ३२

पुराणेषु पुनीतपरम्परया पद्धत्या ललितोपासनाया: विधि: निरूपित:
तेन मत्स्य पुराणोक्तं वर्णयामि-

---

१- मत्स्य उवाच-

तथैवान्यत् प्रवक्ष्यामि सर्वकामफलप्रदम् ।
सौभाग्य शयनं नाम यत् पुराण विदो विदु: ।
पुरा दग्धेषु लोकेषु भूर्भुव: स्वर्महादिषु ।
सौभाग्यसर्वभूतानामेकस्थमभवत् तदा ।
वैकुण्ठं स्वर्गमासाद्य विष्णोर्वक्ष: स्थले स्थितम् ।
तत: कालेन महता पुन: सर्गविधौ नृप ।
अहंकारावृते लोके प्रधान पुरुषान्विते ।
पिङ्गाकारासमुद्भूता वन्हेर्ज्वालाति भीषणा ।
तयाभितप्तस्य हरेर्वक्षसस्तद् विनिःसृतम् ।
वक्षःस्थलं समाश्रित्य विष्णो सौभाग्यमास्थितम् ।
रसं रूपं न तद् यावत् प्राप्नोति वसुधा तले ।
उत्क्षिप्तमन्तरिक्षे तद् ब्रह्म पुत्रेण धीमता ।
दक्षेण पीतमात्रं तद् रूपलावण्य कारकम् ।
बलं तेजो महज्जातम् दक्षस्य परमेष्ठिना ।
शेषं यदपतद् भूमिविष्टब्धा तद् व्यजायत ।
ततस्त्वोषधयो जाता: सप्त सौभाग्यदायिका: ।
इक्षवो रसं राजश्च निष्पावा राजधान्यकम् ।
विकारवच्च गोक्षीरं कुसुम्भम् कुङ्कुम तथा ।
लवणं चाष्टमं तत्र सौभाग्याष्टकमुच्यते ।

---

क्वचिदिक्षुणाकारा पि पाठ भेदो दृश्यते ।

पौत्रं यदु कुलश्रेष्ठ योगज्ञान विदाम्बरः ।
दुहिता सा भवत् तस्य या सतीत्यभिधीयते ।।
लोकानतीत्य लालित्याल्ललिता तेन चोच्यते ।
त्रैलोक्यसुन्दरीमेनामुपयेमे पिनाकधृक् ।
त्रिविश्व सौभाग्यमयी भुक्ति मुक्तिफलप्रदा ।
तामाराध्य पुमान् भक्त्या नारी वा किं न विन्दति ।।

मनुरुवाच-

कथमाराधनं तस्या आदराद्वद जनार्दन ।
तद्विधानं आम्नायं तत्सर्वं च वदस्व मे ।।

मत्स्य उवाच -

वसन्तमासमासाद्य तृतीयायां जनप्रिय ।
शुक्लपक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत् ।
तस्मिन्नहनि सा देवी किल विश्वात्मना सती ।
पाणिग्रहणकैर्मन्त्रैरुदूढा वरवर्णिनी ।
तयासहैव देवेशं तृतीयायामथार्चयेत् ।
फलैर्नानाविधैर्धूपदीपनैवेद्यसंयुतैः ।
प्रतिमां पंचगव्येन तथा गन्धोदकेन तु ।
स्नापयित्वार्चयेद् गौरीमिन्दुशेखरसंयुताम् ।
नमोऽस्तु पाटलायेति पादौ देव्याः शिवस्य तु ।
शिवायेति च संकीर्त्य जयायै गुल्फयोर्द्वयोः ।
त्रिपुरायेति रुद्राय भवान्यै जङ्घयोर्युगम् ।

शिवं महेश्वरायेति विजयायै च जानुनी ।
संकीर्त्य हरिकेशाय नमोरू वरदे नमः ।
ईशायै च कटिं देव्याः शंकराय येति शंकरम् ।
कुक्षिद्वयम् च कोटव्यैशूलिनेशूलपाणये ।
मङ्गलायै नमस्तुभ्यमुदरं चाभिपूजयेत् ।
सर्वात्मने नमो रुद्राणीशान्यै च कुचद्वयम् ।
शिवं वेदात्मने तद्वत् रुद्राण्यै कण्ठमर्चयेत् ।
त्रिपुरघ्नाय विश्वेशमथनायै करद्वयम् ।

आदौ कामदेवेन रत्यासमन्वितेना, कार्तवीर्यार्जुने वरुणदेवेन नन्दिना च व्रतस्यास्य अस्यानुष्ठानं कृतम् । एतद् व्रतोपासना चैत्र शुक्ल तृतीयायाः पूर्वाह्नादारभ्यते । पूर्वाह्णे तिलमिश्रित जलेन स्नात्वा-

---

त्रिलोचनाय च हरं वाहुकालानल प्रिये ।
सौभाग्य भवनायेति भूषणानि सदार्चयेत् ।
स्वाहा स्वधायै च महेश्वरायेति शूलिनम् ।
अशोक मधुवासिन्यै पूज्यावोष्ठौ च भूतिदौ ।
स्थाणवे तु हरं तद्वदास्यं चन्द्रमुख प्रिये ।
नमोऽर्धनारीहरमसिताङ्गीति नासिकाम् ।
नम उग्राय लोकेशं ललितेति पुन भ्रुवौ ।
शर्वार्थं पुरहन्तारं वासव्यै तु तथालकान् ।
नमः श्रीकण्ठनाथायै शितिकेशांस्ततो यजेत् ।
माहेश्वरस्वरूपिण्यै शिरः सर्वात्मने नमः ।

शिवमभ्यर्च्य विधिवत् सौभाग्याष्टकमग्रतः ।

स्थापयेद् घृतनिष्पाव कुसुम्भ क्षीर:जीरकान् ।

तरुराजं च लवणं कुस्तुम्बुरुं तथाष्टकं।

दत्तं सौभाग्यमित्यस्मात् सौभाग्याष्टक मित्यतः ।

एवं निवेद्य तत् सर्वमग्रतः शिवयोः पुनः।

रात्रौ शृङ्गोदकं प्राश्य तद्वद् भूमावरिन्दम् ।

पुनः प्रभाते तु तथा कृतस्नान जपः शुचिः ।

संपूज्य द्विजदाम्पत्यं वस्त्रमाल्यविभूषणैः ।

सौभाग्याष्टक संयुक्तं सुवर्ण चरणद्वयम् ।

प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत् ।

एवं संवत्सरं यावत् तृतीयायां सदानघे ।

कर्तव्यं विधिवद्भक्त्या सर्वसौभाग्यमीप्सुभिः ।

प्राशने दान मन्त्रे च विशेषोऽयं निबोधमे ।

शृङ्गोदकं चैत्र मासे वैशाखे गोमयं पुनः ।

ज्येष्ठे मन्दारकुसुमं बिल्वपत्रं शुचौ स्मृतम् ।

श्रावणे दधि सम्प्राश्यं नभस्ये च कुशोदकम् ।

क्षीरमाश्वयुजे मासि कार्तिके पृषदाज्यकम् ।

मार्गे मासे तु गोमूत्रं पौषे सम्प्राशयेद घृतम् ।

माघे कृष्ण तिलं तद्वद् पंचगव्यं च फाल्गुने ।

ललिता विजया भद्रा भवानी कुमुदा शिवा ।

वासुदेवी तथा गौरी मङ्गला कमला सती ।

उमा च दानकाले तु प्रीयतामिति कीर्तयेत् ।

मल्लिकाशोककमलं कदम्बोत्पल मालती: ।

कुब्जकं करवीरं च बाणमम्लानकुङ्कुमम् ॥

सिन्दुवारं च जीवेषु मासेषु क्रमशः स्मृतम् ।
जपा कुसुम्भ कुसुमं मालती शतपत्रिका ।
यथालाभं प्रशस्तानि करवीरं च सर्वदा ।
एवं संवत्सरं यावदुपोष्य विधिवन्नरः ।
स्त्री भक्ता वा कुमारी वा शिवमभ्यर्च्य भक्तितः ।
व्रतान्ते शयनं दद्यात् सर्वोपस्कर संयुतम् ।
उमा महेश्वरं हैमं वृषभं च गवा सह ।
स्थापयित्वाथ शयने ब्राह्मणाय निवेदयेत् ।

देव्या सह देवेशं पंचगव्येन गन्धोदकेन स्नापयित्वा नानाविधैकर्धूपैर्दीपैर्नैवेद्यसंयुताम् गौरीचन्द्रशेखरमभिपूज्यं पाटलायै नमः शिवाय नमः पादौ । जयन्त्यै नमः शिवायनमः गुल्फयोः । त्रिगुणाय रुद्रायनमः भवान्यै नमःजङ्घयोः । महेश्वराय नमः विजयायै नमः जानुनी । हरि शाय नमः वरदायै: नमः ऊरू । शंकराय नमः । ईशान्यै नमः कटिम् । कोटव्यै नमः शूलिने नमः कुक्षि द्वयम् । शूलपाण्यै नमः मंगलायै नमः उदरम् । सर्वात्मने नमः ईशान्यै नमः कुचद्वयम् । वेदात्मने नमः रुद्रायै नमः कण्ठम् । त्रिपुरघ्नाय नमः अनन्तायैनमः करद्वयम् । त्रिलोचनाय नमः कालानलप्रियायै नमः बाहू । [illegible] हरिनाट्यभवनाय नमः भूषणानि । स्वाहास्वधायै नमः ईश्वराय नमः मुखम् । कोकिलमधुरवासिन्यै नमः ओष्ठौ । स्थाणवेनमः चन्द्रमुखप्रियायै नमः । अर्धनारीश्वराय नमः असिताङ्गनायै नमः नासिका । उग्राय नमः ललितायै नमः भ्रुवौ । शर्वायनमः – पारस्यै नमः अलकान् । श्रीकण्ठनाथाय नमः शिवकेशान् । भीमोग्ररूपिण्यैनमः सर्वात्मने नमः

शिरसि चैवं गौरीमभिपूज्य ततः सौभाग्याष्टकं स्थापयित्वा रात्रौ शृङ्गोदकं प्राश्य भूमिशयनं कार्यम्। पुनः प्रातः कृतस्नान जपः शुचिः द्विज-दाम्पत्यं वस्त्रमाल्यविभूषणैः सम्पूज्य सौभाग्याष्टकसंयुतां सुवर्ण प्रतिमा यम् ललिता प्रीयताम् इति उक्त्वा ब्राह्मणाय निवेदयेत्। इत्थं वर्षपर्यन्तं प्रत्येकतृतीयातिथौ विधिवद्भक्त्या कार्यम्। वर्षान्ते सर्वोपस्कारसंयुतम् शयनं दातव्यं शयने उमामहेश्वरं गवा सह हैमं वृषभं च स्थापयित्वा ब्राह्मणाय निवेदनीयम्। एवम् कृते सति मानवानाम् सर्वान् कामान् सिध्यन्तीति।

वस्त्राण्यपि यथाशक्ति मिथुनान्यम्बरादिभिः।
धान्यालंकार गोदानैरन्यैर्वै धनसंचयैः।
वित्तशाठ्येन रहितः पूजयेद् गतविस्मयः।
एवं करोति यः सम्यक् सौभाग्यशयनव्रतम्।
सर्वान्कामान वाप्नोति पदमानन्त्यमश्नुते।
फलस्यैकस्य त्यागेन व्रतमेतत्समाचरेत्।
य इच्छन् कीर्तिमाप्नोति प्रतिमासं नराधिप।
सौभाग्यारोग्यरूपायुर्वस्त्रालंकार भूषणैः।
न वियुक्तो भवेद् राजन् नवार्बुदशतत्रयम्।
यस्तु द्वादशवर्षाणि सौभाग्यशयनव्रतम्।
करोति सप्त वाष्टौ वा श्रीकण्ठभवने नरः।
पूज्यमानो वसेत्सम्यक् यावत्कल्पायुतत्रयः।
नारी वा कुरुते वापि कुमारी वा नरेश्वर
सापि तत्फलमाप्नोति देव्यनुग्रह ललिता।

कृष्णपक्षादपि यश्चैव प्रकुर्याद्व्रतमानिन् ।
सोऽपि विद्याधरो भूत्वा स्वर्गलोके चिरं वसेत् ।
इदमिक्षुमदनेन पूर्वमिष्टं शतधनुषा कृ वीर्यसुतेन च ।
कृतमथ वरुणेन नन्दिना वा किमु जनाय ततोऽर्चयदस्तु:[१]
स्यात् ।

अनन्ततृतीयाव्रतेनापि ललितोपासना भवति । इत्थं ललिताप्रियव्रतम् सौभाग्यारोग्य फलदं त्रिपदा दायकारकमुक्तम् ।

ईश्वर उवाच-

शृणुष्वावहिता देवि यथाऽनन्त पुण्यकृत् ।
नराणामथ नारीणामाराधनमनुत्तमम् ।
नभस्ये वाथ वैशाखे पौषे मार्गशिरे तथा ।
शुक्लपक्षे तृतीयायां स्नातो गौरसर्षपैः ।
गोरोचनं सगोमूत्रं मुस्तां गोशकृतं तथा ।
दधिचन्दनसम्मिश्रं ललाटे तिलकं न्यसेत् ।
सौभाग्यारोग्यदं यत् स्यात् सदा च ललिताप्रियम् ।
प्रतिपक्षं तृतीयासु पुमानथवाङ्गना ।
धारयेदथ रक्तानि नारी वैदथ संयता ।
विधवा धातुरक्तानि कुमारी शुक्लवाससी ।

---

१- मत्स्य पु० अ० ६०। १-३९
पद्मपु० सृष्टि खं० २२

देवीं तु पंचगव्येन ततः क्षीरेण केवलम् ।
स्नापयेन्मधुना तद्वत् पुष्पगन्धोदकेन च ।
पूजयेच्छुक्ल पुष्पैश्च फलैर्नानाविधैरपि ।
धान्यराजिलवणेक्षुदक्षीरघृतान्वितैः ।
शुक्ला क्षतान्वितैरभ्यर्च्य ललितां यः सदार्चयेत् ।
नानादर्पणं कुर्याद् गन्धपूर्वं सम्यक् समाहितः ।
वरदायै नमः पादौ तथा गुल्फौ श्रियैनमः ।
अशोकायै नमोजङ्घे पार्वत्यै जानुनी तथा ।
ऊरू मंगल कारिण्यै वामदेव्यै तथाकटिम् ।
पद्मोदरायै जठरमुरः कामश्रियै नमः ।
करौ सौभाग्यदायिन्यै बाहूरमणं श्रियै ।
दन्तान् दर्पणधारिण्यै स्मरदायै स्मितं नमः ।
गौर्यैनमस्तथा नासामुत्पलायै च लोचने ।
तुष्टौ ललाट मलकान् कात्यायन्यै शिरस्तथा ।
नमो गौर्यै नमोधृष्ट्यै नमः कान्त्यै नमः श्रियै ।
रम्भायै ललितायै च वासुदेव्यै नमो नमः ।
एवं संपूज्य विधिवदग्रतः पद्ममालिखेत् ।
पत्रैर्द्वादशभिर्युक्तं कुङ्कुमेन सकर्णिकम् ।
पूर्वेण विन्यसेद्गौरीमपर्णां च ततः परम् ।
भवानीं दक्षिणे तद्वद् रुद्राणीं च ततः परम् ।
विन्यसेत् पश्चिमे सौम्यां सदामदनवासिनीम् ।
वायव्ये पाटलावासामुत्तरेण ततो मुमाम्
लक्ष्मीं स्वाहां स्वधां तुष्टिं मंगलां कुमुदं सतीम् ।
रुद्रं च मध्ये संस्थाप्य ललितां कर्णिकोपरि ।
कुसुमैरक्षतैर्भिर्नमस्कारेण विन्यसेत् ।
गीत मंगल निर्घोषान् कारयित्वा सुवासिनी ॥

पूजयेद्रक्तमाल्यैश्च रक्तमाल्यानुलेपनैः।
सिन्दूरं गन्धचूर्णं च तासां शिरसि पातयेत् ।
सिन्दूरकुङ्कुमस्नानमिष्टं सत्या सदायतः ।

तथोपदेष्टारमपि पूजयेद यत्नतो गुरुम् ।
न पूज्यते गुरुर्यत्र सर्वास्तत्राफलाः क्रिया
नभस्ये पूजयेत् गौरीमुत्पलैरसितैः सदा ।
बन्धुजीवैराश्वयुजे कार्तिके शतपत्रकैः ।
जातीपुष्पैर्मार्गशीर्षे पौषे पीतैः कुरुण्टकैः ।
कुन्दकुङ्कुमपुष्पैस्तु देवीं माघे तु पूजयेत् ।
सिन्दुवारेण जात्या वा फाल्गुने प्यर्चयेदुमाम् ।
चैत्रे तु मल्लिकाशोकैर्वैशाखे गन्धपाटलैः ।
ज्येष्ठे कमल मन्दारैराषाढे चम्पकाम्बुजैः ।
कदम्बैरथ मालत्या श्रावणे पूजयेदुमाम् ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
बिल्वपत्रार्कपुष्पं च गवां शृङ्गोदकं तथा ।
पंचगव्यं च तिलं च प्राशयेत क्रमशस्तदा ।
एतद् भाद्रपदाद्यं तु प्राशनं समुदाहृतम् ।
प्रतिपदां च मिथुनं तृतीयायां वरानने ।
ब्राह्मणं ब्राह्मणीं चैव शिवं गौरीं प्रकल्प्य च ।
भोजयित्वार्चयेद् भक्त्या वस्त्रमाल्यानुलेपनैः ।
पुंसः पीताम्बरे दद्यात्स्त्रियैकौसुम्भवाससी ।
निष्पावाजाजिलवणमिक्षुदण्डगुडान्वितम् ।
स्त्रियै दद्यात्फलं पुंसे सुवर्णोत्पलसंयुतम् ।

यथा न देवदेवेश त्वां परित्यज्य गच्छति ।
तथा मां सम्परित्यज्य पतिर्नान्यत्र गच्छतु।
कुमुदा विमलानन्ता भवानी वसुधा शिवा ।
ललिता कमला गौरी सती रम्भाथ पार्वती ।
नभस्यादिषु मासेषु प्रीयतामित्युदीरयेत् ।
व्रतान्ते शयनं दद्यात् सुवर्णकमलान्वितम् ।
मिथुनानि चतुर्विंशद् दशवा च समर्चयेत् ।
अष्टौ षड् वाप्यथ पुनरवानुसारं समर्चयेत् ।
पूर्वं दत्वा तु गुरवे शेषानप्यर्चयेद्बुधः ।
उक्तानन्तृतीयैषा सदानन्त फलप्रदा ।
नारी वा कुरुते यातु कुमारी भाववाथवा ।
सापि फलमाप्नोति गौर्यनुग्रह लालिता ।।[1]

पूर्वोक्त व्रतोपासना तुल्यैव रसकल्याणिनी,व्रतमपि माघ-[2]
शुक्ल तृतीयायां भवति ।

अन्यं आर्द्रानंदकरी तृतीय व्रतमपि आषाढ़ शुक्ल[3]
तृतीयः भवति ।

---

१- मत्स्यपुराण अ० ६२।१-३६
नारदपु० पूभा० ११२ भविष्योत्तर अ०२६। तौरे पाद्मसृष्टिखण्डे पि
व्रतोल्लेख: भवति ।
२-मत्स्य पुराण अ० ६३ | पद्मपु० सृष्टिखण्ड अ० २२।६१-६४
३- मत्स्य पु० अ० ६४ | नारदपु० चतुर्थपाद ११२ अंक ।

भाद्रपदकृष्णषष्ठीतिथौ चापि ललिताव्रतम् वर्णितम्[1] । तद्दिने नारी प्रातः सविधि स्नात्वा श्वेतवस्त्रावृता श्वेतपुष्प-मालालंकृता नूतनवादिसरित्वालुकामानीत्वा पिण्डीकृत्य वंशपिटके स्थाप्य तत्र शिवाश्रितो श्रीललितादेव्याः ध्यानं समारभेत् । पुनश्च कमल, मालती, नेवारी, कनेर, नीलकमल, केतकी, नारङ्गाणां संगृहीत्वा एकैकस्य शतमष्टोत्तरं अष्टाविंशति वा पुष्पं गृहीत्वा तद्पुष्पाणाम् अक्षत कलिकाभ्यां देव्याराधनं करणीयम् । पूजनोपरान्त श्री ललिता देव्याः सम्मुखे स्थित्वा प्रार्थनीयमिदम् यथा-

गंगाद्वारे कुशावर्ते बिल्वके नीलपर्वते ।
स्नात्वा कनखले देवि हरं लब्धवती पतिम् ।
ललिते सुभगे देवि सुख सौभाग्यदायिनि ।
अनन्तं देहि सौभाग्यं मह्यं तुभ्यं नमो नमः ।।

बृहन्नारदीय पुराणे राधावतार वर्णन प्रसङ्गे श्री ललिता सखीरूपेऽस्तीति[2] भवति तत्र पुंरूपा कृष्ण विग्रहा ललिताया षोडश कलानां रचना प्रदर्शितम् । एषा ललितादि आद्य व्यापिनी सखायः षोडशीमिता[3] । तेषां कलास्वरूपिणां सखीनां पृथक् पृथक् सम्बन्धे उपासना भवति ।

---

१- नारदपुराण पूर्वभाग चतुर्थपाद १२४।१२-१५ गीताप्रेस

२- बृहन्नारदीय पु० पूर्वभा० ८८ अ० श्लोक १६

कदाचिल्ललिता देवी पुंरूपा कृष्णविग्रहा ।
सखी षोडशकलात्मा: सर्वलात्मप्रभा ।

३- ललिताप्रमुखाणां तु षोडशीत्वमुपागता बृहन्नारदी पु० ८८।२२

तेषांमंत्रोद्धारणीयं नारदपुराणानुसारं वर्णनम् यथा–

श्री रमासुन्दरी देवी नामभिः परिकीर्त्यते ।

कुरुकुल्ला च वाराही वन्द्या ललिते उभे ।

संयुते मन्त्रवर्णा ते त्रिधाख्ये ए यथाक्रमम् ।

हुल्लेखोक्तहंसदारवह्नीलेदैजीरिता ।

त्रिविधाहंसभेदेन शृणु तांश्च यथा क्रमम् ।

हंसाख्या या मध्या स्यादादिमध्यस्थहंसया ।

तृतीया प्रकृतिः सा तु वर्णैरन्त्यमायया ।

वाग्भुवनमन्मथाद्यैस्त्रितारैः स्यात् स्वयं संपदे ।

इति त्रिपुरसुन्दर्या विद्या सम्यक् समीरिता ।

दारानुमीरसा दमार्वीवशिनी बीजमीरितम् ।

प्राणान्तेरसाबिन्दुमः कामेश्वर्यर्णरं महत् ।

शून्यमसुरसानह्निन स्वयोगान् मोहनी मनुः ।

व्योमं रसमासयुतं विमलं बीजमीरितम् ।

ज्यानमर्मेदाह वह्निन्स यौगैः स्यादरुणारामनुः ।

जयिन्यास्तु समुद्दिष्टः सर्वत्र जयदायकः ।

ह्वं नमोदरसहिनं व्योमन्दमासंयुतं मनुः ।

सर्वैश्वर्याः समाख्यातः सर्वसिद्धिकरः परः ।

प्राणेनमोदरसवह्निसंयुक्तः कौलिनीमनुः ।

एभिस्तुभिरष्टाभिः शक्तित्रिवर्गसंयुतैः ।

वाग्देवतां नैन्यार्कः स्याद्वैदैष्यात्मको भवेत् ।

---

१– बृहन्नारदीय पु० पूर्व भा० ८८।८–२५८

रन्ध्रे भाले तथाज्ञायां गले हृदि तथा न्यसेत् ।
नाभ्याधारके पादयोः मूलाग्रकावधि ।
षडदीर्घाढ्येन बीजेन कुर्याच्चैव षडङ्गकम् ।
लौहित्यां ललितां बाण चाप पाशाङ्कुशोकरैः ।
दधानां कामराजाङ्के यन्त्रितां मुदितां स्मरेत् ।
अस्याश्च देवीतीर्थं पार्श्वगा कारणः स्थिता ।
यतस्त्वस्या जनौ तस्यास्त्वन्त्याः पंचदशाक्षरम् ।
ऋषिः शिवश्छंद उक्ता देवता ललिताम्बिकाः ।
अवंशादपि नित्यानन्दनाथेन निर्मितं ।
पटले तु प्रयोगश्च बहुधाक्तं सविस्तरम् ।

एवम् अष्टपंचाशत्तोत्तर त्रिशतेभ्यो श्लोकेभ्यो ललिता नित्यायाः उपासना क्रमः प्रदर्शितम् तथा च नवतितमे ध्याये पटल वर्णने प्रयोगवर्णनम् अपि कृतम् ।

श्री ललितापरकस्तोत्राणि-

भक्त्योपासनायाम् स्तुति पाठानां स्तोत्राणां वा मुख्यं स्थानं वर्तते । प्रायः लोक साधारण्यमानवाः स्वं नित्यकार्याम् प्रातः निद्राविमोचन कालात् प्रातःस्मरण कार्यादिरम्य शयन पर्यन्त विविधविभिन्नावसरेषु इष्ट स्मरणमुद्दिश्य अनेकशः स्तोत्राणां ग्रहणं करोति । एषु स्तोत्राणि भक्तिभावनाधारं गृहीत्वा मम मनसै अनायासेन सन्निविष्टानि ।

एवम् श्री ललितोपासक सम्प्रदायमध्ये श्रीमच्छंकराचार्य कृतं ललिता प्रातस्मरणं लोकविश्रुतं वर्ति स्तोत्रं यथा-

प्रातः स्मरामि ललिता वदनारविन्दं ।
बिम्बाधरं पृथुल मौक्तिकशोभिनासं ।।
आकर्णदीर्घ नयनं मणि कुण्डलाढ्यं ।
मन्दस्मितं मृगमदोज्ज्वल भालदेशम् ।।

प्रातः स्मरामि ललिता भुजकल्पवल्ली ।
रक्ताङ्गुलीय लसदङ्गुलिपल्लवाढ्याम् ।
माणिक्य हेमवलयाङ्गदशोभमानां ।
पुण्ड्रेक्षु चाप कुसुमेषु सृणीर्दधानां ।।

प्रातः स्मरामि ललिता चरणारविन्दं
भक्तेष्ट दानं निरतं भवसिन्धु पोतम् ।
पद्मासनादि सुरनायक पूजनीयम् ।
पद्मांकुश ध्वज सुदर्शन लांछनाढ्यम् ।।

प्रातः स्तुवे परशिवाम् ललितां भवानीं ।
त्रय्यन्त वेद्य विभवां करुणानवद्याम् ।
विश्वस्य सृष्टिप्रलयस्थिति हेतुभूताम् ।
विद्येश्वरीं निगमवाङ्मनसादि दूराम् ।।

---

१- बृहद्स्तोत्र रत्नाकर

प्रातर्वदामि ललिते तव पुण्य नाम
कामेश्वरीति कमलेति महेश्वरीति ।
श्री शाम्भवीति जगतां जननी परेति ।
वाग्देवतेति वचसा त्रिपुरेश्वरीति ॥

यः श्लोक पंचकमिदं ललिताम्बिकायां
सौभाग्यदं सुललितं पठति प्रभाते ।
तस्मै ददाति ललिता झटिति प्रसन्ना ।
विद्या श्रियं विमल सौख्य मनन्त कीर्तिम् ॥

श्री ललिता त्रिपुरसुन्दर्याः षोडशी श्रीविद्या मूलमंत्रानुसार मन्त्रस्य प्रत्येकाक्षरे पद्याधृतं एकं षोडशी कल्याण स्तोत्रं कल्याण वृष्टि स्तोत्रं वा पि प्रचलितम् यस्य पठनेन सेवक साधकानां कल्याणं अवश्यम्भविति भावना सन्निहिता तत्र । एवं करुणापूर्ण भाव भाषायां रचितं वर्तते । स्तोत्रं यथा-

कल्याणवृष्टिभिरिवामृतपूरिताभि
र्लक्ष्मीस्वयं वरणमङ्गलदीपिकाभिः ।
सेवाभिरम्ब तव पाद सरोजमूले,
नाकारि किं मनसि भाग्यवतां जनानाम् ॥

एतावदेव जननि स्पृहणीयमास्ते,
त्वद्वन्दनेषु सलिलस्थगिते च नेत्रे ।
सान्निध्यमुद्यदरुणायत सोदरस्य
त्वद्विग्रहस्य सुधयापरयाप्लुतस्य ॥

ईशत्वनामकलुषाः कतिनाम सन्ति,
ब्रह्मादयः प्रतिभवंप्रलयाभिभूताः ।
एकः स एव जननि स्थिरसिद्धिरास्ते,
यः पादयोस्तवसकृत प्रणतिं करोति ॥

लब्ध्वा सकृत्त्रिपुरसुन्दरि तावकीनं
कारुण्यकन्दलितकान्तिभरं कटाक्षम् ।
कन्दर्पभाव सुभगास्त्वयिभक्तिभाजः ।
सम्मोहयन्ति तरुणीर्भुवनत्रयेषु ॥

ह्रींकारमेव तव नाम गृणन्ति वेदा
मातस्त्रिकोणनिलये त्रिपुरे त्रिनेत्रे ।
यत्संस्मृतौ यमभटादिभयं विहाय
दीव्यन्ति नन्दन वने सह लोकपालैः ॥

हन्तुः पुरामधिगलं परिपूर्यमाणः ।
क्रूरः कथं नु भविता गरलस्य वेगः ॥
आश्वासनाय किल मातरिदं तवार्धं
देहस्य शश्वदमृताप्लुत शीतलस्य ॥

सर्वज्ञतां सदसि वाक्पटुतां प्रसूते,
देवि त्वदङ्घ्रिसरसीरुहयोः प्रणामः ।
किं च स्फुरन्मुकुटमुज्ज्वलमातपत्रं
द्वे चामरे च वसुधां महतीं ददाति ॥

कल्पद्रुमैरभिमत प्रतिपादनेषु
कारुण्यवारिधिभिरम्बभवत्कटाक्षैः ।
आलोकय त्रिपुर सुन्दरि मामनाथं
त्वय्येव भक्ति भरितं त्वयिबद्धतृष्णम् ॥

हन्तेतरेष्वपि मनांसि निधाय चान्ये
भक्तिं वहन्ति किल पामर दैवतेषु ।
त्वामेव देवि मनसा वचसा स्मरामि ।
त्वामेव नौमि शरणं जगति त्वमेव ॥

लक्ष्येषु सत्स्वपि कटाक्षनिरीक्षणानाम्
आलोकय त्रिपुर सुन्दरि मां कथंचित्
नूनं मयापि सदृशं करुणैक पात्रं,
जातो जनिष्यति जनो न च जायते च ॥

ह्रीं ह्रीमिति प्रतिदिनं जपतां जनानां
किं नाम दुर्लभमिह त्रिपुराधिवासे ।
माला किरीट मदवारण माननीयां
तान सेवते मधुमती स्वयमेव लक्ष्मी ॥

संपत्कराणि सकलेन्द्रिय नन्दनानि
साम्राज्य दानकुशलानि सरोरुहाणि ।
त्वद्वन्दनानि दुरितौघहरोद्यतानि ।
मामेव मातरनिशं कलयन्तु नान्यम् ॥

कल्पोपसंहरणकल्पित ताण्डवस्य
देवस्य खण्डपरशोः परमेश्वरस्य
पाशांकुशैक्षवशरासन पुष्प बाणा
सा साक्षिणी विजयते तव मूर्तिरेका ॥

लग्नं सदा भवतु मातरिदं तवार्धं
तेजः परं बहुल कुंकुम पङ्कशोणम्
भास्वत्किरीटममृतांशुकलावतंसं
मध्ये त्रिकोणमुदितं परमामृतार्द्रम् ।

ह्रींकारमेव तव नाम तदेव रूपं
त्वन्नाम सुन्दरि सरोजनिवासमूले ।
त्वत्तेजसा परिणतं वियदादि भूतं
सौख्यं तनोति सरसीरुहसम्भवादेः ॥

ह्रींकारत्रय सम्पुटेन महतामन्त्रेण सन्दीपितं
स्तोत्रं यः प्रतिवासरं तव पुरो मातर्जपेन्मन्त्रवित् ।
तस्य क्षोणिभुजो भवन्ति वशगा लक्ष्मीश्चिरस्थायिनी ।
वाणी निर्मल सूक्ति भारभरिता जागर्ति दीर्घं वयः ॥

शक्तियामल ग्रन्थे भगवतो ललिताया चतुष्षष्टि
उपचारैश्चैव मानसपूजन वर्णितम् यथा-

ओं कुम्भस्थ निलये देवि ललिते परदेवते ।
चतुष्षष्ट्युपचारांस्ते भक्त्या मानः समर्पये ।
कामेशोत्सङ्गनिलये पाद्यं गृहाणाम्ब सादरम् ।
भूषणानि समुत्तार्य गन्धतैलं च ते पदे ।
स्नानशालां प्रविश्याथ रत्नमणिपीठके ।
उपविश्य सुखेन त्वं देहोद्वर्तनमाचर ।
उष्णोदकेन ललिते स्नापयाम्यथ भक्तितः ।
अभिषिंचामि पश्चात्त्वां सौवर्ण कलशोदकैः ।
धौतवस्त्रप्रोंछनं चारक्त दारीमाम्बरां तथा ।
कुचोत्तरीयमरुणमर्पयामि महेश्वरि ।
ततः प्रविश्य चालेपमण्डपं भो महेश्वरि ।
उपविश्य च सौवर्ण पीठे गन्धान विलेपय
कालागरु कर्पूरैश्च धूपयेत्केश पाशकम् ।
अर्पयामि च मल्ल्यादि सर्वर्तुकुसुमस्रजः
भूषामण्डपमाविश्य स्थित्वा सौवर्णपीठके ।
धारित्वा मुकुटं मूर्ध्नि दयया स्थापयाम्बिके ।
शरत्पार्वण चन्द्रस्य शकलं तत्र शोभनाम् ।
सिन्दूरेण च सीमन्तमलंकुरु दयानिधे ।
भाले च तिलकं न्यस्य नेत्रयोरंजनं शिवे ।
बालो युगलमप्यम्ब भक्त्या ते विनिवेदये ।

मणिकुण्डलयुग्मञ्च नासाभरणमेव च ।
ताटङ्कयुगलं देवि यावकं नाधरौ प्रिये ।
आरभूषणसर्वाणि चिन्तापदकानि च ।
महामुक्ताफलावलीकावल्यादि भूषणम् ।
कनवीरं गृहाणेमं केयूरयुगलं तथा ।
वलयावलिमाङ्गुल्याभरणं ललिताम्बिके ।
अङ्गुल्याभरणमथ कट्यन्ते कटिसूत्रं च सुन्दरि ।
सौभाग्याभरणं पादकटकं नूपुरद्वयम् ।
अर्पयामि जगन्मातः पादयोश्चाङ्गुलीयकम् ।
पाशं वामोर्ध्वहस्तेन दक्षहस्ते तथाङ्कुशम् ।
अन्यस्मिन् वामहस्ते च तथा पुण्ड्रेक्षु चापकम् ।
पुष्पबाणांश्च दक्षाधः पाणौ धारय सुन्दरि ।
अर्पयामि च माणिक्यपादुके पादयोः शिवे ।
आरोहतु त्रिदेवोनिरक्षं पर शिवेष्टदा ।
स्वमानवेषभूषाभिः सार्धं त्रिपुरसुन्दरि ।
अत्र कामेश वामाङ्कपर्यङ्कोपनिवेशिनीम् ।
अमृतासवपानेन मुदितां त्वां सदा भजे ।
शुद्धेन गङ्गातोयेन पुनराचमनं कुरु ।
कर्पूरवीटिकामास्ये ततोऽम्ब विनिवेशय ।
आनन्दोल्लासहासेन विलसन्मुख पङ्कजाम् ।
भक्तिमत्कल्प वल्लिका ललितां कुलेश्वरीं त्वां स्मरन सदा ।
मंगलारतिकं छत्रं चामरं दर्पणं तथा ।
तालवृन्तं गन्धपुष्पधूपदीपांश्च ते प्रिये ।

श्री कामेश्वरि तप्तहाटककृतैः स्थालीसहस्रैर्भृतं ।
दिव्यान्नं घृतसूपशाकभरितं चित्रान्नभेदैर्युतम्
दुग्धान्नं मधुशर्करादधियुतं माणिक्य पात्रार्पितं,
माषापूपक पूरिकादि सहितंनैवेद्यमप्यार्पये ।
सागु त्रिंशतिपार्श्वेन चतुष्षाष्ट्युपचारत: ।
सुन्दर्यर्चनिष्ठया माता ललिता परितुष्यत ।

श्रीनैमिषारण्य माहात्म्ये मम कृत श्री ललिता पद्यं यथा-

या नैमिषे नैमिष नैमिषस्था,
निमेष अनिमेष विसर्ग सर्गा
कारणस्य आद्या भवती प्रसन्ना
कुर्यात्सदा मे सुविकास वन्द्या ।
परमाणु मूला जगत्य संस्था
नपरैमि जाता सुललित प्रकाशा
शब्दात्मिका या सुमहत्प्रभावा ।
कुर्यात्सदा मे सुविकास वन्द्या ।।
त्रिगुणस्य सवस्था सुमहत्स्वरूपा ।
पंचान्विता पंच विकारि कोपना ।
ज्ञानेन्द्रिया प्राण क्रियेन्द्रिया सा ।
कुर्यात्सदा मे सुविकास वंद्या ।
चक्रे स्थिता या अमित प्रभावा ।
पुण्यप्रभावा अभिभावना च सा ।
विश्वस्य आशा परिपालिका च सा
कुर्यात्सदा मे सुविकास वंद्या ।

या ललिता लालित बुद्धि भावा ।
वह्नौ कामना या हृदयस्थ भावा ।
स्फुरत्परा या ह्रं बीज गुह्या ।
कुर्यात्सदा मे सुविकास बंधा ।।

श्री ललिताष्टकं यथा-

या मौलमंडल प्रस्फुरणा सदा,
सानन्दकन्दा जननापहारिणी ।
वै भावना सा च सरोज लोचना ,
कुर्यात्सदा मे ललिता सुमंगलम् ।।
या भावना भावित भावदानना,
विश्वात्मिका या जननापहारिणी ।।
सौभाग्यदा या पुरतालिहारिणी ,
कुर्यात्सदा मे ललिता सुमंगलम् ।।
पूता सुचिता विनया ज्ञाजया,
पुण्या पवित्रा परमार्थदा सदा ।
चिदात्म या व्याधिहरा समर्था ।
कुर्यात्सदा मे ललिता सुमंगलम् ।।
कौमारिका कुम्भधरा किशोरिका,
नित्या समस्ता विकला कलामया ।
शुद्धा प्रबुद्धा विमला फलप्रदा,
कुर्यात्सदा मे ललिता सुमंगलम् ।

सारा समस्ता कलात्मिका शिवा,

विद्या समस्ता परिपालिका च सा ।

वाचा सुवाणी वरदा नृणां सदा,

कुर्यात्सदा मे ललिता सुमङ्गलम् ।

दाक्षिणी समाधानात् कलात्मिका शिवा ,

वैद्यात्मिका शान्तिसुनादिदायिका

श्री नैमिषारण्यवासिनी च सा ।

कुर्यात्सदा मे ललिता सुमंगलम् ।।

यस्याः सुकीर्तिर्जनतापहारिणी,

शान्ता हि शुद्धा जनशोभिता सदा ।

दयार्द्र भावा परितः प्रपालिनी,

कुर्यात्सदा मे ललिता सुमङ्गलम् ।

या धारणा ध्यान समाधि संज्ञका,

स्वाहा स्वधा या सुपूजिता सदा ।

आद्यापि विद्याजनतापहारिणी

कुर्यात्सदा मे ललिता सुमंगलम् ।।

सकवच ललिता सहस्रनाम स्तोत्र-

अथातः कवचं[१] देव्या वक्ष्ये नवरत्नात्मकं ।

येन देवासुर नरजयी स्यात्साधकः सदा ।

सर्वतः सर्वदात्मानं ललिता पातु सर्वगा ।

कामेशी पुरतः पातु भगमाला त्वनं तरम् ।।

---

१- बृहन्नारदीय पु० पू०भा० ८६ अ० श्लो० २३-२८

दिशंपातु तथा दक्ष पार्श्वं मे पातु सर्वदा ।
नित्यक्लिन्नाथ भेरुण्डा दिशं मे पातुकौणपीम् ।
तथैव पश्चिमं मां रक्षताद्वह्नि वासिनी ।
महावज्रेश्वरी नित्या वायव्ये मां सदावतु ।
वामपार्श्वं सदा पातु दूतीमित्वरिता ततः ।
माहेश्वरी दिशंपातु त्वरितं सिद्धिदायिनी ।
पातु मामूर्ध्वतःशश्वद्देवताकुल सुन्दरी ।
अधोनीलपताकाख्या विजया सर्वतश्च माम् ।
करोतु मे मंगलानिसर्वदा सर्वमंगला ।
देहेन्द्रियमनः प्राणाञ्ज्वालामालिनि विग्रहा
पालयत्वनिशंचिता चितं मे सर्वदावतु ।
कामात्क्रोधात्तथा लोभान्मोहान्मानान्मदादपि ।
पापान्मां सर्वतः शोकात्संक्षयात्सर्वतःसदा ।
असत्यात्का चिंतातो हिंसातश्चौरतस्तथा
स्तैमित्याच्च सदापांतु प्रेरयन्त्यः शुभं प्रति ।
नित्याः षोडशमां पातु गजारूढाः स्वशक्तिभिः ।
तथा हय समारूढाःपातु मां सर्वतः सदा ।
सिंहारूढास्तथापांतु पांतु ऋक्षगता अपि ।
रथारूढाश्चमां पातु सर्वतः सर्वदा रणे ।
तार्क्ष्यारूढाश्च मां पातु तथा व्योमगतास्ततः ।
भूतगाः सर्वगाः पान्तु पान्तु देव्यश्च सर्वदा
भूतप्रेतपिशाचाश्च परकृत्यादिकान् गदान् ।
द्रावयंतु स्वशक्तीनां भूषणैरायुधैर्मम् ॥

अग्निधानेषु चापाख्या तथा पाशांकुशाभिधा ।

नमस्कृतिस्तथा संक्षोभिणी विद्राविणी तथा ।

आकर्षणी च विख्याता सर्वावेशकारिणी ।

उन्मादिनी महापूर्वा कुशाथो खेचरीमता ।

बीजा शक्त्युत्थापना च स्थूलसूक्ष्मपराभिधा ।

अणिमा लघिमा चैव महिमा गरिमा तथा ।

प्राप्तिः प्रकामिता चापि चेशिता वशिता तथा ।

भुक्तिः सिद्धिस्तथेच्छा सिद्धिरूपा च कीर्तिता ।

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।

वाराहीन्द्राणीचामुंडा महालक्ष्मी स्वरूपिणी ।

कामा बुद्धिरहंकारा शब्दस्पर्श स्वरूपिणी ।

रूप रूपा रसाह्वा च गंध चित्त धृतिस्तथा ॥

नाम बीजामृताख्या च स्मृतिदेहात्मरूपिणी ।

कुसुमामेखला चापि मदना मदनातुरा ।

रेखावेगिनी चैव ह्यंकुशा मालिनीति च ।

संक्षोभिणी तथा विद्राविण्याकर्षिणी रूपिणी ।

आह्लादिनीति च प्रोक्ता तथा संमोहिनीति च ।

स्तंभिनी जृंभिनी चैव वशंकर्यथ रंजनी ।

उन्मादिनी तथार्थ साधिनीति प्रकीर्तिता ।

संपत्तिपूर्णा सर्वमंत्रमयी द्वंद्वक्षयंकरी ॥

सिद्धिः संपत्प्रदा चैव प्रियमंगलकारिणी ।

कामप्रदा निगदिता तथा दुःख विमोचनी ।

मृत्युप्रशमनी चैव तथा विघ्न निवारिणी ।

अंग सुंदरिका चैव तथा सौभाग्यदायिनी ॥

ज्ञानैश्वर्यप्रदा ज्ञानमयी चैव च पंचमी ।

विंध्यवासनका घोरस्वरूपा पापहारिणी ॥

नवानंदमयी देवा सपीठिप्रकल्पना ।
जयिनी विमला चाथ कामेशी वज्रिणी भगा ।
मेदोभव मोहना स्थाना वशिता परिपूरणी ।
सर्वसंक्षोभणगता सौभाग्यप्रद संस्थिता ।
सर्वार्थसाधकागारा सर्वरोगहरास्थिता ।
सर्वरक्षाकरस्थाना सर्वसिद्धिप्रदस्थिता ।
सर्वानंदमया धारबिंदुस्थान शिवात्मिका ।
प्रकृष्टा च तथा गुप्ता ज्ञेया गुप्ततरापि च ।
संप्रदायस्वरूपा च कुलकौलनिगर्भगा ।
रहस्यापरापरप्राकृतर्भाति रहस्यका ।
त्रिपुरा त्रिपुरेशी च तथैव पुरवासिनी ।
श्रीमालिनी च सिद्धान्ता महात्रिपुर सुंदरी ।
नवरत्नमयद्वीप नवखण्डविराजिता ।
कल्पकोद्यान संस्था च ऋतुरूपेन्द्रियार्चिता ।
कालमुद्रामातृकाख्या रत्नदेशोपदेशिका ।
तत्त्वाग्रहाभिधा मूर्तिस्तथैव विषयद्विपा ।
देशकालाकार शब्दरूपार्थाभिन्नयोगिनी ।
समस्तगुप्तप्रकट सिद्धयोगिनि चक्रयुक् ।
वह्निसूर्येन्दु भूताह्वा तथात्माष्टाक्षराह्वया ।
पंचवार्थस्वरूपा च नानाव्रतसमाह्वया ।
निषिद्धाचाररहिता सिद्धचिह्नस्वरूपिणी ।
चतुर्धाकूर्मभागस्था नित्यार्चास्वरूपिणी ।

स्मरादिसप्तव्यर्णं पाटकर्णीसिद्धि दायिनी ।
निखिलापृथग्व्यसनघ्नि शुभावहा ।
वश्येश्यनंग कुसुमातथैवानंगमेखला ।
अनंगमदनानंगमदनातुर साङ्कुया ।
मददेगिनिका चैव तथा भुवनपालिनी ।
शशिलेखा समुद्दिष्टा गतिलेखा मताङ्कुशात्मना ।
श्रद्धा प्रीती रतिश्चैव धृतिः कान्तिर्मनोरमा ।
मनोहरा समाख्याता तथैव हि मनोरथा ।
मदनोन्मादिनी चैव मोदिनी शंखिनी तथा ।
शोषिणी चैव शंकारी सिंजिनी सुभगा तथा ।
पूषाचैवासुमनसा रतिः प्रीतिर्धृतिस्तथा ।
ऋद्धिः सौम्या मरीचिश्च तथैव ह्यंशुमालिनी ।
शशिनी चाङ्गिराच्छाया तथा संपूर्ण मंडला ।
तुष्टिस्तथामृताख्या च डाकिनी साथ लोकपा ।
बटुकभैरवस्वरूपा च दुर्गादेवीश रूपिणी ।
कामराजस्वरूपा च तथा मन्मथ रूपिणी ।
कंदर्प रूपिणी चैव तथा मकरकेतना ।
मनोभवस्वरूपा च भारती वर्णरूपिणी ॥
मदना मोहिनी लोला जंभिनी बोधमाशुभा ।
ह्लादिनी द्राविणी प्रीती रती रक्ता मनोरमा ।
सर्वोन्मदा सर्वमुखाह्वयमीरा धामिनीपमा ।
अनन्ताव्यक्तविमलाविविधाद्याभनिगुहा ।
रागशक्तिर्द्वेषशक्तिस्तथा शब्दादिरूपिणी ।
नित्या निरंजनाक्लिन्ना क्लेदिनी मदनातुरा ।

मधुरा पुरविणी च दुविणी चैनिकाचिंता ।
मदाविहा मंगला च मन्मथानी मनस्विनी ।
मोहामोदामानवमोमाया मंदाविनावनी ।
विजया विमलाचैव शुभा विश्वा तथैव च ।
विभूतिर्विनता चैव विविधा विनताक्रमा ।
कमला कामिनी चैव किराता कीर्तिरूपिणी ।
कुट्टिनी समुद्दिष्टा तथैव कुलसुन्दरी ।
कल्याणी कालकोला च डाकिनी शाकिनी तथा ।
लाकिनी काकिनी चैव राकिनीकाकिनी तथा ।
इच्छाज्ञानक्रियारूपा चाप्यायुधाष्टक धारिणी ।
कपर्दिनी समुद्दिष्टा तथैव कुलसुंदरी ।
ज्वालिनी विस्फुलिंगा च मंगला सुमनोहरा ।
कनका किनवा विद्याविविधा च प्रकीर्तिता ।
मेषा वृषाह्वया चैव मिथुना कर्कटा तथा ।
सिंहा कन्या तुला कीटा चापा च मकरा तथा ।
कुम्भामीना च सारा च सनिदारा तथैव च ।
विश्वात्मा विविधोद्भूता चित्ररूपा च कीर्तिता ।
निःसपत्ना निरातंका याचनाचिंत्य वैभवा ॥
रक्ता चैव ततः प्रोक्ता विद्या प्राप्ति स्वरूपिणी ।
हृल्लेखा क्लेदिनी क्लिन्ना क्षोभिणीमदनातुरा ।
निरंजना रागवती तथैव मदनावती ।
मेखला डाकिनी वेगवती चैव प्रकीर्तिता ।
कमला कामिनी कल्पाकला च कलिनाद्भुता ।
किराता तथा काला कदना कौशिका तथा ।

कंदु वर्द्धनिका चैव कातरा कण्टा तथा ।
कीर्तिश्चापि कुमारी च कुंकुमा परिकीर्तिता: ।
भंजिनी वेगिनी नागा चपला पेशला सती।
रति: श्रद्धा भोग लोला मदोन्मत्ता मनस्विनी ।
विह्वला कर्षिणी लोला तथा मदनमालिनी ।
विनोदा कौतुका पुण्यापुराणा परिकीर्तिता ।
वागीशी वरदा विश्वा विभवा विघ्नकारिणी ।
बीजविघ्नहरा विद्या सुमुखी सुंदरी तथा ।
सारा च सुमना चैव तथा प्रोक्ता सरस्वती ।
समया सर्वगा विद्धा शिवा वाणी च कीर्तिता ।
दूरसिद्धा तथा प्रोक्तावी विग्रहवती मता ।
नादामनोन्मनीप्राणप्रतिष्ठारूपा वैभवा ।
प्राणापाना समाना च व्यानोदाना च कीर्तिता ।
नागा कूर्मा च कृकला देवदत्ता धनंजया ।
फट्कारी श्रींकारारम्याख्या च विजया तथा ।
हुंकारी खेचरी चंडा छेदिनी क्षपणी तथा ।
स्त्रीहुंकारी क्षेमकारी चतुरक्षर रूपिणी ।
श्रीविद्यामतवर्णाङ्गी काली याम्या नृपार्णका ।
भाषा सरस्वती वाणी संस्कृता प्राकृता परा ।
बहुरूपा चिद्रूपा रम्यानंदा च कौतुका ।
त्रयाख्या परमात्माख्याप्यमेयविभवा तथा ।
वाक्स्वरूपा बिंदुसर्गरूपा विश्वात्मिका तथा ।
तथा त्रैपुरकंदाख्या ज्ञात्रादि त्रिविधात्मिका ।
आयुर्लक्ष्मी कीर्तिभोगसौंदर्यारोग्यदायिका ।
ऐहिकामुष्मिक ज्ञानमयी च परिकीर्तिता ।

योगाख्या विजयाख्या च तथैव विश्वविन्दवी ।
कुमारादि विधा रूपादिसारस्वपार: क्रमशु: ।
विश्वमोहिनिकाके त्रिपुरामृत संज्ञिका ।
सर्वं यवन रूपा च मोहिनी दाभिणी तथा ।
चलौंदिनी वापि षाटकूटा पंचकूटा विशुद्धा।
संपत्करी हलदाणार्ण सौमा मातृकानुरति: ।
पुरौनिर्धनीभुवनापि प्रौक्ता वाराधिपा तथा ।
त्रिकूटा चापिषट्कूटा पंचकूटा विशुद्धा।
अनाहता मता चैव मणिपूरक संस्थिता ।
स्वाधिष्ठानसमासीना वाराधारसमस्थिता ।
षट्त्रिंशत्कूट रूपा च पंचाशन्मिथुनात्मिका ।
पादुकादिकसिद्धीशातथा विजयदायिनी ।
कामरूपप्रदा वेतालरूपा च पिशाचिका ।
विचित्रा विभ्रमा हंसी भीषणी जनांचिका ।
विशाला मदना तुष्टा कालकंठीमहाभया ।
माहेन्द्री शंखिनी चैन्द्री मोला वटवासिनी ।
मेखला सकला लक्ष्मीर्मालिनी विश्वनायिका ।
सुलोचना सुशोभा च कामदा च विलासिनी ।
कामेश्वरी नंदिनी च स्वर्णलिलामनोहरा ।
प्रमोदा रागिणी सिद्धा पद्मिनी च रतिप्रिया ।
कल्याणदा कलादक्षा ततश्चसुरसुन्दरी ।
विभ्रमावारककावीरविकला कोरका कवि: ।
सिंह नादा महानादासुग्रीवा मर्कटा शठा[१] ।

---

१- बृहन्नारदीय पु० ८६।९९-११७

विडालाक्षी विडालास्या कुमारी खेचरी भवा ।
मयूरा मंगला भीमा द्विपवक्त्रा खरानना ।
मातंगी च निशाचारा वृषग्रीवा वृकानना ।
सैरिभास्या गजमुखा पशुवक्त्रा मृगानना ।
क्षोभिका भणिता भद्रा च क्रीडा सिंहवक्त्रका ।
महोदरा स्थूलशिखा विकृतास्या वरानना ।
चपला कुक्कुटास्या च पाविनी मदनालसा ।
मनोहरा दीर्घजंघा स्थूलदन्ता दशानना ।
सुमुखा पण्डिता क्रुद्धा वराहास्या खरामुखा ।
कपटा कौतुका काला किंकरा किन्नरा क्षमा ।
भयंकरा भयदा सिद्धा सर्वगेव प्रकीर्तिता ।
चर्चा च विन्ध्यादुर्गा भद्रा मधुकरी तथा ।
अम्बिका वामदेवी च महामायास्वरूपिणी ।
विदारिका विश्वमयी विश्वा विश्वविभंजिता ।
वीरा विदारिभिणी विद्या विनोदा बोधविग्रहा ।
वीतशोका विषग्रीवा विपुला विजयप्रदा ।
विभवा विविधा विप्रा तथैव परिकीर्तिता ।
मनोहरा मंगलामदोत्सिक्ता मनस्विनी ।
मानिनी मधुरा मायामोहिनी च तथा स्मृता ।
भद्रा भवानी भव्या च विशालाक्षी शुचिस्मिता ।
ककुभा कमला कल्पा कलार्था पूरणी तथा ।
नित्या चाप्यमृता चैव जीविता च दयाश्रया ।
अशोका सुमंगला पूर्णा पूर्णा भाग्यदेवता तथा ।
विवेका विभवाविश्वविलसना च प्रकीर्तिता ।

कामिनी खेचरी गर्वा पुराणा परमेश्वरी ।
गौरी शिवा ह्युमेया च निमला विजया परा
पवित्रा पद्मिनी विद्या विश्वेशी शिववल्लभा ।
अशेषरूपा ह्यानंदाम्बुजाक्षी चाप्यनिंदिता ।
वरदा वाक्यदा वाणी विविधवेदविग्रहा ।
विद्या वागीश्वरी सत्या संयता च सरस्वती ।
निर्मलानंदरूपा च ह्यमृता मानदा तथा ।
पूषा चैव तथा पुष्टिस्तुष्टिश्चापि रतिर्धृतिः ।
शशिनी चंद्रिका कान्तिर्ज्योत्स्ना श्री प्रीतिरंगदा ।
पूर्णा पूर्णामृता कामदायिनीन्दुकलात्मिका ।
तपिनी तापिनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्णा भोगदा विश्वा बोधिनी धारिणी क्षमा ।
धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विस्फुलिंगिनी ।
सुश्रीः स्वरूपा कपिला हव्यकव्यवहा तथा ।
घस्मरा विश्वकवला लोलाक्षी लोलजिह्विका ।
सर्वभद्रा सहस्राक्षी निःसङ्गका च गतिप्रिया ।
अचिन्त्या चाप्रमेया च पूर्णरूपा दुरासदा ।
सर्वसिद्धिरूपा च पावनोत्येकरूपिणी ।
तथा यामलवेधाख्या शाक्ते वेदस्वरूपिणी ।
तथा शांभववेधा च भावना सिद्धिसूचिनी ।
वह्निरूपा तथा दस्रा ह्यमा निर्गुणाश्रया ।
पाण्डुरा रविरूपा च मातृकागौर्दिशा तथा ।
धनदा केशवा चापि यमी वैवस्वताश्रया ।
अश्विनी च यमी वह्निरूपा धात्रीति कीर्तिता ।

एकवक्त्रा चतुर्वक्त्रा नागवक्त्रा कलानना ।
पंचविंशति वक्त्रा च षड्विंशद्वदना तथा ।
ऊनपंचाशदाख्या च चतुःषष्टिमुखा तथा ।
एकाशीति मुखा चैव शतानन समन्विता ।
स्थूलरूपस्वरूपा तेजोविग्रहधारिणी ।
कुण्डावृत्तिस्वरूपा च तथा वृत्तिस्वरूपिणी ।
नन्दावृत्तिस्वरूपापि नित्यावृत्ति चतुर्दशा ।
अंगावृत्तिस्वरूपा चाम्नायुधावृत्तिरूपिणी ।
गुरुपंक्तिस्वरूपा च विद्या वृत्ति स्तुतस्तथा ।
मुद्रावृत्तिरूपा च परा पश्यन्तिका तथा ।
मध्यमा वैखरी शीर्षकण्ठताल्वोष्ठदन्तगा ।
जिह्वामूलतालनासाग्रान्तःश्वासगामिनी ।
पदवाक्यस्वरूपा च वेदभाषास्वरूपिणी ।
सेकाख्या वीक्षणाख्या चोपदेशाख्या तथैव च ।
व्याकुलाक्षरसंकेता गायत्री प्रणवादिका ।
जपहोमार्चना ध्यानमंत्रतर्पणरूपिणी ।
सिद्ध सारस्वता मृत्युंजया च त्रिपुरा तथा ।
गारुडा चान्नपूर्णा चाश्वारूढा नवात्मिका ।
गौरी च देवी मुख्या शारदा च मातंगिनी
नित्यस्वपदा चेष्टावादिनी प्रकीर्तिता ।
राजलक्ष्मीर्महालक्ष्मीःसिद्धलक्ष्मीर्गवानना
इत्येवं ललितादेव्या दिव्यं नामसहस्रकम् ।
सर्वार्थ सिद्धिदं प्रोक्तं चतुर्वर्ग फलप्रद
एतन्नित्यंमुषःकाले यो जपेच्छुद्धमानसः ।
सयोगी ब्रह्मविज्ञानी शिवयोगी तथात्मवित् ।।

द्विरावृत्त्या प्रजालोकायुरारोग्यसंपदः ।
ललितानुरंजनं नारी नृपावर्जनं कर्षि ।
अश्वमत्तेन तिष्ठन्ति साधकस्यास्य निश्चितम् ।
त्रिरावृत्त्यास्य वै पुंसे नित्यं भूपवशी सिद्धा ।
चतुरावृत्तिश्चास्य समीहितमनारतम् ।
फलत्येव प्रयोगार्हं ललितादासकारी भवेत् ।
पंचावृत्त्या नरानार्यो नृपादेवाश्च जंतवः ।
भजन्त्येनं साधकं च देव्यासहित चेतसः ।
षडावृत्त्या तन्मयःस्यात्साधकांतस्य सिद्धयः ।
अचिरेणैव देवीनाम प्रसादात्संभवन्ति च ।

इत्येतत्कथितं विप्र नित्या वृत्त्यर्चना श्रितम्[1] ।
नाम्ना सहस्रं मनवो मोक्षसंपादनक्षमम् ।।

ब्रह्माण्ड पुराणान्तर्गत श्री ललितास्तवराज वर्णनम्

जयदेवि जगन्मातर्जय देवि परात्परे
जय कल्याण निलये जय कामकलात्मिके
जयकारि च वामाक्षि जय कामाक्षि सुन्दरि
जयाखिल सुराराध्ये जय कामेशि मानदे ।
जय ब्रह्ममये देवि ब्रह्मात्मकरसात्मिके
जय नारायणि परे नन्दिताशेष विष्टपे ।

---

१- बृहन्नारदीय पु० ८९।१९५-१९८

जय श्री कण्ठदयिते जय श्री ललिते शिवे ।
जय श्री विजये देवि विजयश्री समृद्धिदे ।
जातस्य जायमानस्य इष्टापूर्तस्य हेतवे ।
नमस्तस्यै त्रिजगतां पालयित्र्यै परात्परे ।
कला मुहूर्त काष्ठाहर्मासर्तु शरदात्मने ।
नमः सहस्रशीर्षायै सहस्र मुख लोचने ।
नमः सहस्र हस्ताब्ज पादपंकज शोभिते ।
अणोरणुतरे देवि महतोऽपि महीयसि
परात्परतरे मातस्तेजस्तेजीयसामपि ।
अतलं तु भवेत्पादौ वितलं जानुनी तव ।
रसातलं कटी देशः कुक्षिस्ते धरणी भवेत् ।
हृदयं तु भवर्लोकः स्वस्ते मुखमुदाहृतम् ।
दृशश्चन्द्रार्कदहना दिशस्ते बाहवोऽम्बिके ।
मरुतस्तु तवोच्छ्वासा वाचस्ते श्रुतयः शिवः
क्रीडा ते लोकरचना सखा ते चिन्मयः शिवः ।
आहारस्ते सदानन्दो वासस्ते हृदये सताम् ।
दृश्यादृश्य रूपाणि स्वरूपाणि भुवनानि ते ।
शिरोरुहा घनास्तेतु तारकाः कुसुमानि ते ।
धर्माद्या बाहवस्तेस्युरधर्माद्यायुधानि ते ।
यमाश्च नियमास्तेकरपादरुहास्तथा
स्तनौ स्वाहास्वधाकारौ लोकोज्जीवनकारकौ ।
प्राणायामस्तु ते नासारसना ते सरस्वती ।

प्रत्याहारस्त्विन्द्रियाणि ध्याने योऽस्तु सर्वदा ।
मनसो धारणाभिन्नुर्दियं ते समाधिक: ।
महीरुहास्तोरुहा: प्रभातं वसनं च ।
भूत भव्यं भविष्यञ्च नित्यं च तव विग्रह: ।
यज्ञरूपा जगद्धात्री विश्वरूपा च पावनी ।
आदौ या तु दयाभूता ससर्ज निखिला प्रजा: ।
हृदयस्थापि लोकानाम दृश्यामोहनात्मिका ।
नामरूप विभागं च या करोति स्वलीलया
तान्यधिष्ठायतिष्ठन्ती तेभ्यश्चार्थकरप्रदा
नमस्तस्यै महादेव्यै सर्वशक्त्यै नमो नम: ।
यदाज्ञया प्रवर्तन्ते वह्निसूर्येन्दुमारुता:
पृथिव्यादीनिभूतानि तस्यैदेव्यै नमो नम: ।
या ससर्जादिधातारं सर्गादावादिभूरिदम् ।
दधार स्वयमेवैका तस्यै देव्यै नमो नम: ।
यथा धृतास्तु धरणी यथाकाशममेयथा ।
यस्यामुदेति सविता तस्यै देव्यै नमो नम: ।
यत्रोदेति जगत्कृत्स्नं यत्र तिष्ठति निर्भरम् ।
यत्रान्तमेति काले तु तस्यै देव्यै नमो नम: ।
नमो नमस्ते रजसे भवान्यै नमो नम: सात्त्विकसंस्थितायै
नमो नमस्ते तमसेहरायै नमोनमो निर्गुणत:शिवायै ।
नमो नमस्ते जगदेकमात्रे नमो नमस्तेजगदेकपित्रे
नमो नमस्तेऽखिलरूपतन्त्रे नमोनमस्तेऽखिलमन्त्ररूपे ।

नमोनमो ओडीकुलप्रधाने नमोनमस्तेऽखिलशास्त्रभूते ।
नमोऽस्तु हृद्ये जगदेकतुष्ट्ये नमोनमः शांभवि सर्वशक्ते ।
अनादिमध्यान्तमपंचभौतिकं ह्यवाङ्मनोगम्यमतर्क्यवैभवम् ।
अरूपमद्वन्द्वमदृष्टिगोचरं प्रभावमग्र्यं कथमम्ब वर्ण्ये ।
प्रसीद विश्वेश्वरि विश्ववन्दिते प्रसीद विद्येश्वरि वेदरूपिणि
प्रसीद मायामयि मन्त्रविग्रहे प्रसीद सर्वेश्वरि सर्वरूपिणि ॥

मणिपुरवासिनीदेव्याः ललितायाः कृत देवानाम् स्तुतिः-

नमो नमस्ते जगदेकनाथे नमोनमः श्रीत्रिपुराभिधाने
नमो नमो मण्डमहापुरस्थे नमोऽस्तु कामेश्वरि वामकेशि
चिन्तामणे चिन्तितदानदक्षे चिन्त्ये चिदाकाररसैकमाते ।
चिदम्बरे चिद्घनात्मभूते चिदात्म नित्ये सुखदे नमस्ते ॥

मोक्षप्रदे मुग्धशशांकचूडे मुग्धस्मिते मोहनभेददक्षे ।
मुद्रेश्वरी चर्चितराजतन्त्रे मुद्राप्रिये देवि नमो नमस्ते ।
क्रूरान्धकध्वंसिनि कोमलाङ्गी कोपेषु काली त्वनु मार्दवाने ।
क्रोडानने पालिनि सैन्य चक्रे क्रोडीकृताशेषभये नमस्ते ।

षडंगदेवी परिवारकूटे षडंगयुक्तश्रुतिवाक्यमृग्ये ।
षट्चक्रसंस्थे च षडूर्मिमुक्ते षड्भाववृत्ते ललिते नमस्ते ।
कान्ते शिवे मुक्त समस्त नित्यैकान्तासनान्ते कमलायताक्षि ।
कामप्रदे कामिनि कामशंभोः काम्ये कलानामधिपे नमस्ते ॥

ततो वधसाध्य दुराशयस्यकुर्नो भवत्या रणादुन्दिस्य ।
अथ स्मद्यौ त्वनुस्वानस्त्वं कामसंजीवन मायुकुर्याः ।
इयं रतिर्भर्तृवियोगखिन्ना वैधव्यमत्यन्तमभ्यधाप ।
पुनस्त्वदुत्पादितकामसंगादुम विष्यति श्री ललिते सनाथा ।।

अथ श्रीसौभाग्य अष्टोत्तर शतनाम स्तोत्रम्

अष्टोत्तरशतंनाम्नां श्रीदेव्याः तत्प्रसादतः ।
कामः सम्प्राप्तवान् लोके सौभाग्यं सर्वमोहनम् ।
सौभाग्यविद्यावर्णनामुद्धारो यत्र संस्थितः ।
तत्समाचक्ष्व भगवन् कृपया मयि सेवके ।
निशम्यैवमागस्त्येन दत्तात्रेयो दयानिधिः ।
प्रोवाच भार्गवं राममधुराक्षरपूर्वकम् ।
शृणु भार्गव यत्पृष्टं नाम्नामष्टोत्तरं शतम् ।
श्रीविद्यावर्णरत्नानां निधानमिव संस्थितम् ।
श्रीदेव्या बहुधा सन्ति नामानि शृणु भार्गव ।
सहस्रशतसंख्यानि पुराणेष्वागमेषु च ।
तेषु सारतरं ह्येतत सौभाग्याष्टोत्तरात्मकान् ।
यदुवाच शिवः पूर्वं भवान्यै बहुधार्थितः ।
सौभाग्याष्टोत्तरशत नामस्तोत्रस्य भार्गव ।
ऋषिरुक्तः शिवश्छन्दो नुष्टुप् श्रीललिताम्बिका ।
देवता विन्यसेत् कूटत्रयेणा वक्त्रे सर्वतः ।
ध्यात्वा सम्पूज्य मनसा स्तोत्रमेतदुदीरयेत् ।

ॐ कामेश्वरी कामशक्तिः कामसौभाग्यदायिनी ।
कामरूपा कामकला कामिनी कमलासना ।
कमला कल्पनाहीना कमनीय कलावती ।
कमला भारती सेव्या कल्पिता शेषसंसृतिः ।
अनुत्तरा अनघा अनन्ता अद्भुतरूपा अनलोद्भवा ।
अतिलोक चरित्रा ऽति सुन्दर्यति शुभप्रदा
अघहन्त्र्यतिविस्तारा अर्चनतुष्टा अमितप्रभा ।
एकरूपैकवीरैकनाथैकान्तार्चन प्रिया ।
एकैकभावतुष्टैकरसैकान्तजनप्रिया ।
एधमानप्रभावैधद्भक्तपातकनाशिनी ।
एलामोदमुखैनोऽद्रि शक्रायुध समस्थितिः ।
ईहा शून्येप्सितेशादि सेव्येशानवराङ्गना ।
ईश्वराज्ञापिकेकार भाव्येप्सितफलप्रदा ।
ईशानेति हरीत्येक्षारुणाक्षीश्वरेश्वरी
ललिता ललनारूपा लयहीना लसत्तनुः ।
लयसर्वा लयक्षोणिर्लयकर्त्री लयात्मिका ।
लघिमा लघुमध्याढ्या ललमाना लघुद्रुता ।
हयारूढा हतामित्रा हरकान्ता हरिस्तुता ।
हयग्रीवेष्टदा हालाप्रिया हर्षसमुद्धता ।
हर्षणा हल्लकाभाङ्गी हस्त्यन्तैश्वर्यदायिनी ।
हलहस्तार्चितपदा हविर्दान प्रसादिनी ।
रामा रामार्चिता राज्ञी रम्या रवमयी रतिः ॥

स्त्रिया जाता ह्यन्यश्च वापि वाण्यश्च तत्समान्
ददर्श कामाय फलं प्राह तुष्टा महेश्वरी ।
सौभाग्यमतुलं लोके सर्वतो स्तु रमात्मज ।
त्वया दृष्टा जनाः सर्वे धैर्यमप्युत्तृणन्तु वै ।
लोकेषु सुभगा ये स्युः सर्वसौभाग्य सम्पदः ।
दृष्टान्त भूतस्त्वं भूया मद्भक्तो गुणस्तथा ।
स्वप्ने मया समादिष्टा या विद्या सापि मन्मथ ।
त्वन्नाम्नैव स्तु विख्याता सर्वविद्योत्तमोत्तमा ।
यतस्त्वमाद्यः सौभाग्यस्या मूल उपासकः ।
यदुक्तं रम्भा प्रोक्तं नाम्नाष्टोत्तरं शतम् ।
यच्च त्वया संस्तुता हं स्तोत्रैर्विविधरूपकैः ।
विद्यावर्णानुस्यूतैर्भक्त्युद्गार समन्वितैः ।
तदेतत् स्तोत्रयुगलं विद्या सो पि च मन्मथ ।
सा सौभाग्यजननात् सौभाग्यप्रद स्तु वै ।
सौभाग्यविद्या सा ख्याता सौभाग्याष्टोत्तरं तत् ।
सौभाग्य रत्नरत्ना स्यं स्तोत्रं स्याद् भुवि [१] विश्रुतम् ।
एतत् स्तोत्रप्रपठनात् प्रीता शीघ्र भवाम्यहम् ।।

———:::———

१- श्री त्रिपुरारहस्ये सौभाग्य रत्नमाला स्तोत्रं ।

## अष्टम कण्डिका

## उपसंहार: स्वमतञ्च

लिङ्गधारिणां उचित विषय विवेचनं यद्यपि को प्येक ग्रन्थे नारोचितम् तथापि पुराणोपनिषत्सु यत्र तत्र ब्रह्मलिङ्गस्य शक्त्या युक्त्या वा आविर्भावम् संकेतम् च प्रदर्शितम् ।

यथा- अरणि मन्थेन यथाग्नि: मन्थनयोर्निन्य आविर्भवति तथैव परमात्मस्वरूपेण ब्रह्मलिङ्गमपि विचारमैथ्येण आविर्भवति । श्वेताश्वतरोपनिषदि ।

अपि च-

यदिदं ब्रह्म ब्रह्माण्डगर्भे निवसति तदेव प्रत्यक्षो लिङ्ग रूपे धारयति । भविष्यत्काले स एव आविर्भविष्यति एवं सर्वतो मुखेन सर्वं देवतारिषु लिङ्गभावे तिष्ठति ।

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ।

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभव: सर्वभूतानां ततो भवति भारत ।।

जाबालउपनिषदि यथा-

अरणीसम्भवस्यावधृत: काष्ठाग्निरयमूर्ध्वग: ।
तथैव निम्नग: सोम: शिवशक्तिसदास्पद: ।।

मैत्राण्युपनिषदि यथा-

यथेह खलु वाव अस्यां शरीरे यत् यत्नेन भाव पुरुषं दैवतः संकल्प व्यवसायाभिमानलिङ्गं प्रजापति विश्वाख्यस्तेन चेतनेदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता वास्येति।

पुराणेष्वपि अनया एव सूत्रात्मा महदिति नामतो लिङ्गमित्युक्तम्-

सूक्ष्मात्प्रसवधर्मित्वात्: प्रकृतः स्मृतः।
येभ्यो लिङ्गानां संज्ञो क्षेत्रज्ञो ब्रह्मसंज्ञितः। - वायु पु०

एवाय संहृत्य सकलं विश्वं क्रीडति संशये।
लिङ्गानि सर्वजीवानाम् अशरीरैर्निवेश्य च। -देवीभा०

सर्वप्रतिष्ठासंस्था लोकार्थं लिङ्गं रूपिणम्
प्रधानं लिङ्गमाख्यातं लिङ्गी च परमेश्वरः।। -लिङ्ग पु०

लिङ्गरूपी स भगवान् निमग्नः ब्रह्माण्डावृत।
एकाकिना पराशक्तिः ब्रह्मविद्यात्मदर्शना।। -स्कन्द पु०

जगद्योनिर्महाभूतंपरब्रह्म सनातनम्।
विग्रहं सर्वभूतानामव्यक्तं भवन्ति।। - ब्रह्माण्ड पु०

तन्त्रग्रन्थेष्वपि यथा-

परात्परतमेऽपि प्रपंचो यं तथास्थितः।
वटबीजे यथा वृक्षः सूक्ष्मरूपेण तिष्ठति।। -कुलार्णव तंत्र

पातंजलियोगसूत्रे प्युक्तम्-

यदा प्रकृत्या सह तेन संयोगम जायते तदा महदुत्पत्तिर्भवति । उपादानेण सोपलब्धि: स्तदेव एषा लिङ्गमात्रेति निगदिता ।

देव्यथर्व शीर्षे पि लिखितम्-

अहं सोमं त्वष्टारं पूषणं भगं दधामि ।अहविष्णुमुरुक्रमम् ब्रह्माणमुत प्रजापतिं दधामि ।इत्यादि ।

परमेश्वरस्य स्वाभाविकी आद्याशक्ति: विलक्षणा सा एका एव अनेकरूपा भाति । यथैका सूर्यप्रभा विविध वर्णेषु भासयति तथैव तच्छक्ति: इच्छा ज्ञान क्रिया मायाद्यनेक रूपेषु विभाज्यते । यथाग्नेः विस्फुलिङ्गा: सम्भवन्ति तथैव तच्छक्तितः ईश्वर: सदाशिव: विद्या विद्येश्वराद्य: पुरुषा:संभवन्ति[1] ।

विष्णु पुराणे प्युक्तम्-

जगत्कारणाशक्ति: असंख्येया अपरिमेया अनन्ता पर प्रकृतिश्चेति ।शतसहस्त्र ब्रह्माण्डानि तस्यामेव निहितानि सन्ति । यथा काष्ठेष्वाग्नि: तिलेषु तैलं तथैव स्वप्रकाशचेतनात्मा व्यापक: पुरुष: प्रधाने सन्निहित: ।संश्लिष्टौ प्रधानपुरुषौ सर्वभूतात्मतया विष्णुशक्त्या आवृतौ[2] ।

---

१- शिवपु० वा०सं० अ० ७

२- विष्णु पु० २।७।२६-२४

तद् संयस्य पृथक् पादस्था पि कारणानि एतान्येव सांकाहे धर्मिकारणानि च ।

यथा जलसंगति वायुः कणिका शतं विसर्ति तथैव विष्णु शक्तिः प्रधान पुरुषात्मकमिदं जगत्सिनर्ति । यथा आदि बीजादेव मूलकन्द शाखादि संयुतः पादपः अन्यबीजानि संभवन्ति ततस्तेभ्यः तत्कारणाद्व्यकारणानुगता अपरे द्रुमादयः प्रभवन्ति । तथैव अव्याकृतजगन्तया महदादयस्य पंचभूतानि सर्वेवासुरमानवाः संभवन्ति ।

कूर्म पुराणे पि लिखितम्-

मम योनिर्महद्ब्रह्म तस्मिन्गर्भं दधाम्यहं " इति ।

पूर्वोक्त उपनिषद्पुराण वचनानुकूल्य मम मते-

अलिङ्गिनो ब्रह्म एव लोकानां प्रकाशनाय लिङ्गमित्युक्तम् ।
तद्ब्रह्मधारिणी शक्तिरेव लिङ्गधारिणी शक्ति इत्युक्तम् ।

एतस्य शक्तिः प्रकृतेः उभयोरेव निर्माणप्रकारं लोके वासि-नीति निरो भवति न जगत आविर्भावे निरोभावस्य विशेषं नैमित्तिमिति । अतः नैमित्तं लिङ्गधारिणीति पुराण वचनस्य कथनं अभिप्रायमिति ।

ब्रह्मतत्वयज्ञस्य पर्वतस्य वा नैमित्तिकस्य विशिष्टं नैमित्तिमिति भावे पि ब्रह्माण्डस्य निर्माणस्य एव वैशिष्ट्यं वर्तते ।
उक्तंचापि-

यस्योन्मेष निमेषाभ्यां जात: प्रलयोदयौ ।
तं शक्ति चक्र विभवप्रभवं शंकरं स्तुम: ।

वायुपुराणेऽपि इत्याशयं वर्णितम् ।
श्रीमद्देवी भागवत पुराणे तु स्पष्ट निगदितम् -

'निमेषमात्रे कालेन भोदेव्यर: प्रोच्यते मुने

अतएव स्पष्टं यत् निमेषमात्रा काले नैव पुन: पुन: सृष्टि इत्यादि कार्याणि भवन्ति । एवम निमेषद्योतकं क्षेत्रं विशेषं नैमिषमिति ।

अत्र एव शक्तिचक्रस्य मोक्षचक्रस्य प्रमाणोपयचक्रस्य धर्मचक्रस्य च नेमि: शीर्यते अतएव अत्र: नैमिषं प्रोक्तम् । उक्तंचापि-

गच्छतो धर्मचक्रस्य नेमिशीर्णा यत्र पश्यत: ।
तेनेदं नैमिषं प्रोक्तं पवित्रतम पावनम् ।

एतत् नैमिषारण्याधिष्ठात्री भगवती लिंगधारिण्येव ललिताशे स्वो भावे च ललितेति प्रोक्ता अत्रैव नैमिषे लिंगधारिणी श्री ललितात्रिपुरसुन्दरी नाम्ना प्रतिष्ठिता च ।

एतादृश रहस्यमेव लोकान् सुगत्यमन्वितानि च तथा काले सकृत्य पुनराविष्कारोऽपि च । अत: समर्थं भगवत्या: चरणयुगले एतत् अनुसंधान पुष्पं समर्पयामि च ।

## सहायक ग्रन्थानाम् सूची


१- ऋग्वेद

२- अथर्ववेद

३- यजुर्वेद

४- कठोपनिषद्

५- श्वेताश्वतरउपनिषद्

६- निरालम्बोपनिषद्

७- तैत्तरीय उपनिषद्

८- केनोपनिषद्

९- बृहदारण्यक उपनिषद्

१०- छान्दोग्य उपनिषद्

११- मुण्डकोपनिषत्

१२- ऐतरेय उपनिषद्

१३- जाबाल उपनिषद्

१४- ब्रह्मवैवर्त पुराण

१५- वैयाकरण लघुमंजूषा

१६- सिद्धान्त कौमुदी

१७- वैजयन्तीकोष

१८- अहिर्बुध्न्य संहिता

१९- भुवनेश्वरी उपनिषद्

२०- श्रीमद्देवी भागवत पुराण

२१- शिवपुराण

२२- ब्रह्माण्ड पुराण

२३- श्रीमद्भागवत पुराण

२४- रघुवंश महाकाव्य

२५- तंत्रसंग्रह

२६- सूत संहिता

२७- विष्णु पुराण

२८- रुद्रयामल

२९- पुंपंचसार

३०- ब्रह्मसूत्र

३१- कूर्मपुराण

३२- नारदपुराण

३३- चरक संहिता

३४- विद्वज्जनचन्द्रिका

३५- तंत्रसार

३६- पंचदशी

३७- शक्तितत्वदर्शन

३८- दुर्गासप्तशती

३९- सौन्दर्यलहरी

४०- शक्ति उपासना के महत्व पूर्ण सूत्र

४१- ललिता सहस्र नाम "सौभाग्य भास्कर टीका

४२- ललिता सहस्रनाम भास्कर राय टीका

४३- बृहदारण्यकोपनिषद्

४४- वायुपुराण

४५- विवेकचूड़ामणि

४६- महानिर्वाण तंत्र

४७- शारदा तिलक

४८- कुलार्णवतंत्र

४९- महाभारत पुराण

५०- महाभागवत पुराण

५१- वाक्यपदीय (भर्तृहरि)

५२- योगसूत्र

५३– स्कन्द पुराण

५४– योगवाशिष्ठसार (दिल्ली प्रकाशन)

५५– महाभाष्य

५६– न्यायकन्दली

५७– न्याय सिद्धान्तमुक्तावली

५८– काणाद सि०च०

५९– तर्कामृतम्

६०– न्यायमंजरी

६१– सम्बोधि डा० गोपीनाथ कविराज

६२– शतपथ ब्राह्मण

६३– ईशावास्य उपनिषद्

६४– अथर्वसंहिता

६५– स्पन्दकारिका

६६– मालिनी विजय

६७– तर्कभाषा

६८–विज्ञान भैरव

६९– पद्मपुराण

७०– तर्कभाषा

७१– लिङ्गपुराण

७२– श्रीमद्भगवद्गीता

७३– मार्कण्डेय पुराण

७४– पातंजलि योगसूत्र

७५– मैत्रायणी उपनिषद्

७६– त्रिपुरा रहस्य

७७– योगिनी हृदय

७८– कालिका पुराण

७९–नारद पुराण

८०– मनुस्मृति

८१– अष्टकप्रकरण तत्वप्रकाश

८२– रत्नत्रय परीक्षा

८३– ज्ञानार्णव तंत्र

८४– ब्रह्मपुराण

८५– राधा तापिनी

८६– नारद पंचरात्र

८७– अध्यात्मरामायण

८८– मोहनजोदड़ो एण्ड इन्डस सिविलाइजेशन (अंग्रेजी)

८९– लिटरेचर आफ इंडिया –अंग्रेजी

९०– हिस्ट्री आफ कौरवी लैंग्वेज एण्ड लिटरेचर –अंग्रेजी

९१– कल्याण (शक्तिअंक) गीताप्रेस

९२– मत्स्य पुराण

९३– शक्ति उपासना अंक (कल्याण) गीताप्रेस

९४– ब्रह्मधर्मपुराण

९५– प्रश्नोपनिषद्

९६– अग्निपुराण

९७– देवी पुराण

९८– योगिनीतंत्र

९९– नैमिषारण्य माहात्म्य प्राचीन प्रति

१००– धामविधान

१०१– ताण्ड्यायन ब्राह्मण

१०२– वामनपुराण

१०३– वाल्मीकि रामायण

१०४– गर्गसंहिता

१०५- स्तोत्र वल्लरी

१०६- शब्द कल्पद्रुम

१०७- सांख्यकारिका

१०८- धर्मशास्त्र का इतिहास

१०९- यांगिरसोपनिषद्

११०- यामुलाख्य तंत्र

१११- हलायुध कोष

११२- मानवोपनिषद्

११३- घेरण्ड संहिता

११४- शिवसंहिता

११५- वरुणोपनिषद्

११६- श्रीविद्यावरिवस्या

११७- बृहन्नारदीय पुराण

११८- भविष्योत्तर पुराण

---::---